G. 3.22.10 B. 3.16.10 L. 3.21. 9 अत्यन्तसुखसंचारा मध्याह्ने स्पर्शतः सुखाः ।
दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ १०
मृदुसूर्याः सनीहाराः पटुशीताः समारुताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति साम्प्रतम् ॥ ११
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः ।
शीता वृद्धतरायामास्त्रियामा यान्ति साम्प्रतम् ॥ १२
रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३
ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते न तु शोभते ॥ १४
प्रकृत्या शीतलस्पर्शो हिमविद्धश्च साम्प्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५
बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १६
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किंचिदालम्बाः शालयः कनकप्रभाः ॥ १७

---

कौशाढ्यौ (sic) (for हिमकोशाढ्यो). B D7 नद्यः; D1 दूरः; D2.3 दूरे (for दूर-). B2 कोपश्; D7 पुर्यश् (for -सूर्यश्). Ñ B D1–3.7 संप्रति (for साम्प्रतम्). V1 प्रकृत्या हि सरत्काष्टा मंदः सूर्यश्च संप्रति. —c) Ñ1 यथार्हनामा. Ñ2 V1 B यथार्थं (V1 °र्हं)कृतनामासौ; D5.7 यथावत्कृतनामासौ. —d) Ñ1 D1–3 हिमेन; Dg1 हि महान् (for first हिमवान्). D5.7 G2 हिमवद् (for second हिमवान्). Dm1 reads गिरिः in marg.

10 a) Cr.k.t मध्याह्ने (for अत्यन्त-). Ś1 Ñ1 D1–3 पूर्वाह्णे दुःखसंचारा; Ñ2 B1 D5.7 अत्यंतदुःखसंचारा; V1 आद्यंते दुःख°; B4 आद्यंतदुःख°; G(ed.) प्रत्यूषे दुःख°. —b) D8 पश्यतः (for स्पर्शतः). Ś1 Ñ2 V1 B D2.5.7 मध्याह्नसमये सुखाः(B3 [marg. also] शुभाः); Ñ1 मध्याह्ने विषयोन्मुखाः; D1.3 मध्याह्नविषये शुभाः(D3 सुखाः). —c) Ś1 Ñ2 B3.4 D1.2 सुभगाः(B3 [*sup. lin.* also] °खदा) पुण्यास्; Ñ1 V1 सुभगा रम्यास्(V1 नित्यास्) (for सुभगादित्याश्). —d) G1 -सौभगाः (for -दुर्भगाः). Ś1 त्वरितं विनिपातिताः; Ñ B1–3.4 (marg. also दिव्यास्त्वरितयायिनः) D1–3.7 त्वरितव्यतिपातिनः; V1 D5 त्वरिता(D5 °तं) व्यतिपातिनः; G and L(ed.) त्वरिता(L[ed.] °तं) व्यतियांति नः.

11 a) Ś1 Ñ1 D1.2 मृदुवीर्याः (for मृदुसूर्याः). Ś1 च नीहाराः; Ñ Dt1 D4 T3 सुनीहाराः; V1 मनोहाराः (for सनीहाराः). —b) M2 पटुसूर्याः (for °शीताः). Dt1 D6 M3 समाहिताः; G1 समावृताः (for °रुताः). Ś1 Ñ1 D1–3 पटुशीतोष्णमारुताः; Ñ2 V1 B1.2.4 D5.7 कटुशीतानिलान्वि(V1 °ह)ताः; B3 कटुशीता(*sup. lin.* also °ला)निला विभो. —c) Ś1 Ñ1 D1–3 तमोध्वस्ता; B3.4 °ग्रस्ताः (for हिमध्वस्ता). —d) Ñ2 V1 B1.3.4 D7 प्रत्यूषा(B1 °षे); B2 कलुषा; D5 प्रसूया (for दिवसा). V1 संप्रति (for साम्प्रतम्).

12 G2 om. (hapl.) 12. —a) Ñ1 -समयाः (for -शयनाः). D2 निवृत्तकामाशयनाः. —b) Ñ2 B2–4 (marg. also पथातीता) D5.7 पुष्यहीना; V1 पुष्यव्यूहा; B1 पुष्पातीता; M3 पुष्यनीहा (for पुष्यनीता). Dg1 D4 T3 हि मारुताः (for हिमारुणाः). Ś1 D1–3 पुष्यनेत्राश्च रात्रयः; Ñ1 प्रवृद्धाश्शिररात्रयः. —c) Ck शीलृ- (for शीता). Ś1 शीता ह्यतरायामास्; Ñ2 B Dt1 Dm1 D4–8 G1 शीतवृद्धतरायामास्; Cm.g as in text. —d) Ś1 Ñ1 B3.4 D1–3 भांति; Dg1 reads in marg. (for यान्ति).

13 a) Ñ1 रविः सौभ्रांतसौभाग्यस् (sic); V1 D3.5 G1 रविः सं°; D4 G3 M1 रविसंक्रांतिसौभाग्यस्. —b) D7 तरुणारुण- (for तुषारारुण-). —c) Ś1 D2 निः(D2 नि)श्वासवान्; Ñ2 V1 B2.3 Dg1 Dt1 Dm1 D4–7 M Cr.m.k निश्वासांध; B1 सनिश्वास; D1 निश्वासार्द्रं; D3 G2 निःश्वासांत; G(ed.) सनिःश्वास (for निःश्वासान्ध).

14 ab) Cg ज्योत्स्नी (for ज्योत्स्ना). G2 शोभते (for राजते). Ś1 Ñ V1 B D1–3.5.7 पौ(Ś1 D2 पू)र्णमास्यामपि (Ś1 D3 °मियं) ज्योत्स्ना तुषारकलुषीकृता. —c) Ś1 Ñ1 V1 B3.4 D1–3.5.7 तपसा क्षामा; Ñ2 तरसा क्षामा; B1 तपसा क्षीणा; M2 तपसा श्यामा (for चातपश्यामा). B2 शीतवातातपः क्षामा. —d) Ś1 Ñ1 V1 B2.3 D1–3.5.7 दृश्यते; B4 लक्षते (for लक्ष्यते). Ñ2 Dt1 Dm1 D6.8 च (for तु). D1.3 ननु (for न तु). B2 शोभने (for °ते).

15 a) Ś1 Ñ2 V1 B D1–3.5.7 शीतसंस्पर्शो; Ñ1 शीतसंपन्नो (for शीतलस्पर्शो). ❀ Cm : प्रकृत्या स्वभावेनाशीतलस्पर्शः । अशीतेत्युपलक्षणं । अनुष्णेपि द्रष्टव्यं । तथा चानुष्णाशीतलस्पर्श इत्यर्थः. ❀ —b) Ś1 Ñ1 B1 D1–4.8 G2.3 हिमवृद्धश्; B2 हिमवर्गश्; T3 हिमध्वस्तश् (for हिमविद्धश्). Ñ2 V1 B D5.7 संप्रति (for साम्प्रतम्). —c) Ś1 प्रयाति (for प्रवाति). Ś1 D6 पश्चिमे (for °मो). —d) Ñ1 काल्यं; V1 B D1.5.7 कल्यं; D2 कल्ये (for काले).

16 a) Ñ2 B D5.7 हिमच्छन्नानि; V1 हिमक्षुण्णानि (for बाष्पच्छन्नानि). —b) G3 यश्च (for यव-). —c) D2.3 G2 ह्युदिते (for ऽभ्युदिते). —d) Ś1 D2 नदंतः; Ñ1 भवद्भिः; Ñ2 D5.7 चरद्भिः; T2 नतद्भिः (for नदद्भिः). Ś1 D2 क्रौंचसारसाः (for °सारसैः).

17 a) M2 खर्जूरवृक्षाकृतिभिः. —b) V1 B2.3 शिखरैः (for शिरोभिः). Ś1 Ñ B3.4 D5.7 पुष्पगुंठितैः; V1 D3 पुष्टतंडुलैः; B1.2 पुष्पमंडितैः; D1.2 पुष्पगुंफि(D2 °डि)तैः (for पूर्णतण्डुलैः). —c) Ś1 आलंभाः; Ñ2 D5.7 आनम्रैः; V1 B G1.2 आलंबैः; D4 T1.2 G3 M1.2 आनम्राः (for आलम्बाः). —After 17, Ñ2 V1 B D5.7 ins.:

मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १८
अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
संरक्तः किंचिदापाण्डुरातपः शोभते क्षितौ ॥ १९
अवश्यायनिपातेन किंचित्प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ॥ २०
अवश्यायतमोनद्धा नीहारतमसावृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २१
बाष्पसंछन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकैस्तीरैः सरितो भान्ति साम्प्रतम् ॥ २२
तुपारपतनाच्चैव मृदुत्वाद्भास्करस्य च ।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ॥ २३
जराजर्जरितैः पर्णैः शीर्णकेसरकर्णिकैः ।
नालशेषा हिमध्वस्ता न भान्ति कमलाकराः ॥ २४
अस्मिंस्तु पुरुषव्याघ्र काले दुःखसमन्वितः ।
तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे ॥ २५
त्यक्त्वा राज्यं च मानं च भोगांश्च विविधान्बहून् ।
तपस्वी नियताहारः शेते शीते महीतले ॥ २६  G. 3. 22. 27 B. 3. 16. 28 L. 3. 21. 25

279* शालिशूकपरित्रासात्किंचिदामीलितेक्षणः ।
वृषः पिबति केदारे निःश्वासाकुलितं जलम् ।

[ (l. 1) B1 -परित्रासः ( for -परित्रासात् ). D5 om. from क्षणः up to 18d. Ñ2 आकुंचितेक्षणः ( for आमीलिते° ).—(l. 2) V1 पयः (for जलम्). Ñ2 B1.4 निश्वासाङ्कलितं पयः ( for the post. half ).]

18 D5 om. 18 (cf. v.l. 17).—a) Ś1 Ñ1 D1 G3 मयूरैर् ( for °खैर् ). Ś1 Ñ1 इव सर्पद्भिर्; Ñ2 D1-3 अवसर्पद्भिर्; V1 अपसर्पति; B2.3 अपसर्पद्भिर् ( for उप° ).—b) Ñ1 -संवृतः; B2 -संस्कृतैः (for -संवृतैः ). —c) Ñ1 चिरम्; G( ed. ) दूराद् ( for दूरम् ). Ś1 Ñ2 B2-4 Dt1 D1.2.6.7 अप्युदितः ( for अभ्यु° ).—d) G( ed. ) चंद्रमा इव दृश्यते.

19 a) Ś1 Ñ1 D1-3 आ( D1-3 अ )ग्राह्यरूपः; Ñ2 T1 G M Ct आग्राह्य°; V1 अग्राज्यवीर्यः; T2 °वीर्यं ( for अग्राह्यवीर्यः ). V1 पूर्वांगे (for °ह्णे ).—b) B4 marg.; D7 om. (for मध्याह्ने ). Ñ2 D5.7 स्पर्शवीर्यवान्; D4 G2 °तः सुखं (for स्पर्शतः सुखः ). —c) V1 Dt1 Dm1 D6.8 T3 M3 संसक्तः; D2 marg.; Cv सरक्तः ( for संरक्तः ). —d) Ś1 न सूर्यः ( for आतपः ). Ñ2 V1 B D5.7 अपराह्णे तथातपः( B3 °परः ).

20 c) Ñ1 यदा न; M2 अधिकं ( for वनानां ). Ś1 Ñ1 V1 B D1-3.5.7 दृश्यते (for शोभते ).—d) B2 प्रविष्ट- ( for निविष्ट- ). Ś1 -तरुणा यथा; Ñ1 -तरुणा॰दा (illeg.) ( for -तरुणातपा ). —After 20, Dg1 Dt1 Dm1 D4.6.8 S ins. :

280* स्पृशंस्तु विमलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ।
एते हि समुपासीना विहगा जलचारिणः ।
नावगाहन्ति सलिलमप्रगल्भा इवाहवम् ।

[ (l. 1) Dm1 D8 G3 संस्पृशन्; M1 स्पर्शंस्तु; M3 स्पृशंति ( for स्पृशंस्तु ). Dt1 D6 स्पृशन्सुविपुलं. T3 पीतम् ( for शीतम् ). G1 सिंधुरः; M3 महिपाः ( for द्विरदः ). —(l. 2) Dg1 Dm1 D8 G M2.3 अत्यर्थं( M3 °र्थ- ); Cvp अत्यस्त- ( for अत्यन्त- ). G3 वन्यं; M3 नागः ( for वन्यः ). —(l. 3) M3 Cm विहंगा ( for विहगा ). —(l. 4) Dm1 D8 G M विगाहंति ( for [ अ ]वगाहन्ति ).]

21 a) Ś1 Ñ1 D1-3 -तमोध्वस्ता; Ñ2 V1 B D5.7 -परिक्लिन्ना ( for -तमोनद्धा ). —b) V1 नीहारेण समावृताः. —c) Ś1 V1 B4 D2 दृश्यंते ( for लक्ष्यन्ते ). —d) Ś1 D2 प्रफुल्लाः; Ñ2 V1 B D5.7 समंताद्; G2 विपुला ( for विपुष्पा ).

22 a) B2.3 बाष्पसंपन्न- ( for °संछन्न- ). —b) Ś1 तेनाविज्ञेयसारसाः; V1 B2-4 रुताभिज्ञेयसारसाः. —c) D1.6 हिमाद्रि- (for हिमार्द्र- ). Ś1 Ñ1 D1-3 -मारुतैस्; Ñ2 Dt1 D6 G1 -वालुकास् ( for -वालुकैस् ). —d) Dg1 यांति ( for भान्ति ).

23 a) Ś1 Ñ1 तुपारपवनत्वाच्च; B3 तुपारपातनाच्चैव; D1.2 तुपारपरुपत्वाच्च. —c) Ñ2 V1 B D5 G2 अपात्रस्थम्; Cm अगाधस्थम्; Cmp as in text ( for अगाग्रस्थम् ). Ś1 D3 शैत्यादसह्यमपि च; Ñ1 D2 शैत्यादगोत्रमपि च; D1 शैत्या च गोत्रत्वमपि (sic). —d) B2 प्रासेन च सरिज्जलं.

24 a) Dt1 Dm1 D6.8 T G3 जराझ( D6 [ marg. ] T1 G3 Cv.g.t °ज )र्झरितैः. Ñ2 V1 B Dt1 D5-7 पत्रैः; Dm1 D4.8 T1.2 G2.3 M1 Cvp.g पद्मैः; Cmp as in text ( for पर्णैः ). ❀ Cr : जरया कालकृतया जर्झरितानि पर्णानि येषां ते ।; Ck : जरया कालक्षितया जर्जरितानि पर्णानि येषां ते तथा. ❀ Ś1 Ñ1 D1.2 तुपाराभिहतैः पद्मैः( Ñ1 °त्रैः ); D3 तुपारनिहतैः पद्मैः; M3 जरसा जर्जितैः पर्णैः. —b) Dm1 D8 G3 -पांडुभिः; G1.2 -कर्णिभिः; M1 -पंक्तिभिः ( for -कर्णिकैः ). Ś1 Ñ1 D1-3 शीर्णकर्णिककेसरैः. —c) D4 हिमध्वस्तैर्; M2 हिमैर्ध्वस्ता. Ś1 Ñ V1 B D1-3.5.7 नाल( B3 [ marg. also as in Ś1 ] °व ) शिष्टा हिमैर्दग्धाः; Dg1 Dm1 D8 T G M1.3 नालशेषैः हिमध्वस्तैर्. —d) Ś1 [ आ ]भांति ( for भान्ति ).

25 a) Ñ V1 B D1-3.5.7 M2 स ( for तु ). Ś1 असौ च ( for अस्मिंस्तु ). V1 B4 Dm1 D4-8 T2 G2.3 M पुरुषव्याघ्रः. —b) D5 कालं ( for काले ). Ś1 दुःखस्तपस्विनि; Ñ1 D1.2 दुःखे तपस्विनां; D3 दुःखेन तस्थिवान्; M1 सुखसमन्वितः ( for दुःखसमन्वितः ). —c) Ś1 D2 दुःखार्तस् ( for धर्मात्मा ). —d) Dg1 भक्तो ( for भक्त्या ). V1 पुरुषः ( for भरतः ). Ś1 पुरा ( for पुरे ). Ñ1 (also) सुमहायशाः ( for भरतः पुरे ).

26 Ñ1 om. 26–31b. —a) Ś1 D1-3 M2 मानं च राज्यं (by transp.); Ñ2 D5.7 भोगांश्च राज्यं; V1 B राज्यं च

G. 3. 22. 28
B. 3. 16. 29
L. 3. 21. 26

सोऽपि वेलामिमां नूनमभिषेकार्थमुद्यतः ।
वृतः प्रकृतिभिर्नित्यं प्रयाति सरयूं नदीम् ॥ २७
अत्यन्तसुखसंवृद्धः सुकुमारो हिमार्दितः ।
कथं त्वपररात्रेषु सरयूमवगाहते ॥ २८
पद्मपत्रेक्षणः श्यामः श्रीमान्निरुदरो महान् ।
धर्मज्ञः सत्यवादी च ह्रीनिषेधो जितेन्द्रियः ॥ २९
प्रियाभिभाषी मधुरो दीर्घबाहुररिंदमः ।
संत्यज्य विविधान्सौख्यानार्यं सर्वात्मनाश्रितः ॥ ३०
जितः स्वर्गस्तव भ्रात्रा भरतेन महात्मना ।
वनस्थमपि तापस्ये यस्त्वामनुविधीयते ॥ ३१
न पित्र्यमनुवर्तन्ते मातृकं द्विपदा इति ।
ख्यातो लोकप्रवादोऽयं भरतेनान्यथा कृतः ॥ ३२
भर्ता दशरथो यस्याः साधुश्च भरतः सुतः ।
कथं नु साम्बा कैकेयी तादृशी क्रूरदर्शिनी ॥ ३३
इत्येवं लक्ष्मणे वाक्यं स्नेहाद्ब्रुवति धार्मिके ।
परिवादं जनन्यास्तमसहन्राघवोऽब्रवीत् ॥ ३४
न तेऽम्बा मध्यमा तात गर्हितव्या कथंचन ।
तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥ ३५

---

भोगां( V1 °ग )श्च ( for राज्यं च मानं ). —b ) Ś1 D1–3 रुचिरान् ( for विविधान् ). T1.2 बलात्; G1 अपि ( for बहून् ). Ñ2 V1 B D5.7 विषयांश्चैव सर्वशः( B1–3 °तः ). —B3 repeats 26cd after 38ab. —d ) Ś1 शीतः शेते; Ñ2 B1.2.4 T3 शीते शेते ( by transp. ); D2 स तु शेते ( for शेते शीते ). D7 शीते न ** हीतले.

27 Ñ1 om. 27 ( cf. v.l. 26 ). —a ) Ś1 D1–3 स हि ( for सोऽपि ). Ñ2 V1 B D5.7 नूनमिमां वेलाम् ( by transp. ). —b ) D1.3 उत्थितः ( for उद्यतः ). —c ) B1.2 कृतः ( for वृतः ). Ś1 Ñ2 V1 B D1–3.5.7 भक्त्या ( for नित्यं ). —d ) Dm1 G3 स याति ( for प्रयाति ). Dg1 D5 सरयूनदीं.

28 Ñ1 om. 28 ( cf. v.l. 26 ). —a ) B1 अनंत- ( for अत्यन्त- ). Ś1 -दुःख- ( for -सुख- ). —b ) Dg1 सुखोचितः ( for हिमार्दितः ). —c ) Ś1 Ñ2 B1.4 Dg1 Dm1 D1–3.5.7.8 G3 M1.2 Cv च; V1 B2.3 वा; Cg नु ( for तु ). Cv पर- ( for [ अ ]पर- ).

29 Ñ1 om. 29 ( cf. v.l. 26 ). Ś1 V1 B2 D1–3 om. 29–30. —ab ) B1 श्रीमान् ; K( ed. ) वीरः ( for श्यामः ). Dm1 D4.8 T2 G1.3 M2 transp. श्यामः and श्रीमान्. T3 निरुपमो ( for °दरो ). B1 शांतिशुद्धोदरो महान् ( for b ). —d ) B1.3.4 ह्रीनिषेवी; D4 ह्रीसमेतो ( for ह्रीनिषेधो ).

30 Ś1 Ñ1 V1 B2 D1–3 om. 30 ( for Ñ1, cf. v.l. 26 and for the rest, cf. v.l. 29 ). —ab ) Ñ2 D5.7 मित- ( for प्रिय- ) and जितेंद्रियः ( for अरिंदमः ). —cd ) Dg1 Dm1 D4.8 T1.2 G3 भोगान् ; Ct as in text ( for सौख्यान् ). Ñ2 B4 D5.7 विविधं सौख्यम् ; B3 ( marg. also as in Ñ2 ) विविधं दुःखम् ( for विविधान्सौख्यान् ). T3 न्यायं ( for आर्यं ). Ñ2 D5.7 [ आ ]स्थितः; G3 श्रुतं; Cg.t श्रितः ( for [ आ ]श्रितः ). B1 सत्यं विविधसौख्यं च आर्यं सर्वं बलाश्रितः.

31 Ñ1 om. 31ab ( cf. v.l. 26 ). —a ) Ś1 Ñ2 V1 B D1–3.5.7 M2 मम ( for तव ). —c ) D3 प्रसन्नम् ; M2 वनस्थेन ( for वनस्थम् ). Ñ1 त्वां पश्य ( sic ); D1 T3 तं पश्ये; D3 तापस्यात् ; G3 तापसो ( for तापस्ये ). —d ) Ś1 D2 त्वा यांतमनुयाति यः; Ñ1 यत्नेनानुपालयन् ( subm. ); D1.3 त्वा( D3 त्वां ) यत्नेनानुयाति यः. —For 31cd, Ñ2 V1 B D5.7 subst. :

281* वनस्थं नगरस्थोऽपि भक्त्या त्वामनुयाति यः ।

[ G( ed. )हि ( for ऽपि ). B2 माम् ( for त्वाम् ). G( ed. ) सः ( for यः ). Ñ2 अनुयाचितः ( for °ति यः ). ]

32 a ) Ś1 D2 पित्र्यादेशात्तु गच्छंति; Ñ1 पित्र्यं सर्वेनुगच्छंति; Ñ2 V1 B D5.7 नित्यं समनुवर्तंते; D1 पित्र्यपंथानं गच्छंति; D3 पित्र्यमत्वानुगच्छंति ( sic ). —b ) Dg1 द्विपदा अपि; D8 द्विपदां वर ( for °दा इति ). Ś1 Ñ1 D1–3 मातुलेयं नरा इति; Ñ2 V1 B D5.7 नरा मातुलबांधवान्( B4 [ marg. also °चेष्टितं ] °वाः ). —c ) Ñ2 V1 B D5.7 इति ( for ख्यातो ). V1 B3 लोके ( for लोक- ). Ś1 D1–3 लोक( D1.3 °के )प्रवादः( Ś1 °दाः ) साधुत्वाद् ; Ñ1 लोकापवादः साधुत्वाद्. —d ) Ś1 Ñ1 D1–3 बहिष्कृतः; D4 [ अ ]न्यतः कृतः; M2 [ अ ]न्यथा कृतं ( for [ अ ]न्यथा कृतः ).

33 a ) Dt1 यस्यां ( for यस्याः ). —b ) D6 सुखं ( for सुतः ). —c ) Ś1 Ñ2 V1 B4 D2.3.5 M3 तु ( for नु ). B3 सापि; D3 [ अ ]नार्या ( for साम्बा ). —d ) Ś1 तादृशं; M3 मध्यमा ( for तादृशी ). Ś1 Ñ V1 B D1–3.5.7 मनुजेश्वर( Ś1 D3 °रं ); Dg1 D4 T1.3 M2 क्रूरशालिनी. —After 33, Ś1 Ñ1 D2.3 ins. :

282* जनयामास धर्मज्ञमिक्ष्वाकुकुलभास्करम् ।

34 a ) Ñ1 [ ए ]व; Ñ2 V1 B1.2.4 D5.7 [ अ ]थो; B3 [ ए ]तो ( for [ ए ]वं ). Ś1 Dt1 D3 लक्ष्मणो ( for °णे ). Dg1 स्नेहाद् ; M2 वाक्ये ( for वाक्यं ). D5 लक्ष्मणेनोक्तं. —b ) Dg1 वाक्यं; M2 स्निग्धं ( for स्नेहाद् ). Ś1 Ñ1 V1 Dt1 Dm1 D1–3.6.8 T3 M1 वदति; D4 भवति ( for ब्रुवति ). Ś1 D2 राघवं; Ñ1 रा** ( illeg. ); D1.3 M1 राघवे; D6 धार्मिकं ( for धार्मिके ). —c ) Ś1 D2 च; M3 तु ( for तम् ). Ñ2 V1 B D5.7 परिवादनिवृत्तात्मा. —d ) Ś1 न सहन् ; Ñ2 V1 B1.3.4 D5.7 वचनं; D2 तमसौ; G1 असहद् ; M3 शमयन् ( for असहन् ). B2 राघवो वाक्यमब्रवीत्.

35 a ) V1 ते सा; B3( marg. as in text ) त्वया; B4

निश्चितापि हि मे बुद्धिर्वनवासे दृढव्रता ।
भरतस्नेहसंतप्ता बालिशीक्रियते पुनः ॥ ३६
इत्येवं विलपंस्तत्र प्राप्य गोदावरीं नदीम् ।
चक्रेऽभिषेकं काकुत्स्थः सानुजः सह सीतया ॥ ३७
तर्पयित्वाथ सलिलैस्ते पितॄन्दैवतानि च ।
स्तुवन्ति स्मोदितं सूर्यं देवताश्च समाहिताः ॥ ३८
कृताभिषेकः स रराज रामः
सीताद्वितीयः सह लक्ष्मणेन ।
कृताभिषेकस्त्वगराजपुत्र्या
रुद्रः सनन्दिर्भगवानिवेशः ॥ ३९

G. 3. 22. 39
B. 3. 16. 43
L. 3. 21. 36

इति श्रीरामायणे अरण्यकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

तेषां ( for तेऽम्बा ). V1 B3.4 D1 T2 M3 Ck माता; G1 वत्स ( for तात ). ❀ Cv : केचिदमध्यमेति पदच्छेदमिच्छन्ति ।; Ck : अमध्यमेति वा छेदः. ❀ —b ) Ñ2 V1 B D5.7 ममाग्रतः; D1 कथं न च ( for कथंचन ). —c ) Ñ2 V1 B1-3 D5.7 तस्य; B4 अस्य ( for ताम् ). —d ) D3 reads भरतस्य in marg.

36 a ) Ś1 D2.5 [ इ ]व; Ñ V1 B Dg1 Dt1 D1.6.7 [ ए ]व; D3 [ इ ]यं; Cg as in text ( for [ अ ]पि ). —b ) D4.6 T1.2 G1.2 दृढव्रत( D4 °तः ) ( for °ता ). Ś1 Ñ V1 B D1-3.5.7 वनवासाय लक्ष्मण. —c ) Ś1 D1.2 -संयुक्ता; D5 G1 -संप्राप्ता ( for -संतप्ता ). —d ) V1 B1 Dg1 बालिशा क्रियते; D5.7 बालिशी( D5 °शो )यतते ( sic ); M2 विशालीक्रियते ( for बालिशीक्रियते ). D3 मतिः ( for पुनः ). —After 36, Dg1 Dt1 Dm1 D4.6.8 S ins. :

283* संस्मराम्यस्य वाक्यानि प्रियाणि मधुराणि च ।
हृद्यान्यमृतकल्पानि मनःप्रह्लादनानि च ।
कदा ह्यहं समेष्यामि भरतेन महात्मना ।
शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन ।

[ ( l. 2 ) Dg1 मृदु- ( for [ अ ]मृत- ). Dg1 ( marg. ) पुनः ( for मनः- ). D4 -प्रह्लादकानि ( for -प्रह्लादनानि ). —( l. 3 ) D4 G2 M2.3 [ अ ]न्वहं; G3 [ अ ]प्यहं ( for ह्यहं ).]

37 a ) Ś1 वर्णयन्नेव; Ñ1 D1-3 कथयन्नेव ( for विलपंस्तत्र ). Ñ2 V1 B D5.7 इत्यसौ प्रवदन्नेव. —b ) Ś1 गोदावरीतटं. —c ) Ñ2 V1 B D5.7 कृताभिषेकः ( for चक्रेऽभिषेकं ). —d ) G1 सीतया सह ( by transp. ).

38 a ) Ś1 Ñ1 D1-3 T3 G1 च; Ñ2 V1 B D5.7 G2 तु ( for [ अ ]थ ). Ñ2 V1 B D5.7 विधिवत् ( for सलिलैस् ). —b ) Ś1 D2 स्वान् ; Ñ1 D1.3 तौ; Dg1 Dm1 D6.8 T G3 M3 तैः; G1 स ( for ते ). Ś1 Dt1 D6 G1 दैवतानपि; Ñ1 D1-3 M3 दे( Ñ1 दै )वता अपि; D8 T2 G2 M1 देवतानि च; M2 देवतानृषीन् ( for दैवतानि च ). Ñ2 B2.3 D5.7 पितॄन्देवांश्च राघवः; V1 B1.4 पितृदेवांश्च राघवः. —After $38^{ab}$, B3 repeats $26^{cd}$. —c ) G1 स्तुवति. Ś1 Ñ1 D1-3 ववंदाते मुहुः सूर्यं. —d ) Dt1 M2 दैवतांश्च ( for देवताश्च ). Ś1 Ñ1 D1-3 समाहितौ; Dg1 Dt1 Dm1 D6.8 T3 G2.3 तथा( Dg1 G2 °दा )नघाः; G1 समाहितः ( for समाहिताः ). —For $38^{cd}$, Ñ2 V1 B D5.7 subst. :

284* उपास्त सानुजः सूर्यमुद्यन्तं सह सीतया ।
[ B2 उपास्ते ( for °स्त ). ]

39 a ) Ñ1 कृताभिषेकं ( for °कः ). Ś1 V1 B1.4 च; Ñ1 न; Ñ2 B2.3 D3.5.7 तु; D1.2 सु- ( for स ). V1 राघवः ( for रामः ). —b ) B2 -सहायः ( for -द्वितीयः ). —c ) T1.2 G2 गिरि- ( for त्वग- ). Ś1 Ñ V1 B D1.2.5.7 M2 सह( D2 स तु ) शैलपुत्र्या ( for त्वगराजपुत्र्या ). D3 कृताभिषेको रामस्तु सीता सौमित्रि ( sic ). —d ) Ś1 Ñ V1 B Dg1( marg. also as in text ) D2.3.5.7 T3 M2.3 सविष्णुर् ( for सनन्दिर् ). D1 गुहेन पुत्रो ( for रुद्रः सनन्दिर् ). M2 भगवान्निवेश. ❀ Cg : रुद्रः सविष्णुर्भगवानिवेश इति न क्वचिदपि कोशे दृश्यते । कश्चिद्दृश्यत इत्याह तदा अभूतोपमेति युक्तमिति ज्ञेयम् . ❀

Colophon. —*Sarga name* : Ś1 Ñ2 V1 B D1-3.5.7 हेमंतवर्णनं( B1.4 °ना; D2.3 °नः ); Ñ1 हिमवर्णनं. —*Sarga no.* : ( figures, words or both ) : Ś1 Ñ1 B1 D1.2 om. Ñ2 B3 D7 22; V1 21; B2.4 23; Dg1 Dt1 Dm1 D4.6.8 T G M1 16; D3 25; D5 12; M2.3 17. —After colophon, G1.3 conclude with श्रीरामाय नमः.

# १६

G. 3. 23. 1
B. 3 17. 1
L. 3. 22. 1

कृताभिषेको रामस्तु सीता सौमित्रिरेव च ।
तस्माद्गोदावरीतीरात्ततो जग्मुः स्वमाश्रमम् ॥ १

आश्रमं तमुपागम्य राघवः सहलक्ष्मणः ।
कृत्वा पौर्वाह्णिकं कर्म पर्णशालामुपागमत् ॥ २

स रामः पर्णशालायामासीनः सह सीतया ।
विरराज महाबाहुश्चित्रया चन्द्रमा इव ।
लक्ष्मणेन सह भ्रात्रा चकार विविधाः कथाः ॥ ३

तदासीनस्य रामस्य कथासंसक्तचेतसः ।
तं देशं राक्षसी काचिदाजगाम यदृच्छया ॥ ४

## 16

D8 begins with ॐ; M1 with श्रीरामाय नमः.

1 V2 illeg. for st. 1–13 (cf. v.l. 3.15.7).—$^{b}$) Ñ1 सीता सौमित्रिणा सह.—$^{d}$) Ś1 Ñ1 D1-3 आजगाम; Ñ2 V1 B D5.7 पुनरायात्; G2 उपा° (for ततो जग्मुः). Dg1 यथाश्रमं; D1 स्वमाश्रयं (for स्वमाश्रमम्). M2 अभिचक्राम चाश्रमं.

2 V2 illeg. for 2 (cf. v.l. 1).—Ś1 Ñ1 D1-3 om. $2^{ab}$.—$^{a}$) D4 om. (hapl.) आश्रमं. Ñ2 B1 D5.7 पुनरागम्य; V1 B2-4 M2 समु (B2 स्वमु; M2 तदु)पागम्य (for तमुपागम्य).—$^{b}$) Ñ2 V1 B D5.7 सह सीतया; G(ed.) परवीरहा (for सहलक्ष्मणः).—Ś1 Ñ1 D1-3 read $2^{cd}$ after $3^{cd}$.—$^{c}$) Ñ2 B1 Dg1 D1.5.7 G1 पूर्वाह्णिकं (for पौर्वा°). Ś1 Ñ1 D1-3.8 G3 M2.3 सर्वं (for कर्म).—$^{d}$) D1 स पर्णशाम् (sic) (for पर्णशालाम्). B3 उपागतः; Dm1 D8 G1 M2 °विशत् (for उपागमत्). D5 चकार विविधाः कथाः (= $3^{f}$).—After 2, Dg1 Dt1 Dm1 D4.6.8 S ins.:

285* उवास सुखितस्तत्र पूज्यमानो महर्षिभिः ।

[D6 सुवितस् (sic) (for सुखितस्).]

—After 2, D5 ins. l. 1–11 of 286*.

3 V2 illeg. for 3 (cf. v.l. 1).—D5 om. $3^{ab}$.—M2.3 transp. $3^{ab}$ and $3^{cd}$. T1.2 Cg transp. $3^{abcd}$ and $3^{ef}$. Ñ2 V1 B repeat $3^{ab}$ (V1 $3^{cd}$ also) after 286*.—$^{a}$) Ñ2 V1 B (all second time) रामस्तु (for स रामः).—$^{b}$) Ś1 कांतया (for आसीनः).—Ñ2 B D7 transp. $3^{cd}$ and $3^{ef}$ (followed by 286*).—$^{c}$) Ś1 Ñ1 V1 (first time) D1-3 महाराजो (for °बाहुश्).—$^{d}$) Ñ1 D1.3 रोहिण्या (for चित्रया). Ñ1 D1.3 यथा (for इव). Ś1 V1 (first time) रोहिण्याह्णी (V1 °ण्या इ)व चंद्रमाः; Ñ2 V1 (second time) B D5.7 चित्रये (Ñ2 °या; B1 °यै; B3 °मे)व (Ñ2 च) निशाकरः; D2 रोहिण्या सह चंद्रमाः.—After $3^{cd}$, Ś1 Ñ1 D1-3 read $2^{cd}$. Cv : विरराजेत्यादेः पूर्वं स रामः पर्णशालायामित्याद्यर्धं द्रष्टव्यम्। व्यत्यासस्तु लेखककृतः।; Cr : स राम इत्यर्धानन्तरं विरराजेत्यर्धं. ❀ —D4.5 om. $3^{ef}$.—$^{e}$) Ñ2 V1 B D7 च (B4 [ए]व; D7 स) धर्मात्मा (for सह भ्रात्रा).—After 3, Ñ2 V1 B D7 (only l. 1–11) ins.; while D5 ins. l. 1–11 only after 2:

286* कथाः कथयतस्तस्य सह भ्रात्रा महात्मनः ।
गृध्रराजः समागम्य राघवं वाक्यमब्रवीत् ।
महेष्वास महाबाहो महाबल महाभुज ।
आपृच्छे त्वां नरश्रेष्ठ गमिष्यामि स्वमालयम् ।
अप्रमादश्च कर्तव्यः सर्वभूतेषु राघव ।
कृतात्मा त्वममित्रघ्न गन्तुमिच्छामि राघव ।
दृष्ट्वाहं सुहृदः सर्वानात्मीयान्पुरुषर्षभ ।
आगमिष्यामि भद्रं ते तथ्यमेतद्ब्रवीम्यहम् ।
तमुवाच ततो रामो लक्ष्मणश्च खगेश्वरम् ।
गम्यतां पतगश्रेष्ठ पुनः संदर्शनाय नः ।
गृध्रराजे गते तस्मिन्राघवः सह सीतया ।
पर्णशालामुपागम्य प्राविशत्सहलक्ष्मणः ।
लक्ष्मणोऽथ समुत्थाय चतुःशालं मनोरमम् ।
प्रविवेश महाबाहुः सिंहो गिरिगुहामिव ।

[(l. 1) V1 कथां. D5 त्वस्य (for तस्य).—(l. 3) Ñ2 V1 D5.7 -प (D7 * )राक्रम (for महाभुज).—(l. 4) B3 (marg. also) नरव्याघ्र (for °श्रेष्ठ).—B2 om. (hapl.) l. 6.—(l. 6) B3 (marg. also) सुहृद्बंधून् (for कृतात्मा त्वम्). Ñ2 V1 D5.7 सुहृदा (D5.7 °कृता)त्मन्नमित्रघ्न (Ñ2 °त्रेषु); B1 कृतात्माहममित्रेषु (for the prior half). B3 (marg. also) वीक्षितं (for राघव).—(l. 7) G(ed.)तु (for [अ]हं). V1 B1.4 पुरुषोत्तम (V1 °मः) (for °षर्षभ).—(l. 8) B1 तत्ते तत्त्वं (for तथ्यमेतद्).—(l. 9) V1 B2.3 खगोत्तमं (for खगेश्वरम्).—(l. 10) D7 परम- (for पतग-). D7 संदर्श * स्व (for °र्शनाय). B4 च (for नः).—(l. 11) B4 तत्र (for तस्मिन्). G(ed.) प्रियदर्शनः (for सह सीतया).—(l. 12) B3 reads शाला in पर्णशालाम् *sup. lin.* Ñ2 B1 उपविष्टः सलक्ष्मणः (for the post. half).—(l. 13) Ñ2 हि (for ऽथ). B1 मनोहरं. Ñ2 V1 चतुः (V1 धनुः)शालां मनोरमां (for the post. half).]

—Thereafter V1 repeats $3^{abcd}$ (var.); Ñ2 B repeat $3^{ab}$ only.

4 V2 illeg. for 4 (cf. v.l. 1).—Ñ2 V1 B D5.7 om. $4^{ab}$.—$^{a}$) Ś1 Ñ1 D1-3 अथ; Dg1 Dm1 D4.8 T1.2 G1.3 M तथा; G2 om. (for तदा).—$^{b}$) D4 तथा (for कथा-). Ñ1 कथासंरक्तचेतसः.

सा तु शूर्पणखा नाम दशग्रीवस्य रक्षसः ।
भगिनी राममासाद्य ददर्श त्रिदशोपमम् ॥ ५
सिंहोरस्कं महाबाहुं पद्मपत्रनिभेक्षणम् ।
सुकुमारं महासत्त्वं पार्थिवव्यञ्जनान्वितम् ॥ ६
राममिन्दीवरश्यामं कन्दर्पसदृशप्रभम् ।
बभूवेन्द्रोपमं दृष्ट्वा राक्षसी काममोहिता ॥ ७

सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी ।
विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा ॥ ८
प्रियरूपं विरूपा सा सुस्वरं भैरवस्वना ।
तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी ॥ ९
न्यायवृत्तं सुदुर्वृत्ता प्रियमप्रियदर्शना ।
शरीरजसमाविष्टा राक्षसी राममब्रवीत् ॥ १० G. 3. 23. 18 B. 3. 17. 12 L. 3. 22. 10

5 V2 illeg. for 5 (cf. v.l. 1). —$^{a}$) Ñ2 V1 B D5.7 घोरा (for सा तु). Ś1 Ñ1 D2.4 T G1.3 M2.3 शू(D2 सू)र्पण (Ś1 D4 T2 °न)खी; B1 Dg1 D1.3.5.7 सूर्पण(Dg1 D1 °न)-खा; D8 M1 °नखा (for शूर्पणखा). Dg1 घोरा; T2 M1 रामं (for नाम). —$^{c}$) Ś1 Ñ V1 B D1.2.5.7 G1 आगम्य(Ñ °त्य) (for आसाद्य).

6 V2 illeg. for 6 (cf. v.l. 1). —$^{a}$) Ñ V1 B D1.3.5.7 सिंहस्कंधं; Dt1 D6 दीप्तास्यं च (for सिंहोरस्कं). —$^{b}$) Dg1 Dt1 D6 पद्मपत्रायतेक्षणं; D3 रामं पद्मनिभे°. —After $6^{ab}$, Dm1 D4.8 T1.2 G3 ins.; while Dt1 D6 ins. l. 2 only after $6^{ab}$:

287* आजानुबाहुं दीप्तास्यमतीव प्रियदर्शनम् ।
गजविक्रान्तगमनं जटामण्डलधारिणम् ।

—Ś1 Ñ1 B(om. $7^{ab}$) D1–3 read $7^{cd}$ after $6^{ab}$. —Ñ2 V1 B D5.7 read $6^{cd}$ after $10^{ab}$. —$^{d}$) D3 पार्थिवं (for पार्थिव-). —After 6, B2 ins. 289*.

7 V2 illeg. for 7 (cf. v.l. 1). —Ñ2 V1 B D5.7 om. $7^{ab}$. —$^{b}$) Dm1 D6.8 G3 -सदृशं(D6.8 °श) प्रभुं (for -सदृशप्रभम्). Ś1 Ñ1 D1–3 संरक्तकमले(Ñ1 °तपते)क्षणं. —Ś1 Ñ1 B D1–3 read $7^{cd}$ after $6^{ab}$. —$^{c}$) Ś1 Ñ1 D1.2 G1 [ इं ]द्रसमं (for [ इ ]न्द्रोपमं). Ñ2 V1 B D5.7 सा(B1 तं) दृष्ट्वा देवसंकाशं. —$^{d}$) Ñ2 V1 B D5.7 मदनार्दिता (for काममोहिता). —After 7, Ñ2 V1 B D5.7 ins.:

288* प्रकृत्या चैव दुर्वर्णा दुःशीला दुःखकारिणी ।
दुष्कुलीना दुरासेवा केवलं स्त्रीति सा स्मृता ।

[ (l. 1) Ñ2 D5.7 दुःशीला (for दुर्वर्णा). Ñ2 D5.7 दुर्वृत्ता; V1 जनानां; B4 दुश्चैला (sic) (for दुःशीला). Ñ2 B1 D5.7 दुष्ट (B1 दुःख)चारिणी. —(l. 2) V1 दुरात्माना (sic); B2 °सेव्या; B4 (marg. also as above) °चारा (for दुरासेवा). B1 स्त्रीभिदा (for स्त्रीति सा). ]

8 V2 illeg. for 8 (cf. v.l. 1). —$^{a}$) D1 दुर्मुखा (for °खी). V1 B2.3 transp. सुमुखं and दुर्मुखी. —$^{b}$) Ś1 Ñ V1 B D1.5.7 वृ(D1 द्)त्तपार्श्वं; M2 तनुमध्यं (for वृत्तमध्यं). —D2 om. $8^{cd}$. —$^{c}$) Ś1 Ñ1 D1.3 सुरूपाक्षं (for विशालाक्षं). —$^{d}$) V1 lacuna for केशं ताम्रमूर्धजा.

9 V2 illeg. for 9 (cf. v.l. 1). —$^{a}$) Ś1 V1 B1.3 D1 अतिरूपं; Ñ1 B3(*inf. lin.* also) प्रति°; Ñ2 B2.4 D2.3.5.7 अ(D2 स्व)भि°; Dg1 D4 T1.2 G M1.3 Cr.m.g.k प्रीति°; M2 (after corr. *sec. m.* as in text) प्रतिरूपा (for प्रियरूपं). Ś1 सुरूपं च; D2 विरूपी सा (for विरूपा सा). —$^{b}$) Ś1 Ñ1 B2–4 D1–5.7 T G3 M भैरवस्वरा. —$^{c}$) Dm1 करुणं (for तरुणं). B4 D1.3 दारुणी (for °णा).

10 V2 illeg. for 10 (cf. v.l. 1). —$^{a}$) Ś1 न्यायवृत्तिं (for °वृत्तं). M1 सुनिर्वृत्ता (for सुदु°). Ñ V1 B D5.7 M2 तं न्याय(B4 तमायं; M2[before corr.] °य्य)वृत्तं दुर्वृत्ता. —$^{b}$) Ñ1 * * * प्रिय- (for प्रियमप्रिय-). —After $10^{ab}$, Ñ2 V1 B D5.7 read $6^{cd}$. —B2 om. $10^{c}$. —$^{c}$) D4 अशरीर-; D7 शरीरजं; G(ed.) कामभार- (for शरीरज-). —After $10^{c}$, Ñ2 V1 B1.3.4 D5.7 ins.; while B2 ins. after 6:

289* दृष्ट्वा राममचिन्तयत् ।
अयं परमरूपाढ्यो युवा यौवनगर्वितः ।
मन्यते देवगन्धर्वैस्तुल्यमात्मानमात्मवान् ।
अस्याहं श्लाघ्यरूपस्य रामस्याद्भुतकर्मणः ।
काममुत्पादयिष्यामि रूपेणान्येन कामिनी ।
अस्य प्रकृतिकल्याणी भार्या सीतेति विश्रुता ।
रूपयौवनसम्पन्ना श्रीरिवामरवर्णिनी ।
तां विहाय यथा ह्येष मामिकां रूपसम्पदम् ।
दृष्ट्वा मामेव भजते तथा कर्तुमहं यते ।
रूपयौवनसम्पन्ना स्त्री किल त्रिदिवौकसाम् ।
श्रीर्माया रक्षसामेषा संमतेति मतिर्मम ।
सा त्वहं श्रीरिवाकाशान्मायया पतिता भुवि ।
राममुन्मादयिष्यामि शर्मिष्ठा नाहुषं यथा ।
साभिगम्य महाबाहुं भूत्वा वै कामरूपिणी ।
स्त्रीस्वभावं पुरस्कृत्य.

[ B2 om. l. 1. —(l. 1) V1 तुष्ट्वा (for दृष्ट्वा). —(l. 2) D5 -दर्पितः (for -गर्वितः). —(l. 3) D7 आत्मा * * त्मवान्. —(l. 4) B3 तस्याहं (for अस्याहं). B3 (marg. also) -रूपिणः (for -कर्मणः). —(l. 5) B2 [ अ ]ल्पेन (for [ अ ]न्येन). —(l. 7) B2 [ अं ]बर- (for [ अ ]मर-). B3 (*sup. lin.* also) -रूपिणी (for -वर्णिनी). —(l. 8) B3 (*sup. lin.* also as in text) अहं (hymp.) (for तां). B2 कामिकां; D5 मामेकां (for मामिकां). —(l. 10) V1 न किल (hypm.) (for किल). —(l. 11) B एषां (for एषा). —(l. 12) Ñ2 V1 B4 मायेव; D5 मतया (sic) (for मायया). —(l. 13) Ñ2 D5.7 उत्साहयिष्यामि (for उन्माद°). V1 B2.4 (marg. also as above)

G. 3. 23. 26
B. 3. 17. 12
L. 3. 22. 11

जटी तापसरूपेण सभार्यः शरचापधृक् ।
आगतस्त्वमिमं देशं कथं राक्षससेवितम् ॥ ११
एवमुक्तस्तु राक्षस्या शूर्पणख्या परंतपः ।
ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ॥ १२
आसीद्दशरथो नाम राजा त्रिदशविक्रमः ।
तस्याहमग्रजः पुत्रो रामो नाम जनैः श्रुतः ॥ १३
भ्रातायं लक्ष्मणो नाम यवीयान्मामनुव्रतः ।
इयं भार्या च वैदेही मम सीतेति विश्रुता ॥ १४
नियोगात्तु नरेन्द्रस्य पितुर्मातुश्च यन्त्रितः ।
धर्मार्थं धर्मकाङ्क्षी च वनं वस्तुमिहागतः ॥ १५
त्वां तु वेदितुमिच्छामि कथ्यतां कासि कस्य वा ।
इह वा किंनिमित्तं त्वमागता ब्रूहि तत्त्वतः ॥ १६

---

कामसुत्पादयिष्यामि ( for the prior half ). V1 नघुपे ( sic ) ( for नाहुपं ). —( l. 14 ) V1 अभिगम्य ( for साभि° ). ]

—$^{d}$ ) Ñ2 V1 B D5.7 सस्मितं वाक्यमब्रवीत् .

**11** V2 illeg. for 11 ( cf. v.l. 1 ). B4 reads 11–12 in marg. —$^{a}$ ) Ñ1 Dt1 D6 -वेषेण; Cg as in text ( for -रूपेण ). Ñ2 V1 B D5.7 कस्त्वं तापसरूपेण. —$^{b}$ ) Ś1 Ñ1 B2 Dt1 D1.4 T शरचापभृत्( Ñ1 D4 °दृक् ; Dt1 T °धृत् ); Ñ2 M3 स च( M3 सह )चाप°; V1 कवचासि° ( for शरचापधृक् ). —$^{c}$ ) D4 इदं ( for इमं ). Ñ2 V1 B D5.7 इमं देशमनुप्राप्तो ( Ñ2 B1 °प्ता ). —$^{d}$ ) Ñ2 V1 B D5.7 दुर्गं ( for कथं ). —After 11, Ñ2 V1 B D5.7 ins. :

290* नातिदूरमितः शूरा राक्षसा घोरविक्रमाः ।
उत्सादयन्त्यृषीन्सर्वाञ्जनस्थाने महाबलाः ।
वसन्तः क्रूरकर्माणस्ततस्त्वां वै ब्रवीम्यहम् ।
कथं त्वमरमुख्यानां सदृशस्त्वमिहागतः ।
इदं गोदावरीतीरमृषयः पावकोपमाः । [5]
त्वद्बाहुबलमाश्रित्य तिष्ठन्तीति मतिर्मम ।

[ ( l. 1 ) B1.4 -दूर इतः. V1 B2.4 घोररूपिणः. —( l. 3 ) D7 वसंतं. Ñ2 D5.7 तु ( for वै ). —( l. 4 ) B3 wrongly repeats सदृश. —( l. 5 ) V1 इमं ( for इदं ). B2 पावकप्रभाः. ]; —while D1 ins. :

291* राक्षसानामयं वासस्तपस्विजनवर्जितः ।;

—D1 cont.; whereas Dg1 Dt1 Dm1 D4.6.8 S ins. after 11 :

292* किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि ।

[ Dm1 D1.8 G1 M1 आगमनकार्यं; D1 चा° ( for आगमनकृत्यं ). T3 समाख्यातुम् ( for त्वमा° ). ]

**12** V2 illeg. for 12 ( cf. v.l. 1 ). —B4 reads 12 in marg. ( cf. v.l. 11 ). —$^{a}$ ) G2 स ( for तु ). —$^{b}$ ) Ś1 B D1.4 T3 Cg.t शू( D1 सू )र्पनख्या; Ñ1 Dg1 Dm1( before corr. ) सूर्प° ( for शूर्पणख्या ). Ś1 Ñ V1 B D1–3.5.7 स( D2 तु ) राघवः. —$^{c}$ ) D6 सार्धम् ( for सर्वम् ). —$^{d}$ ) Ñ1 व्याख्यातुम् ( for आख्या° ). —After 12, Dg1 Dm1 D4.8 T G2.3 M ins. :

293* अनृतं न हि रामस्य कदाचिदपि संमतम् ।
विशेषादाश्रमस्थस्य समीपे स्त्रीजनस्य च ।

[ ( l. 1 ) M3 च ( for हि ). —( l. 2 ) Dg1 D4 T विशेषेण ( for विशेषाद् ). ]

**13** V2 illeg. for 13 ( cf. v.l. 1 ). —$^{ab}$ ) Dt1 wrongly repeats रथो नाम राजा त्रिदश after त्रिदश in $^{b}$. Ñ2 V1 B D5.7 राजा दशरथो नाम धर्मात्मा विश्रुतः क्षितौ. —After 13$^{ab}$, B4 ins. श्रीरामः and श्रीहरिः. —$^{c}$ ) T3 अग्रतः ( for अग्रजः ). —$^{d}$ ) Ś1 D2 जनश्रुतः ( for जनैः श्रुतः ). Ñ2 V1 B D5.7 राम इत्यभि( B4 [ marg. also ] °त्र )विश्रुतः.

**14** $^{b}$ ) Ś1 Ñ1 D2.3 कनीयानेव( Ñ1 D3 °न्मम ) सुव्रतः; D1 कनीयान्समनुव्रतः. —$^{c}$ ) Ñ1 D2 M2 च भार्या ( by transp. ); D3 तु भार्या ( for भार्या च ). —For 14, Ñ2 V1 B D5.7 subst. :

294* सीतेयं मम भार्या च भ्रातायं लक्ष्मणस्तथा ।

[ B4 ( marg. also ) मामेव समनुव्रता ( for the post. half ). ]

**15** V2 illeg. up to पितु in $^{b}$. —$^{a}$ ) Ñ1 illeg.; Dg1 D3 G1 च ( for तु ). —$^{b}$ ) D4 मम ( for पितुर् ). Ś1 Ñ1 D1–3 धर्मतः; Ñ2 V1 B D5.7 शासनात् ( for यन्त्रितः ). —D7 om. 15$^{cd}$. —$^{c}$ ) Ś1 Ñ V2 B3.4 D1.5 धर्मार्थी; B1 °त्मा; D2 °र्थों; D3 °र्था ( sic ) ( for धर्मार्थं ). Ś1 Ñ1 D2.3 धर्मदर्शी; Ñ2 V B D5 °कामश्च; D1 °रक्षी; M3 °कामी ( for धर्मकाङ्क्षी ). V2 तु ( for च ). —$^{d}$ ) G( ed. ) वने ( for वनं ). V1 B2.3 द्रष्टुम् ( for वस्तुम् ). Ñ2 स्वमागतः; D5 समा° ( for इहागतः ). Ś1 Ñ1 D1–3 वनवासं समा( Ñ1 D1.3 °समिहा )गतः. —After 15, Ñ2 V B D5 ins.; while D7 ins. l. 2 only after 15$^{ab}$ :

295* रूपयौवनसम्पन्ना साक्षाच्छ्रीरिव सुन्दरी ।
वने घोरतरे भीरु का त्वं चरसि दण्डके ।

[ ( l. 1 ) B1 -लक्षण- ( for -यौवन- ). V1 B4 रूपिणी ( for सुन्दरी ). V2 श्रीरिव यतनोचरी ( sic ) ( for the post. half ). —( l. 2 ) V2 illeg. up to चरसि. B1 घोरतमे; D7 घोरे ( subm. ) ( for घोरतरे ). B3 वससि ( for चरसि ). ]

**16** $^{a}$ ) Ś1 Ñ1 D1–3 तु विज्ञातुम् ; Ñ2 V B D5.7 अहं ज्ञातुम् ; D4 च वे° ( for तु वेदितुम् ). —$^{b}$ ) Ñ2 D5.7 कुतस्त्वं; Dt1 D6 Ct कस्य त्वं ( for कथ्यतां ). Ñ1 ( also ) V B2 D3 कस्य कासि ( by transp. ); G2 कापि कस्य. Ś1 Ñ1 D2 च ( for वा ). —After 16$^{ab}$, Dg1 Dt1 Dm1 D4.6.8 S ins. :

साब्रवीद्वचनं श्रुत्वा राक्षसी मदनार्दिता ।
श्रूयतां राम वक्ष्यामि तत्त्वार्थं वचनं मम ॥ १७
अहं शूर्पणखा नाम राक्षसी कामरूपिणी ।
अरण्यं विचरामीदमेका सर्वभयंकरा ॥ १८
रावणो नाम मे भ्राता राक्षसो राक्षसेश्वरः ।
प्रवृद्धनिद्रश्च सदा कुम्भकर्णो महाबलः ॥ १९
विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः ।
प्रख्यातवीर्यौ च रणे भ्रातरौ खरदूषणौ ॥ २०
तानहं समतिक्रान्ता राम त्वापूर्वदर्शनात् ।
समुपेतास्मि भावेन भर्तारं पुरुषोत्तमम् ।
चिराय भव भर्ता मे सीतया किं करिष्यसि ॥ २१ G. 3. 23. 40 B. 3. 17. 25 L. 3. 23. 21

296* न हि तावन्मनोज्ञाङ्गी राक्षसी प्रतिभासि मे ।

[ Dt1 D6.8 T3 त्वं ( for न ). M3 तु ( for हि ). G2 मनोज्ञांगि. M2 मानुषी ( for राक्षसी ). —G2 om. ( hapl. ) from प्रतिभासि up to राक्षसी in $18^{b}$. D4 G3 प्रतिभाति ( for °भासि ). T2 G1 M1.3 मा ( for मे ). ]

—$^{c}$) Ś1 D2.3 [ अ ]थ; Dm1 D8 G3 [ ए ]व ( for वा ). —$^{d}$) Ñ1 ह्यागता. Ś1 Ñ1 D1–3 कारणं; M2 कथ्यतां ( sic ) (for तत्त्वतः ). Ñ2 V B D5.7 एका चरसि निर्भया. —After 16, M2 ins. :

297* यक्षिणी राक्षसी वापि त्वसुताहो सुराङ्गना ।

17 G2 om. 17 ( cf. v.l. 296* ). —$^{a}$) M2 अब्रवीद् ; M3 सा तु तद् ( for साब्रवीद् ). Ś1 D5.7 तु वचः; Ñ V B D1–3 तद्वचः ( for वचनं ). —$^{b}$) B1 मदविह्वला; Dg1 °तुरा; D8 °न्विता ( for मदनार्दिता ). —T1 damaged from वक्ष्यामि in $17^{c}$ up to राक्ष in $18^{b}$. —$^{c}$) Dt1 D6 तत्त्वार्थं ( for वक्ष्यामि ). —$^{d}$) Dt1 D6 वक्ष्यामि ( for तत्त्वार्थं ). Ś1 Ñ V B D1–3.5.7 सह( V1 °* ) भ्रात्रा वचो मम. —After 17, M2 ins. :

298* पुलस्त्यतनयस्याहं सुता राघव तस्य ह ।

18 G2 om. up to राक्षसी in $^{b}$ ( cf. v.l. 296* ). T1 damaged up to राक्ष in $^{b}$ ( cf. v.l. 17 ). —D1 om. 18. —$^{a}$) Ś1 Dg1 Dm1 D2.4.8 T2.3 G1.3 M1.3 शू ( Dg1 D2 सू )र्पण( Ś1 Dg1 D4 T3 M1 °न )खी; Ñ1 V1 D3 सूर्पं° ( for शूर्पणखा ). —$^{c}$) Ñ2 V B M2 अरण्ये; D3 आ° ( for अरण्यं ). Ś1 Ñ2 V B D2.3.5.7 M2 [ ए ]का; Ñ1 [ ए ]षा; Dg1 [ ए ]व ( for [ इ ]दम् ). —$^{d}$) D2 घोरसत्त्व-; M2 सर्वलोक- ( for एका सर्व- ). Ś1 Ñ V B D3.5.7 सर्वभूत( Ś1 घोररूप; Ñ1 घोरं सत्त्व; D3 घोरा सत्त्व )भयंकरी( V1 B3 °रा ). —After 18, Ñ2 V B D5.7 ins. :

299* उत्सादयन्ती पुण्यानि तीर्थान्यायतनानि च ।

19 $^{a}$) V1 भ्राता* ( for मे भ्राता ). —$^{b}$) T1.2 बलीयान् ; G2 गरीयान् ( for राक्षसो ). Ś1 Ñ1 Dm1 D1–3.8 G3 विश्रुतो ( Dm1 D8 G3 राक्षसो ) राक्षसाधिपः; Dt1 D6 Ck.t यदि ते श्रोत्रमागतः. —After $19^{ab}$, Dm1 D4.6.8 T1.2 G2.3 M1 ins. :

300* वीरो विश्रवसः पुत्रो यदि ते श्रोत्रमागतः ।

[ Dm1 G2.3 M1 सोयं; D8 योयं ( for वीरो ). ]

—Ś1 Ñ V B Dg1 Dt1 D1–3.5–7 G1 M1 transp. $19^{cd}$ and $20^{ab}$. —$^{c}$) D8 G2.3 M3 Ck प्रवृद्धनिद्रश्. Dm1 D8 G3 तु; T3 स ( for च ). Ñ V B D5.7 T3 तथा ( for सदा ). G1 वृद्धनिद्रश्च सततं. —$^{d}$) D4 कुंककर्णो. T3 सदा- ( for महा- ).

20 Ś1 Ñ V B Dg1 Dt1 D1–3.5–7 G1 M1 transp. $19^{cd}$ and $20^{ab}$. —G2 om. $20^{ab}$. —$^{a}$) Ś1 Ñ V B D1–5.7 T1.2 M1.2 च ( for तु ). Ñ2 D5.7 मे भ्राता ( for धर्मात्मा ). —$^{b}$) D4 स ( for न ). Ś1 च; Ñ1 D2.3 स ( for तु ). D4 -चेष्टितं ( for -चेष्टितः ). Ñ2 V B D5.7 राक्षसाचारवर्जितः; D1 शिष्टराक्षसचेष्टितः. —$^{c}$) Ñ2 V B D5.7 -बलवीर्यौ च; D3 -वीर्यौ चारेण ( sic ); M2 -वीर्याभरणौ ( for -वीर्यौ च रणे ). —$^{d}$) Ñ2 V B D5.7 राक्षसौ ( for भ्रातरौ ). —After 20, Ñ2 V B D5.7 M2 ins. :

301* महावीर्यौ महाकायौ निर्भयौ घोरदर्शनौ ।

[ B2 महासत्त्वौ ( for °कायौ ). M2 transp. महावीर्यौ and महाकायौ. B1 राक्षसौ ( for निर्भयौ ). ]

—Ñ2 B4 D5.7 cont. :

302* चतुर्दश सहस्राणि रक्षसां घोररूपिणाम् ।
बलं भ्रातुर्मम सदा खरस्य सुमहात्मनः ।
तेन सार्धं महारण्ये वसामि विगतज्वरा ।
भ्रात्रा तेन च गुप्ताहं मन्यमाना भृशं नृप ।
[ ( l. 1 ) B4 कामरूपिणां ( for घोर° ). ]

21 $^{a}$) G2 समतिक्रम्य ( for °क्रान्ता ). Ś1 Ñ1 D1.2 त्वामहं स्व( D2 त्व )भिरामा( L[ ed. ] °मं ) च( D2 °माश्च ). —$^{b}$) Ñ1 D1.2 त( D1 त्व )त्पूर्व-; T3 G3 M1 Ck त्वां पूर्व-; M2 ( after corr. *sec. m.* as in text ) त्वं पूर्ण-; M3 त्वां पूर्ण- ( for त्वापूर्व- ). Ś1 प्रयाता पूर्वदर्शनात् ; D3 राम त्वत्प्रियकांक्षया. ꣸ Cr : त्वा त्वां पूर्वदर्शनात् प्रथमदर्शनक्षणमारभ्य अपूर्वदर्शनादित्यपि पदं ।; Cm: त्वा त्वां पूर्वदर्शनात् प्रथमदर्शनादारभ्य । अपूर्वदर्शनादिति वा पाठः ।; Cg : त्वा त्वां पूर्वदर्शनात् प्रथमदर्शनादारभ्य । अपूर्वदर्शनादिति वा छेदः ।; Ck : त्वां पूर्वदर्शनात् प्रथम दर्शनक्षणमारभ्य । अपूर्वदर्शनादित्यपि पदं ।; Ct : त्वा त्वां पूर्वदर्शनात् प्रथमदर्शनक्षणमारभ्य । यद्वापूर्वदर्शनाद्देवादिष्वितः प्रागदृष्टदिव्यत्वद्रूपदर्शनाद्धेतोः. ꣸ —Ś1 Ñ1 D1–3 om. $21^{cd}$. —$^{c}$) M3 स्म ( for [ अ ]स्मि ). —$^{d}$) Dg1 पुरुषर्षभं ( for °षोत्तमम् ). —After $21^{cd}$, Dg1 Dt1 Dm1 D4.6.8 S ins. :

303* अहं प्रभावसम्पन्ना स्वच्छन्दबलगामिनी ।

G. 3. 23. 41 B. 3. 17. 26 L. 3. 22. 22 विकृता च विरूपा च न सेयं सदृशी तव ।
अहमेवानुरूपा ते भार्यारूपेण पश्य माम् ॥ २२
इमां विरूपामसतीं करालां निर्णतोदरीम् ।
अनेन सह ते भ्रात्रा भक्षयिष्यामि मानुषीम् ॥ २३
ततः पर्वतशृङ्गाणि वनानि विविधानि च ।
पश्यन्सह मया कान्त दण्डकान्विचरिष्यसि ॥ २४
इत्येवमुक्तः काकुत्स्थः प्रहस्य मदिरेक्षणाम् ।
इदं वचनमारेभे वक्तुं वाक्यविशारदः ॥ २५

इति श्रीरामायणे अरण्यकाण्डे षोडशः सर्गः ॥ १६ ॥

[ D6 -वरगामिनी; M3 °गामिनी ( for -वल्गगामिनी ). ]
—e ) D3 त्वं राम ( for चिराय ). Ś1 Dm1 D1.2.8 T2.3 G M2.3 transp. भर्ता and मे. —f ) Ś1 Ñ1 D1-3 तवानया ( for करिष्यसि ). —For 21, Ñ2 V B D5.7 subst., while M2 cont. after 303* :

304* साहं त्वद्दर्शनाद्राम कामवक्तव्यतां गता ।
भजस्व भजमानां मां सीतया किं तवानया ।

[ ( l. 1 ) V1 lacuna; B2 कार्य- ( for काम- ). D5.7 -वैक्लव्यतां ( for -वक्तव्यतां ). —( l. 2 ) M2 भज मां भजमानां त्वं ( for the prior half ) and मानुष्या ( for सीतया ). ]

22 a ) V1 विरक्ता ( for विकृता ). Ñ2 V B D5.7 [ इ ]यं; D4 न ( for first च ). —T1 damaged from second च up to 22c. Ś1 विरूपा विकृता चेयं. —b ) Ś1 हि वा; Ñ1 [ इ ]यं च; Ñ2 V B Dg1 Dm1 D1.5.7.8 G2.3 M1.2 चे( B4 ते )यं; D2 [ इ ]यं मत्-; D3 [ इ ]यं हि; M3 [ ए ]षेयं ( for सेयं ). —c ) Ś1 D2 [ अ ]नुरागाच् ( for [ अ ]नुरूपा ). Ś1 B1 D2.3 च; D5 वै ( for ते ). —d ) Dm1 G3 जाया-; D6 भार्यां ( for भार्या- ). Dm1 पश्य तां; T3 राघव ( for पश्य माम् ). Ñ2 V B D5.7 M2 भार्या रूपगुणान्विता. —After 22, Ñ2 V B D5.7 ins. :

305* पश्य मां दिव्यरूपां त्वं दिव्याभरणभूषिताम् ।
कान्तोरुनयनां कान्तां पीनश्रोणिपयोधराम् ।

[ ( l. 2 ) B1 पीनोन्नत- ( for पीनश्रोणि- ). ]

23 a ) Ś1 V1 D1 अरूपाम्; Ñ2 कुरूपाम्; M3 करालाम् ( for विरूपाम् ). —b ) Dt1 Dm1 D8 T2 करालीं; M3 विरूपां ( for करालां ). Dg1 Dm1 T3 Ck निर्नतोदरीं; G1 [निर्मितो°; M2.3 निर्णितो° ( for निर्णतोदरीम् ). Ś1 Ñ1 V D1-3.5.7 भक्षयिष्यामि मानुषीं( Ś1 मानवीं ) ( = 23d ); Ñ2 B द्वितीयेन गतायुषा. —c ) Ñ1 च सह; Ñ2 D5.7 तव किं; B Dm1 D4 T2 M2 ते सह( by transp. ); D1 च सह; M1 सह तां ( for सह ते ). —d ) M2 मानुषां ( for मानुषीम् ). Ś1 Ñ1 V D1-3.5.7 द्वितीयेन गतायुषा.

24 b ) Ñ2 V B D5.7 रुचिराणि ( for विविधानि ). Ś1 Ñ1 D1-3 विविधानि वनानि( D3 च यानि ) ( by transp. ). —c ) Ś1 D2 G3 कामं; Ñ1 Dg1 Dt1 D1.3.6 T3 G1.2 M1.3 कामी ( for कान्त ). —d ) V1 B2.4 दंडकं ( for दण्डकान् ). —After 24, Ñ2 V B D5.7 ins.; while M2 ins. l. 2 only after 25ab :

306* एतत्तु वचनं श्रुत्वा राक्षस्या ह्यतिदारुणम् ।
ईक्षांचक्रे तदा सीतां लक्ष्मणं च महाभुजः ।

[ ( l. 1 ) B2 अति- ( for ह्यति- ). —( l. 2 ) B1-3 ततः ( for तदा ). M2 सीतां वीक्षां ततश्चक्रे ( for the prior half ). B1 M2 महाभुजं. ]

25 a ) Ś1 Ñ1 D1-3 उक्त्वा काकुत्स्थं. M2 एवमुक्तस्तु काकुत्स्थः. —b ) D1 प्रसह्य ( for प्रहस्य ). Ś1 Ñ1 D1-3 मदिरेक्षणा; Dm1 T3 G2.3 M1 °क्षणः; G1 [ अ ]मितरोषणः ( for मदिरेक्षणाम् ). —For 25ab, Ñ2 V B D5.7 subst.; Ś1 Ñ1 D1-3 cont. after 308*; whereas T2 M2 ( preceded by 306* ) ins. after 25ab :

307* संप्रहासनिमित्तं तु रामः शूर्पणखां ततः ।

[ Ñ1 स प्रहास-; D2( marg. also as above ) संप्रसाद-; T2 संप्रहार- ( for संप्रहास- ). Ñ1 D1-3 तां ( for तु ). Ś1 स प्रहासनिमित्तां तां ( for the prior half ). Ś1 Ñ1 D1 शू( Ñ1 D1 सू )र्पनखां; V B1.3 सूर्प°; D2.3 M2 सू( M2 शू )र्पणखीं; T3 शूर्पनखीं ( for शूर्पणखां ). Ñ1 पुनः; D3 तदा ( for ततः ). ]
—After 25ab, Ś1 Ñ1 D1-3 ins. :

308* देवी सलक्ष्मणा सीता बभूवावस्थिता पुरः ।

[ D1.3 देवीं सलक्ष्मणां सीतां ( for the prior half ). D2 पुरा; D3 पुनः ( for पुरः ). ]
—T1 damaged for 25c. —c ) T2 वक्तुं; G2 इयं ( for इदं ). —d ) D4 T1 वाक्यं ( for वक्तुं ). Ś1 Ñ1 D1-3 वक्तुं वचनकोविदः; T2 वाक्यज्ञो वाक्यकोविदः. —After 25, Ś1 D1-3 ins. :

309* दृष्ट्वा लक्ष्मणमागत्य स्थितामग्रे स राक्षसीम् ।

[ D1.3 आभाष्य; D2 °साच ( for आगत्य ). ]

Colophon. D1.2 om.( Sarga cont. ). —*Kāṇḍa name* : Ś1 Dg1 Dt1 Dm1 D6.7 T G M1.2 आरण्यकांडे; Ñ1 B2 आरण्यककांडे; Ñ2 V B1 D3.5 आरण्यके. —*Sarga name* : Ś1 Ñ V B D5.7 शू( Ñ1 V B3 सू )र्पण( Ś1 °न )खादर्शनं; D3 सूर्पणखीदर्शनं.—*Sarga no.* ( figures, words or both ) : Ś1 Ñ1 V2 B1 om.; Ñ2 B3 D7 23; V1 22; B2.4 24; Dg1 Dt1 Dm1 D4.6.8 T G M1 17; D3 26; D5 13; M2.3 18. G concludes with श्रीरामाय नमः.

# १७

तां तु शूर्पणखां रामः कामपाशावपाशिताम् ।
स्वेच्छया श्लक्ष्णया वाचा स्मितपूर्वमथाब्रवीत् ॥ १
कृतदारोऽस्मि भवति भार्येयं दयिता मम ।
त्वद्विधानां तु नारीणां सुदुःखा ससपत्नता ॥ २
अनुजस्त्वेष मे भ्राता शीलवान्प्रियदर्शनः ।
श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥ ३
अपूर्वी भार्यया चार्थी तरुणः प्रियदर्शनः ।
अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति ॥ ४
एनं भज विशालाक्षि भर्तारं भ्रातरं मम ।
असपत्ना वरारोहे मेरुमर्कप्रभा यथा ॥ ५
इति रामेण सा प्रोक्ता राक्षसी काममोहिता ।
विसृज्य रामं सहसा ततो लक्ष्मणमब्रवीत् ॥ ६
अस्य रूपस्य ते युक्ता भार्याहं वरवर्णिनी ।
मया सह सुखं सर्वान्दण्डकान्विचरिष्यसि ॥ ७
एवमुक्तस्तु सौमित्री राक्षस्या वाक्यकोविदः ।
ततः शूर्पणखीं स्मित्वा लक्ष्मणो युक्तमब्रवीत् ॥ ८ G. 3. 24. 8 B. 3. 18 8 L. 3. 23. 8

## 17

D1.2 continue the previous Sarga. D8 begins with ॐ; M1 with श्रीरामाय नमः.

1 $^{a}$) D2 reads तु in marg. Ś1 तां च; Dg1 D3.4 T1.2 G2 Cg.k ततः ( for तां तु ). Ś1 D4 T2.3 शूर्पनखीं; Ñ1 Dm1 D2.3 सूर्पणखीं; V1 D8 शूर्पनखां; Dg1 D1 सूर्पनखां; T1 G1.3 M शूर्पणखीं. Ñ2 V B D5.7 दृष्ट्वा; D2 नाम ( for रामः ). —$^{b}$) Ś1 Ñ1 D1-3 M2 कामबाण( M2 °पाश )बलार्दितां; Ñ2 V B D5.7 रामः कामबला( B1.3 °शरा )र्दितां; G1 कामपाशवशं गतां. —$^{c}$) Dg1 T1 G1 Cg स्वच्छया; D1 स इदं; Cv.m$p$ as in text ( for स्वेच्छया ). Ś1 Ñ V B D2.3.5.7 श्लक्ष्णया युक्त( Ś1 Ñ1 D2.3 स्वस्थ; B3 मुख )या वाचा; M2 हृद्यया व्यक्तया वाचा. —$^{d}$) Ñ2 V B D5.7 अभाषत ( for अथाब्रवीत् ). ❀ Ct : स्वेच्छया इति पाठे परिहासविनोदेनेत्यर्थः। अत एव स्मितपूर्वमिति तीर्थः। स्वच्छंदां इति पाठो युक्तः। स्वेच्छाचारिणीमित्यर्थः. ❀

2 $^{a}$) T3 कृतकार्यो ( for °दारो ). Ñ1 [ ऽ ]हं ( sic ) ( for ऽस्मि ). D1 भद्रं ते ( for भवति ). —$^{c}$) Ś1 Ñ1 D1.2 च; Dg1 D3 M2 हि ( for तु ). —$^{d}$) M1.2 सुदुःखं ( for °खा ). Dm1 D8 च सपत्नता; G1.3 ससपत्निता; G2 सा सपत्नता. Ś1 Ñ1 D1-3 सु( Ś1 स्व )दुःखाय सपत्नता; Dg1 T3 सुदुःखार्हा सपत्नता. —For 2$^{cd}$, Ñ2 V B D5.7 subst. :

310* त्वद्विधा न च वै नारी सपत्नीं मर्षयेदिमाम् ।

[ V2 B1 transp. न and च. Ñ2 D5.7 वै कथं; V1 वै न च ( by transp. ); B4 नापि वै; G( ed. ) तु न वै ( for न च वै ). D5.7 इयं ]( for इमाम् ). ]

3 $^{a}$) D1 [ ए ]व ( for [ ए ]ष ). —Ś1 om. 3$^{b}$-4$^{c}$. —$^{b}$) Ñ1 D1-3 गुणवान् ( for शीलवान् ). —D2 reads 3$^{c}$-4$^{b}$ in marg. —$^{c}$) L( ed. ) चाकृत- ( for अकृत- ).

4 Ś1 om. 4$^{abc}$, D2 reads 4$^{ab}$ in marg. ( for both cf. v.l. 3 ). Ñ2 V B D5.7 transp. $^{ab}$ and $^{cd}$. —$^{a}$) Ñ2 V B D5.7 तरुणो; Dg1 D4.8 T G1.2 M1 Cm$p$ अपूर्व-; Cr नपूर्वी; Cm as in text ( for अपूर्वी ). V1 B3 हीनो ( for चार्थी ). Ñ1 D1-3 M2 अपूर्व( M2 °भूत )भार्यो भार्यार्थी. —$^{b}$) Ñ2 V B D5.7 रूपवान् ( for तरुणः ). D1 प्रियदर्शने. —After 4$^{ab}$, Ñ2 V B D5.7 M2( after 4 ) ins. :

311* किं मया ते विरूपेण कृतदारेण राक्षसि ।

[ B2 [ अ ]तिविरूपेण; D7 ते रूपेण ( subm. ) ( for ते वि° ). ]

—$^{c}$) Ñ2 V B D5.7 एषोनुरूपो भर्ता ते. ❀ Cr : अभर्तेति पदच्छेदेनान्तराशयः।; Cm : ते अभर्तेति छेदः।; Cg : अनुरूपश्च ते भर्तेत्यत्र अभर्तेति छेदेनान्तराशयः।; Ck : अनुरूपश्च ते भर्तेत्यत्रापि अभर्तेति पदच्छेदेनान्तराशयः. ❀ —$^{d}$) D4 T1 G2 च ( for [ अ ]स्य ).

5 $^{a}$) Ś1 B2 एतं; Ñ2 V1 Dg1 Dm1 D1 T3 एवं ( for एनं ). Cg विशालाक्षी ( for °क्षि ). —$^{b}$) Ś1 त्रातारं; D1 लक्ष्मणं ( for भर्तारं ). Ñ1 om. ( hapl. ? ) भ्रातरं. —$^{c}$) Ś1 Ñ1 D2 असपत्नं; Ñ2 V2 B4 D5.7 °त्नी ( for °त्ना ). D3 असंपत्नं विशालाक्षि.

6 $^{a}$) Ś1 Ñ1 D1-3 तूक्ता ( for प्रोक्ता ). Ñ2 V B D5.7 इत्युक्ता साथ रामेण. —$^{b}$) Ś1 D1-3 M2 मदनार्दिता; Ñ1 मदर्पिता; Ñ2 V B D5.7 कामरूपिणी ( for काममोहिता ). —$^{c}$) D3 तरसा; G2 सा घोरा ( for सहसा ). Dm1 D8 सहसा रामं ( by transp. ). —$^{d}$) M2 गत्वा ( for ततो ).

7 M1 om. ( hapl. ) 7-8; D6 om. 7. —$^{a}$) D3 मे भर्ता ( for ते युक्ता ). —For 7$^{ab}$, Ñ2 V B D5.7 subst. :

312* तवानुरूपां रूपस्य भार्यां मां भज मानद ।

[ V1 [ अ ]नुरूपं ( for °पां ). V1 मानदः. ]

—$^{c}$) Ś1 Ñ1 D1.3 सुखी सर्वान्; Ñ2 V B2.4 D5.7 सुखी रम्यान्; B1.3 सुखी रम्यं; D2 सुखी सार्धं; M2 सुखं कामी ( for सुखं सर्वान् ). —$^{d}$) B1.2 दंडकं ( for °कान् ). M2 प्रचरिष्यसि. —After 7, B1 ins. :

313* वशीभूताश्च मे सर्वे ये चात्र वनचारिणः ।

8 M1 om. 8 ( cf. v.l. 7 ). —$^{ab}$) Ś1 Dg1 राक्षस्या सौमित्रिर् ( by transp. ). —$^{c}$) Dg1 अतः ( for ततः ). Dg1

G. 3. 24. 9 B. 3. 18. 9 L. 3. 23. 9

कथं दासस्य मे दासी भार्या भवितुमिच्छसि ।
सोऽहमार्येण परवान्भ्रात्रा कमलवर्णिनी ॥ ९
समृद्धार्थस्य सिद्धार्था मुदितामलवर्णिनी ।
आर्यस्य त्वं विशालाक्षि भार्या भव यवीयसी ॥ १०
एतां विरूपामसतीं करालां निर्णतोदरीम् ।
भार्यां वृद्धां परित्यज्य त्वामेवैष भजिष्यति ॥ ११
को हि रूपमिदं श्रेष्ठं संत्यज्य वरवर्णिनि ।
मानुषीषु वरारोहे कुर्याद्भावं विचक्षणः ॥ १२
इति सा लक्ष्मणेनोक्ता कराला निर्णतोदरी ।
मन्यते तद्वचः सत्यं परिहासाविचक्षणा ॥ १३
सा रामं पर्णशालायामुपविष्टं परंतपम् ।
सीतया सह दुर्धर्षमब्रवीत्काममोहिता ॥ १४
इमां विरूपामसतीं करालां निर्णतोदरीम् ।
वृद्धां भार्यामवष्टभ्य न मां त्वं बहु मन्यसे ॥ १५

---

सूर्पनखीं; Dt1 D4.6 T3 G3 Cg.t शूर्पनखीं; D8 °नखां; G2 °णखां. M3 वाक्यं; M3( before corr. कृत्वा ) स्मृत्वा ( for स्मित्वा ). Ś1 Ñ1 D1–3 ततः सूर्पणखीं( Ś1 Ñ1 शूर्पनखीं; D1 °खां ) वाक्यं. —$^{d}$ ) Ś1 वाक्यम्; M पुनर् ( for युक्तम् ). —For 8$^{cd}$, Ñ2 V B D5.7 subst. :

314* वीक्ष्य शूर्पणखां वाक्यं ततस्तामिदमब्रवीत् ।

[ V सूर्पणखां. B1 श्रुत्वा ( for ततस् ). ]

9 $^{a}$) D6 मम ( hypm. ) ( for मे ). Ś1 Ñ V B D1–3.5.7 M3 दासी त्वं ( for मे दासी ). —$^{b}$) Ś1 Ñ V B Dm1 D1–3.5.7.8 G3 अर्हसि ( for इच्छसि ). —$^{c}$ ) Ñ V B D1–3.5.7 योहम्. Ś1 एवमुक्तस्तु राक्षस्या ( cf. 8$^{a}$ ). —$^{d}$ ) D6 भ्राता ( for भ्रात्रा ). Dm1 D8 G2.3 M3 -वर्णिनि ( for °नी ). Ś1 Ñ1 D1–3 भ्रात्रा( Ś1 D1 °ता ) कनकवर्णिनि( D2 °नी ); Ñ2 V B D5.7 भ्रात्रा ज्येष्ठेन भाविनी( V D5.7 °नि ). ❀ Cg : अकमलवर्णिनीत्यपि छेदः. ❀ —After 9, G3 ins. :

315* दासोऽहं राघवेन्द्रस्य ज्येष्ठस्य मम भामिनी ।

10 M3 om. ( hapl. ) 10$^{ab}$. Dg1 reads 10 in marg. —$^{a}$ ) B2 सिध्यर्था ( for सिद्धा° ). M2 सुसमिद्धासि सिद्धार्था. —$^{b}$ ) Dm1 D8 G1.3 वर- ( for [ अ ]मल- ). Ś1 Ñ1 D1–3 M1.2 शुचि( D1.3 °दि; M1.2 मुदि )ता कामरूपिणी; Ñ2 V B D5.7 विदुषः कामचारि( V2 °रूपि; B4 °तारि )णी. —$^{c}$ ) Ñ2 V B D5.7 [ ए ]व; D3 तु ( for त्वं ). —$^{d}$ ) Ś1 Ñ1 D1.3 भार्या भवितुमर्हसि.

11 M1 om. 11–12. —$^{a}$ ) Dm1 D8 T1.2 G1 M2.3 Cg.k एनां; D3 एवं; D4 वरां ( for एतां ). B1 अरूपाम् ( for वि° ). D1 वृद्धां च ( for असतीं ). —$^{b}$ ) Ś1 marg.; D3.6 करालीं ( for °लां ). Ś1( *sup. lin.* also निम्नतो° as in D1 ) निर्दितो°; V1 B2 निह्नुतो°; B1( after corr. as in text ) D3 G1.3 निर्णितो°; D1.2 निम्नतो°; D5.7 विनतो°; M2 ( after corr. *inf. lin. sec. m.* as in text ) निर्मितो° ( for निर्णतो° ). ❀ Cr : निर्णीतं निरतिशयनिम्नमुदरं यस्याः सा. ❀ —D2 reads from परित्यज्य in $^{c}$ up to 15$^{b}$ in marg. —$^{c}$ ) D1 शीघ्रं ( for वृद्धां ). G2 M2 transp. भार्यां and वृद्धां. —$^{d}$ ) Ñ2 V B D5.7 [ आ ]र्यो ( for [ ए ]ष ). Ñ2 D6 भविष्यति; G2 भरि° ( for भजि° ).

12 M1 om.; D2 reads in marg. 12 ( for both, cf. v.l. 11 ). —$^{a}$ ) Ñ2 V B1.2.4( marg. also ) D5.7 त्यक्त्वा; B3.4 Dm1 D8 G3 दृष्ट्वा ( for श्रेष्ठं ). —$^{b}$ ) Dt1 T1.2 G M3 -वर्णिनी ( for °नि ). Ñ2 V B D5.7 दिव्यं तव विलासिनि( B1.2 °नी ). —$^{c}$ ) Ś1 Ñ1 Dg1 Dm1 D8 मानुषेषु; B1 °षीह; D7 °षीव ( for °षीषु ). —$^{d}$ ) Ś1 Ñ V B D1–3.5.7 भावं कुर्याद् ( by transp. ); D8 रतिं कुर्याद् ( for कुर्याद्भावं ).

13 D2 reads 13 in marg. ( cf. v.l. 11 ). —$^{a}$ ) M1 इत्येवं. —$^{b}$ ) Dt1 Dm1 D8 करालीं. Ś1 D2 निम्नतोदरी; Ñ2 D5.7 विनतो°; V1 B2 निह्नुतो°; D3 G1.3 निर्णितो°; D7 °तोदरा; M2( after corr. *inf. lin. sec. m.* as in text ) निर्मितो° ( for निर्णतोदरी ). —M1 om. 13$^{cd}$. —$^{c}$ ) Dg1 D4.8 T1.2 G1.2 M2.3 तथ्यं; Dm1 G3 पथ्यं ( for सत्यं ). Ś1 Ñ1 D1–3 राक्षसी तद्वचः श्रुत्वा; Ñ2 V B D5.7 मेने सा( V B2.3 च; B1.4 [ स ]थ ) सत्यमेवेति. —$^{d}$ ) Ś1 Ñ1 D1–3 परिहासविचक्षणा; Ñ2 V B D5.7 M2 परिहासमदक्षिणा.

14 D2 reads 14 in marg. ( cf. v.l. 11 ). —$^{a}$ ) Ś1 Ñ1 D1–3 रामं तु ( for सा रामं ). —$^{b}$ ) Ś1 Ñ1 D1–3 महाबलं ( for परंतपम् ). —For 14$^{ab}$, Ñ2 V B D5.7 M2 subst. :

316* ततः सा राघवं भूयः समुपेत्य महाद्युतिम् ।

[ Ñ2 V B1–3 समुत्पत्य ( for °पेत्य ). ]

—$^{c}$ ) Ś1 Ñ1 D1–3 ससीतं तं( D1 सु ) दुराधर्षं. —$^{d}$ ) Ś1 Ñ1 D1–3 अवदत् ( for अब्रवीत् ). V2 अब्रवीत्पूर्वदर्शना; B3 इदं वचनमब्रवीत्. —After 14, Ñ2 V B D5.7 ins. :

317* अहं त्वदभिकामा च राम त्वत्पूर्वदर्शना ।
चिराय भव मे भर्ता सीतया किं तवानया ।

[ ( l. 1 ) B1 -दर्शनात्; D5 -दर्शनं ( for -दर्शना ). —( l. 2 ) V1 मे भव ( by transp. ). B1 [ अ ]नघ ( for °नया ). ]

15 D2 reads 15$^{ab}$ in marg. ( cf. v.l. 11 ). Ś1 om. 15$^{ab}$. —$^{a}$ ) D2 एतां; K( ed. ) Cm एनां ( for इमां ). Dg1 अरूपाम्; M2 अनार्याम्; M3 करालाम् ( for विरू° ). —$^{b}$ ) Dm1 D8 करालीं; M3 विरूपां ( for करालां ). B2.3( *sup. lin.* also as in text ) निह्नुतो°; D1.2 निम्नतो°; D3 G1.3 निर्णितो°; D5.7 विनतो°; M2 ( after corr. as in text ) निर्मितो°; G( ed. ) निःसृतो° ( for निर्णतोदरीम् ). 15$^{ab}$ = 11$^{ab}$ with v.l. इमां for एतां. —$^{c}$ ) Ś1 Ñ1 D1.2( m. ).3 T3 G1 भार्यां वृद्धाम् ( by transp. ). Ñ1 T3 परित्यज्य ( for

अद्येमां भक्षयिष्यामि पश्यतस्तव मानुषीम् ।
त्वया सह चरिष्यामि निःसपत्ना यथासुखम् ॥ १६
इत्युक्त्वा मृगशावाक्षीमलातसदृशेक्षणा ।
अभ्यधावत्सुसंक्रुद्धा महोल्का रोहिणीमिव ॥ १७
तां मृत्युपाशप्रतिमामापतन्तीं महाबलः ।
निगृह्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ॥ १८
क्रूरैरनार्यैः सौमित्रे परिहासः कथंचन ।
न कार्यः पश्य वैदेहीं कथंचित्सौम्य जीवतीम् ॥ १९
इमां विरूपामसतीमतिमत्तां महोदरीम् ।
राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि ॥ २०
इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पश्यतः ।
उद्धृत्य खड्गं चिच्छेद कर्णनासं महाबलः ॥ २१
निकृत्तकर्णनासा तु विस्वरं सा विनद्य च ।
यथागतं प्रदुद्राव घोरा शूर्पणखा वनम् ॥ २२ G. 3. 24. 23 B. 3. 18. 22 L. 3. 23. 22

अवष्टभ्य ). —d ) Ś1 Ñ1 Dg1 Dm1 D1–3.8 G3 मां त्वं न ( by transp.); Ñ2 V2 B D7 M त्वं मां न ( by transp.); V1 त्वं किं मां न ( hypm.); D4 T G1 मां न त्वं ( by transp.) ( for न मां त्वं ). D5 त्वं मां बहु न मन्यसे.

16 a) Ñ1 [ अ ]हं; M1 [ ए ]नां ( for [ इ ]मां ). Ś1 D1–3 भक्षयित्वा( Ś1 °य्ये )हं ( for °ष्यामि ). —b) Ś1 D2 प्रेक्षतस् ( for पश्यतस् ). Ñ1 D1.3 प्रेक्षतस्ते ह( D3 हि ) मानुषीं; Ñ2 V B D5.7 पश्यतस्तेति( V [B1–3 °मि )मानिनः( V1 °नतः ). —c) Ñ1 रमिष्यामि ( for चरि° ). Ñ2 V B D5.7 ततस्त्वया रमिष्येहं( B1 °ष्यामि ). —d) Ś1 Ñ2 D2.5 निःसपत्नी ( for °त्ना ).

17 a) Ñ1 [ अं ]बुजपत्राक्षीम् ( for मृगशावा° ). —b) B3 ( m. also ).4 सालात- ( for अलात- ). —c) Dg1 Dt1 D6 T3 अभ्यगच्छत्; M2 °द्रवत् ( for अभ्यधावत् ). D4 सुसंवृद्धा ( for °क्रुद्धा ). Ś1 Ñ2 V B D1.2.5.7 अभ्यधावत वैदेहीं ( Ś1 D1.2 संक्रुद्धा ). —d) V1 transp. रोहिणीम् and इव.

18 a) D6 om.; M2 *sec. m.* for तां. —b) Ñ2 V B1.3.4 D5.7 महाबलां; B2 अवेक्ष्य सा ( sic ) ( for महाबलः ). —After 18ab, B2 ( om. l. 1 ) ins.; while B4 ins. after 18:

318* तां मृत्युपाशप्रतिमामापतन्तीमवेक्ष्य सा ।
प्रावेपत भयात्सीता प्रवाते कदली यथा ।
ततस्तां विकृतां रामो हन्तुं सीतामुपागताम् ।

[ For l. 2, cf. 3.2.14cd. ]

—c) Ñ2 V1 B1.3.4 D5.7 निवार्य; D1 विगृह्य ( for निगृह्य ). Ñ1 परितस्; Ñ2 V B3.4 ( m. also as in text ) D5.7 कुपितां; G1 सहसा ( for कुपितस् ). —For 18cd, B2 subst., while B4 cont. after 318*:

319* बलान्निगृह्य करयोर्लक्ष्मणं वाक्यमब्रवीत् ।

—Then B2 cont. :

320* इमां पश्य महाबाहो राक्षसीं विकृताननाम् ।
सीतां हन्तुं व्यवसितां परिहासाविचक्षणाम् ।

19 a) Ñ2 V प्रहृष्टैः; B D5.7 प्र( B1 सु )दुष्टैः ( for अनार्यैः ). —b) Ś1 Ñ V B D1.3.5 7 संप्रहासः; D2 सप्रसंगः ( for परिहासः ). —c) Dg1 marg.; D5 om. for न. Ś1 Ñ1 V B D2.3 जीवति ( for °तीम् ). —After 19, B2 ins.:

321* कृतपापापि न स्त्रीत्वाद्वधमर्हसि लक्ष्मण ।

20 a) Ś1 D2 विरुद्धां ( for विरूपाम् ). Ś1 Ñ V B D1–3.5 M2 दुर्वृत्ताम् ( for असतीम् ). —b) Ñ V B D1.2.5.7 G1 अतिवृद्धां( Ñ1 °त्तां ); D3 °मात्र-; G3 M1 पृथुमध्यां ( for अतिमत्तां ). Ś1 महोदरीं भयानकां. —d) Ś1 Ñ2 V B D1.2.5.7 निवर्तयितुम्; D3 नासाकर्तनम् ( for विरूपयितुम् ).

21 a) Ś1 Ñ V B D1–3.5.7 क्रुद्धस् ( for तस्याः ). —b) Ś1 Ñ V1 D1–3 ततो; V2 B D5.7 तस्य ( for क्रुद्धो ). D4 T2 Ck पार्श्वतः; T1 वाक्यतः ( for पश्यतः ). —c) Ś1 Ñ1 D1.3 विकृष्य; D3 निःकृष्य ( for उद्धृत्य ). —d) Ś1 Ñ1 Dt1 Dm1 D2.6 T1 Ck.t कर्णनासे; D1.3 G1 M3 °सां; G2.3 M2 °सौ; Cm.g as in text ( for °सं ). —For 21cd, Ñ2 V B D5.7 subst. :

322* खड्गेन तस्याश्चिच्छेद कर्णनासं निगृह्य ताम् ।

[ B1.3 -नासां ( for -नासं ). ]

—After 21, M2 ins. :

323* प्रगृह्य बलवत्पीड्य केशेष्वाकृष्य पातयत् ।
पादेनाक्रम्याग्रवासां पश्पुरन्तं रुपापिता ( sic ) ।

22 a) V G2 विकृत्त-; D2 निवृत्त-; D3 निकृंत-; G1 विच्छिन्न- ( for निकृत्त- ). Ñ2 D5 हि; D7 [ आ ]दि ( for तु ). Ś1 निकृत्य कर्णनासां तु; M2 निकृत्य * * * साभ्यां ( lacuna ). —b) D3 विस्वरे ( for °रं ). Ñ1 M2 तु ( for सा ). Ś1 Ñ1 Dm1 D1–3 वै ( for च ). Ñ2 V B D5.7 विस्वरं प्रति( B2.3 °ति )नद्य सा. —cd) Ś1 Ñ1 D2 विदुद्राव; Ñ2 V B D5.7 जगामाशु; D1 तु दुद्राव ( for प्रदुद्राव ). Ś1 T1.2 G1 M3 शूर्पण ( Ś1 T2 °न )खी; Dg1 सूर्पनखी; Dm1 शूर्पनखी ( marg. also °णखी ); D8 T3 शूर्पनखा. Dg1 marg.; D6 वने ( for वनम् ). Ñ1 V1 D1–3 घोरं सूर्पणखी( V1 D3 °खा; D1 °नखा ) वनं ( V1 ततः ) ( for d ). M2 भूयोपि क्रोशमाना सा जगाम भ्रातरं प्रति.

G. 3. 24. 25
B. 3. 18. 23
L. 3. 23. 23

सा विरूपा महाघोरा राक्षसी शोणितोक्षिता ।
ननाद विविधान्नादान्यथा प्रावृषि तोयदः ॥ २३

सा विक्षरन्ती रुधिरं बहुधा घोरदर्शना ।
प्रगृह्य बाहू गर्जन्ती प्रविवेश महावनम् ॥ २४

ततस्तु सा राक्षससंघसंवृतं
खरं जनस्थानगतं विरूपिता ।
उपेत्य तं भ्रातरमुग्रतेजसं
पपात भूमौ गगनाद्यथाशनिः ॥ २५

ततः सभार्यं भयमोहमूर्छिता
सलक्ष्मणं राघवमागतं वनम् ।
विरूपणं चात्मनि शोणितोक्षिता
शशंस सर्वं भगिनी खरस्य सा ॥ २६

इति श्रीरामायणे अरण्यकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

23 Dt1 om. $23^{ab}$. Ñ2 V B D5.7 transp. $23^{ab}$ and $24^{ab}$.—$^{a}$) D1 या (for सा). Dm1 D8 G3 महानादा (for °घोरा).—$^{b}$) Ñ1 D1-3 बहुधा( D3 ददृशे ) रुधिरोक्षिता; Ñ2 D5.7 राक्षसी भीमदर्शना; V B राक्षसी भीम( V1 घोर )निस्वना.—For $23^{ab}$, Ś1 subst., while D1-3 ins. after $23^{ab}$ :

324* सा विरूपा प्रकृत्यैव वैरूप्यं चागता परम् ।

[ Ś1 गता ( for [ आ ]गता ). ]

—$^{c}$) G2 सुमहान् ( for विविधान् ).—$^{d}$) D1 जलक्लिन्नेव दुंदुभिः.

24 M2 om. $24^{ab}$. Ñ2 V B D5.7 transp. $23^{ab}$ and $24^{ab}$.—$^{a}$) Ñ2 V B2-4 D5.7 विक्षिपंती; B1 च क्षरंती ( for विक्षरन्ती ). Ñ1 विविधं ( for रुधिरं ). Ś1 D2 सासृक्सरंती विविधं.—$^{b}$) Ś1 Ñ V2 B D1-3.5.7 रुधिरोक्षिता; V1 शोणितोक्षिता; Dg1 °नं ( for घोरदर्शना ).—$^{c}$) Ś1 V1 D1 बाहुं. Ś1 D2.5 तर्जंती ( for गर्ज° ).—$^{d}$) Ś1 Dg1 D2 M2 महद्वनं ( for महा° ).—After 24, M2 ins. :

325* नानातरुसमाकीर्णं लतागहनसंकुलम् ।

25 $^{a}$) Ś1 D2 च सा; Dg1 तु तं; G3 तदा; M2 तु तद्- ( for तु सा ). Ś1 D1-3 -सेविते वने; Ñ1 -राजसेविते; Ñ2 V2 B2.4 D5.7 -संघ( D7 ** )संकटं; Dg1 Dm1 D8 -संघवृत्तं; Dt1 -संवृतं खरं; G1 °सेवितं ( for -संघसंवृतं ).—$^{b}$) Ś1 marg.; D3 -गतिं ( for -गतं ). Ś1 D2 विरूपा ( for °पिता ). Ñ1 खरं जगामाथ विरूपितासती.—$^{c}$) B1 उत्पत्य. Ś1 Ñ V B D1-3.5.7 वै ( for तं ). Dg1 Dm1 D4.8 T G M1.3 उग्र( M3 अभ्र )दर्शनं ( for °तेजसं ).—$^{d}$) Ñ2 V B D5.7 इव ( for यथा ).

26 B3 reads 26 in marg.—$^{a}$) D1 सभार्यां ( for सभार्यं ). Ś1 -पीडितं; Ñ1 D1-3 -पीडिता ( for -मूर्छिता ).—$^{b}$) D7 वने ( for वनम् ).—$^{c}$) Ś1 विरूपणाम्; Ñ2 B1 D1.3.5.7 विरूपितं; V2 °पिणं; B3 °पताम् ( for °पणं ). Ś1 B3 आत्मनि ( for चात्मनि ).—Dt1 om. $26^{d}$.—$^{d}$) B3 खराय ( for खरस्य ). D3 om. for सा.

Colophon.—*Sarga name* : Ś1 Ñ2 V1 B1 D1.3.5 शूर्पणखा( Ś1 °नखी; V1 D1 सूर्प°; D3 सूर्पणखी )विरूपकरणं; Ñ1 V2 B2-4 शूर्पणखा( Ñ1 सूर्पणखी; V2 सूर्प° )विरूपणं; D2 सूर्पणखीविरूपकरणः; D7 सूर्पणखाविरूपीकरणं.—*Sarga no.* ( figures, words or both ) : Ś1 Ñ1 B1.4 D2 om.; Ñ2 V2 B3 D7 24; V1 23; B2 25; Dg1 Dt1 Dm1 D4.6.8 T G M1 18; D1 22; D3 27; D5 14; M2.3 19.—After colophon, G concludes with श्रीरामाय नमः.

# १८

तां तथा पतितां दृष्ट्वा विरूपां शोणितोक्षिताम् ।
भगिनीं क्रोधसंतप्तः खरः पप्रच्छ राक्षसः ॥ १
बलविक्रमसम्पन्ना कामगा कामरूपिणी ।
इमामवस्थां नीता त्वं केनान्तकसमा गता ॥ २
देवगन्धर्वभूतानामृषीणां च महात्मनाम् ।
कोऽयमेवं महावीर्यस्त्वां विरूपां चकार ह ॥ ३
न हि पश्याम्यहं लोके यः कुर्यान्मम विप्रियम् ।
अन्तरेण सहस्राक्षं महेन्द्रं पाकशासनम् ॥ ४
अद्याहं मार्गणैः प्राणानादास्ये जीवितान्तकैः ।
सलिले क्षीरमासक्तं निष्पिबन्निव सारसः ॥ ५
निहतस्य मया संख्ये शरसंकृत्तमर्मणः ।
सफेनं रुधिरं रक्तं मेदिनी कस्य पास्यति ॥ ६
कस्य पत्ररथाः कायान्मांसमुत्कृत्य संगताः ।
प्रहृष्टा भक्षयिष्यन्ति निहतस्य मया रणे ॥ ७

G. 3. 25. 7
B. 3. 19. 10
L. 3. 24. 7

## 18

Ds begins with ॐ; M1 with श्रीरामाय नमः.

1 $^{a}$) Ś1 दृष्ट्वा; Dg1 G M1.3 तदा ( for तथा ). Dg1 पततीं ( for पतितां ). Ś1 तद्वद् ( for दृष्ट्वा ).—$^{c}$) Dg1 अंतिकां ( for भगिनीं ). Ś1 क्रोधसंपन्नां; Ñ1 D1.2 °संतप्तां; V B D5.7 M2 °ताम्राक्षः; D3 °संरक्तां; G1 °संरब्धः ( for °संतप्तः ).—After 1, Dg1 Dt1 D4.6 T1.2 G M ins.; while Dm1 D8 T3 ins. l. 1 and 6 after 1, and l. 2–5 after $3^{ab}$ :

326* उत्तिष्ठ तावदाख्याहि प्रमोहं जहि संभ्रमम् ।
व्यक्तमाख्याहि केन त्वमेवंरूपा विरूपिता ।
कः कृष्णसर्पमासीनमाशीविषमनागसम् ।
तुदत्यभिसमापन्नमङ्गुल्यग्रेण लीलया ।
कालपाशं समासज्य कण्ठे मोहान्न बुध्यते ।
यस्त्वामद्य समासाद्य पीतवान्विषमुत्तमम् ।

[ (l. 1) M2 मुहूर्तं ( for प्रमोहं ).—(l. 2) Dm1 G1 एवं रूप- ( for एवंरूपा ).—(l. 4) M3 तदाति ( sic ) ( for तुदति ). G1.3 M3 [ अ ]भिसमासीनन्; M1.2 [ अ ]भिसमासन्नम् ( for [ अ ]भिसमापन्नम् ).—G2 om. from the post. half up to केना in $2^{d}$.—(l. 5) D4 आसज्य ( subm. ) ( for समासज्य ). Dg1 T1.3 G1.3 M Cm.g कः कालपाशमासज्य ( for the prior half ). M3 तु ( for न ). D6 बध्यते; T3 G1 जायते; Cm$p$ जानते ( for बुध्यते ). ]

2 G2 om. up to केना in $^{d}$ ( cf. v.l. 326* ).—$^{a}$) D2 -संपन्नां ( for -सम्पन्ना ).—$^{b}$) D2 कामगां ( for कामगा ). Ñ2 V B D7 यथाकामविचा( B3 [ marg. also ] °हा )रिणी.—$^{c}$) Ñ2 V B D5.7 [ अ ]सि ( for त्वं ).—$^{d}$) G3 M2.3 [ अं ]तिकसमा ( for [ अ ]न्तकसमा ). Ś1 Ñ V B2–4 D1–3.5.7 युधि; B1 भुवि; Dg1 -गतां; Cv$p$ मता ( for गता ).

3 $^{a}$) Ñ2 D5.7 -सिद्धानां ( for -भूतानाम् ).—$^{b}$) Ñ2 V B D5.7 मुनीनां ( for ऋषीणां ). Ñ2 D5.7 भावितात्मनां ( for च महा° ).—After $3^{ab}$, Dm1 D8 T3 ins. l. 2–5 of 326*.—$^{c}$) Dg1 D5 G2 एव ( for एवं ). B2 महासत्त्वां; Dm1 D8 G3 मम त्वां( G3 त्वं ) हि; D4 T1.2 विरूपां त्वां ( for महावीर्यस् ).—$^{d}$) B2 Dm1 D8 G3 विरूपां च( B2 हि ); D4 T1.2 महावीर्यश् ( for त्वां विरूपां ). Ñ V B D3.5.7 यः; D1 सः ( for ह ).

4 Dg1 reads $4^{ab}$ in marg.—$^{a}$) Ś1 Ñ V B D1–3.5.7 तं ( for [ अ ]हं ).—$^{b}$) Dg1 कः ( for यः ). Ś1 Ñ V B1–3 ( marg. also ईदृशां तव ).4 D1–3.5.7 अप्रियं मम ( for मम विप्रियम् ).—$^{cd}$) Dg1 Dt1 Dm1 D6.8 T3 G2 M1 Cm अमरेषु; Cm$p$ as in text ( for अन्तरेण ). ※ Ct : क्वचित्तु अंतरेण सहस्राक्षमित्येव पाठः. ※ B2 पाकनाशनं ( for पाकशासनम् ). M2 ऋते देवात्सहस्राक्षान्महेंद्रात्पाकशासनात्.

5 $^{a}$) Ś1 Ñ1 V D1–3 तस्य; Ñ2 B D5.7 कस्य ( for अद्य ). D7 प्राणैः ( for प्राणान् ).—$^{b}$) Ñ2 D5.7 नाशये; G1 आसाद्ये ( sic ) ( for आदास्ये ). Ś1 जीवितं शनैः; Dt1 D6 T1.2 G2 M2.3 Ct जीवितांतगैः ( for °न्तकैः ).—$^{c}$) D1 सलिलैः.—$^{d}$) Ś1 D2 निष्पिबेत्; M1 निष्पन्नम् ( for निष्पिबन् ). Ś1 Ñ1 D1–3 सारसो यथा; G2 इव सागरः ( sic ) ( for इव सारसः ).—For $5^{cd}$, Ñ2 V B D5.7 subst.; M2 cont. after l. 1 of 328* :

327* सरसः सलिलं स्तोकमादित्यो रश्मिभिर्यथा ।

[ Ñ2 D5.7 सरसां; B2 सबलः ( for सरसः ). ]

6 $^{a}$) D4 मया सज्ये ( sic ); D7 G3 M1.3 मया सख्ये ( sic ); M2 महासख्ये ( sic ) ( for मया संख्ये ).—$^{b}$) V1 B2.3 शरेणाकृत्त-; D1 शरसंक्रांत-; D4 शरसंवृत्त- ( for शरसंकृत्त- ). Ś1( also -चर्मणः ) -शर्मणः; Ñ2 V2 B1.4 D1.3.5.7 M2 -चर्मणः; V1 -कर्मणा ( for -मर्मणः ).—$^{c}$) Ś1 अद्येह; D2 अद्येयं ( for सफेनं ). Ś1 Ñ1 D1–3 तप्तं; Ñ2 V B D5.7 M2 भूरि; Dt1 D6 कस्य; M3 स्निग्धं ( for रक्तं ).—$^{d}$) Dt1 D6 पातुमिच्छति; D2 T3 तस्य पास्यति; D7 lacuna ( for कस्य पास्यति ).—After 6, M2 ins. :

328* कस्याहं समरे जीवमासाद्ये शरवृष्टिभिः ।
कः शिरस्यग्निमाधाय विश्वस्तः स्वपते सुखम् ।

[ After l. 1, M2 cont. 327*. ]

7 $^{a}$) G1 गृध्रा ( for कायान् ).—$^{b}$) Ś1 Ñ1 D1.2 मांसानि; D3 मांसान् ( for मांसम् ). V1 B2–4 Dg1 D4 T2 G2 M3

G. 3. 25. 9 B. 3. 19. 11 L. 3. 24. 11 तं न देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
मयापकृष्टं कृपणं शक्तास्त्रातुं महाहवे ॥ ८
उपलभ्य शनैः संज्ञां तं मे शंसितुमर्हसि ।
येन त्वं दुर्विनीतेन वने विक्रम्य निर्जिता ॥ ९
इति भ्रातुर्वचः श्रुत्वा क्रुद्धस्य च विशेषतः ।
ततः शूर्पणखा वाक्यं सबाष्पमिदमब्रवीत् ॥ १०
तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ ११
गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ ।
देवौ वा मानुषौ वा तौ न तर्कयितुमुत्सहे ॥ १२
तरुणी रूपसम्पन्ना सर्वाभरणभूषिता ।
दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥ १३
ताभ्यामुभाभ्यां संभूय प्रमदामधिकृत्य ताम् ।
इमामवस्थां नीताहं यथानाथासती तथा ॥ १४

उद्धृत्य ( for उत्कृत्य ). Ś1 Ñ1 D1.3 सत्वराः; Ñ2 V B D5.7 संगतं; D2 सत्वरं; G1 संगतां ( sic ) ( for संगताः ).—$^{c}$ ) D4 प्रहृष्टो ( sic ); D8 प्रविष्टा ( for प्रहृष्टा ). D2 संप्रहृष्टा भविष्यंति. —$^{d}$ ) Ś1 Ñ V B D2.3.5.7 युधि; D1 मृधे ( for रणे ).

8 $^{a}$ ) Ś1 Ñ1 D2 तत्र; D7 तेन ( for तं न ). Dm1 न देवा न च गंधर्वा.—$^{b}$ ) Ñ2 V B D5.7 दानवाः ( for राक्षसाः ). Dt1 D8 पिशाचा न च राक्षसाः.—$^{c}$ ) Ś1 Ñ V B D1–3.5.7 M2 [ उ ]पसृष्टं ( Ś1 °ष्टे; M2 °ष्टः ); Dm1 D6.8 T2 [ अ ]प्रकृष्टं; D4 [ अ ]वकृष्टं ( for [ अ ]पकृष्टं ).—$^{d}$ ) M3 शक्ता स्थातुं ( for शक्तास्त्रातुं ). Ś1 Ñ1 V2 D2.3 महामृधे; D1 अथा युधि; D4.6 आहवे( subm. ); D5 G1.3 इहाहवे ( for महाहवे ). Dg1 T अ( Dg1 न )शक्तास्त्रातुमाहवे; G2 शक्ता रक्षितुमाहवे.

9 $^{a}$ ) Ñ1 B3 ( also ) Dm1 D8 G3 ततः ( for शनैः ). —$^{b}$ ) M2 मम ( for तं मे ).—$^{c}$ ) T3 एका; M2 केन ( for येन ).—$^{d}$ ) Ś1 Ñ1 D1–3 M2 रणे ( for वने ). D1.4 T1.2 G1.2 निष्क्रम्य; D3 विक्रम- ( for विक्रम्य ). Ñ2 V B D5.7 विरूप( Ñ2 D5.7 °वर्ण )वदना कृता.

10 $^{a}$ ) Ś1 Ñ1 B2.4 D1–3.7 भ्रातृ- ( for भ्रातुर् ).—$^{b}$ ) Ś1 D2 तु ( for च ). Ñ2 V B D5.7 क्रुद्धस्य वदतस्तथा; M1 क्रोधयुक्तं विशेषतः.—After 10$^{ab}$, Dg1 T3 ins.:

329* रावणस्य विनाशाय खरस्य च तथा सती ।
राक्षसानां विनाशाय कुलस्य स्वजनस्य च ।

—$^{c}$ ) Ś1 Dm1 D2–4 T2 G1 शूर्पणखी ( for °खा ).—$^{d}$ ) Ñ2 V B D5.7 बाष्पगद्गदमब्रवीत्.

11 $^{b}$ ) M2 महाभुजौ ( for महाबलौ ).—$^{c}$ ) M2 पुंडरीकपलाशाक्षौ. ❀ Cv : चीरकृष्णाजिनाम्बरावित्यतः परं फलमूलाशनौ दांतौ तापसौ धर्मचारिणौ। पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ। इत्येष कोशेषु भ्रंशितश्लोकश्च द्रष्टव्यः। अन्यथा व्यक्तमाख्याहि केन त्वमेवंरूपा विरूपितेत्यादेः खरप्रश्नस्य उत्तरमेतन्न घटते. ❀—After 11, Dg1 Dt1 Dm1 D4.6.8 T G M1.3 ins.; while M2 ins. after 12 :

330* फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ ।
पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ ।

[ ( l. 1 ) Dg1 Dm1 फलमूलाशिनौ ( for °शनौ ) and ब्रह्मचारिणौ ( for धर्म° ).—( l. 2 ) M2.3 [ इ ]मौ ( for [ आ ]स्तां ). T2 धर्मचारिणौ ( for रामलक्ष्मणौ ). Cv alone supports this passage after st. 11.]

—G2 cont.:

331* शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम् ।

12 $^{c}$ ) T3 G1 M3 दानवौ ( for मानुषौ ). Ñ1 तौ वा ( by transp. ); Cr वा कौ ( for वा तौ ). Ñ2 V2 B1.3.4 D5.7 देवौ वा तौ मनुष्यौ वा; V1 B2 देवौ तौ वा मनुष्यौ वा; Dt1 D6 देवौ वा दानवावेतौ.—After 12, Ñ2 V B D5.7 ins.:

332* आत्मसंभावितौ वीरौ राजपुत्रौ मनस्विनौ ।
तापसौ च धनुष्पाणी सिंहविक्रान्तगामिनौ ।
त्वदीयं वनमाक्रम्य कृत्वा चाश्रममण्डलम् ।
तत्र तौ बलसम्पन्नौ वसतो रावणानुज ।

[ ( l. 1 ) V आत्मानं भावितौ वीरौ; B1 पुंडरीकपलाशाक्षौ ( for the prior half ). V यशस्विनौ ( for मनस्विनौ ).—( l. 2 ) B3 तौ ( for च ). B2 -विक्रम- ( for -विक्रान्त- ).—( l. 3 ) B4 वासम् ( for वनम् ). V1 B2 आश्रित्य ( for आक्रम्य ). Ñ2 D7 हि; D5 स्व- ( for च ).—( l. 4 ) Ñ2 D5.7 ततस् ( for तत्र ). V वनसंपन्नौ ( for बलसम्पन्नौ ). B2 वसंतौ ( for वसतो ).]

—After 12, M2 ins. 330* and then cont. ( followed by 335* ) :

333* तयोः समीपे युवती सर्वाभरणभूषिता ।

13 $^{c}$ ) V1 B1–3 D6.7 दृष्ट्वा ( for दृष्टा ).—After 13, M2 ins.:

334* अथ ताभ्यां समाक्रम्य वैरूप्यं कृतमीदृशम् ।

—Thereafter cont. l. 1 of 336*.

14 For 14$^{ab}$, Ñ2 V B D5.7 subst.; M2 cont. after 333* :

335* तां च तौ चाहमारब्धा बलाद्भक्षयितुं वने ।

[ M2 सर्वम् ( for चाहम् ). Ñ2 आलब्धा ( for आरब्धा ). D5.7 तां तदैवाहमारब्धा ( for the prior half ). M2 तदा ( for वने ).]
—D4 om. ( hapl. ) 14$^{c}$–16$^{d}$.—$^{c}$ ) Ś1 Ñ V B D1–3.5.7 [ अ ]स्मि ( for [ अ ]हं ).—$^{d}$ ) Ś1 Ñ V1 B D1–3.5.7 G2 यथानाथवती तथा; Dm1 G3 M1.2 यथानार्यासती तथा. —After 14, Ñ2 V B D5.7 ins.; while M2 cont. l. 1 after 334* and ins. l. 2 after 14 :

तस्याश्चानृजुवृत्तायास्तयोश्च हतयोरहम् ।
सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥ १५
एष मे प्रथमः कामः कृतस्तात त्वया भवेत् ।
तस्यास्तयोश्च रुधिरं पिबेयमहमाहवे ॥ १६
इति तस्यां ब्रुवाणायां चतुर्दश महाबलान् ।
व्यादिदेश खरः क्रुद्धो राक्षसानन्तकोपमान् ॥ १७
मानुषौ शस्त्रसम्पन्नौ चीरकृष्णाजिनाम्बरौ ।
प्रविष्टौ दण्डकारण्यं घोरं प्रमदया सह ॥ १८
तौ हत्वा तां च दुर्वृत्तामुपावर्तितुमर्हथ ।
इयं च रुधिरं तेषां भगिनी मम पास्यति ॥ १९
मनोरथोऽयमिष्टोऽस्या भगिन्या मम राक्षसाः ।
शीघ्रं संपाद्यतां गत्वा तौ प्रमथ्य स्वतेजसा ॥ २०
इति प्रतिसमादिष्टा राक्षसास्ते चतुर्दश ।
तत्र जग्मुस्तया सार्धं घना वातेरिता यथा ॥ २१ G. 3. 25. 25 B. 3 19. 26 L. 3. 24. 22

इति श्रीरामायणे अरण्यकाण्डे अष्टादशः सर्गः ॥ १८ ॥

---

336* क्रोशन्त्या विस्फुरन्त्याश्च बलादाक्रम्य संयुगे ।
त्वया नाथेन पश्येमां धर्षणां मम वै कृताम् ।

[ Ñ$_2$ B$_4$ D$_{5.7}$ आकृष्य ( for आक्रम्य ). —(l. 2) V$_1$ त्वयि नाथे तु; B$_1$ त्वया रथेन ( sic ); B$_4$( marg. also ) त्वयि नाथेपि ( for त्वया नाथेन ). ]

—Thereafter M$_2$ cont. 337*.

15 D$_4$ om. 15 ( cf. v.l. 14 ). —$^{a}$ ) Ś$_1$ तु ( for च ). Ñ$_1$ तथाति- ( for तस्याश्च ). —$^{b}$ ) Ś$_1$ Ñ$_1$ D$_{1-3}$ त्वया; Dm$_1$ त्वहं ( for अहम् ). D$_8$ हतयोरस्म्यहं ( sic ). —For 15$^{ab}$, Ñ$_2$ V B D$_{5.7}$ subst.; while M$_2$ cont. after l. 2 of 336* :

337* त्वत्प्रसादात्तयोश्चैव तस्याश्चैव निशाचर ।

—$^{d}$ ) M$_3$ हतयो ( for रुधिरं ). Ñ$_1$ **संधिषु ( for रणमूर्धनि ).

16 D$_4$ om. 16 ( cf. v.l. 14 ). V$_2$ illeg. up to वीर in $^{b}$. —$^{a}$ ) V$_1$ एवं ( for एष ). Ś$_1$ D$_2$ परमः; Ñ$_2$ V$_1$ B D$_{5.7}$ [ ऽ ]भिम( B$_1$ D$_5$ °हि )तः ( for प्रथमः ). Dt$_1$ om. कामः. —$^{b}$ ) Dg$_1$ Dt$_1$ Dm$_1$ D$_{6.8}$ T$_3$ G$_3$ तत्र ( for तात ). Ś$_1$ D$_1$ भवेत्त्वया ( by transp. ) ( for त्वया भवेत् ). Ñ$_1$ कृतं देहतयोस्त्वया ( sic ); Ñ$_2$ B D$_{5.7}$ त्वयातीव कृ( D$_{5.7}$ °या तावत्कृ )तो भवेत् ; V त्वया वीर( V$_2$ illeg. ) कृतो भवेत्; D$_2$ कृतकामा भवेत्त्वया; D$_3$ कृतस्तावद्भवेत्त्वया. —$^{c}$ ) Ś$_1$ Ñ V B D$_{1-3.5.7}$ M$_1$ तयोस्तस्याश्च ( by transp. ). —$^{d}$ ) Ś$_1$ Ñ$_1$ D$_{1-3}$ यत्पिबेयं चमूमुखे; Ñ$_2$ V B D$_{5.7}$ यत्पिबेयमहं युधि.

17 $^{a}$ ) D$_4$ इमामवस्थां ( hypm. ) ( for इति तस्यां ). Ñ$_2$ V B D$_{5.7}$ इत्युक्तः स तया( Ñ$_2$ D$_{5.7}$ °दा ) तत्र( V$_1$ वीरश्च ). —$^{b}$ ) Ñ$_2$ V B D$_{5.7}$ निशाचरान् ( for महाबलान् ). —$^{c}$ ) B$_1$ आदिदेश. Ś$_1$ Ñ$_1$ D$_{1-3}$ M$_1$ ततः ( for खरः ). —After 17, M$_2$ ins. :

338* धूम्रः शूरो हरिः केतुर्भीषणोग्रो दृढो हलिः ।
मणिर्मन्दः पृथुर्माली माल्या केशी चतुर्दश ।

18 $^{a}$ ) Ś$_1$ B$_4$ D$_{2.4}$ T$_3$ M$_1$ रूपसंपन्नौ; D$_3$ सत्त्व° ( for शस्त्र° ). —$^{b}$ ) Ñ$_1$ ततश्चैव महाबलौ. —$^{c}$ ) D$_7$ दंड***. —After 18, G$_2$ ins. :

339* युष्माभिस्तौ निहन्तव्यौ तपसा तापसाविमौ ।

19 $^{a}$ ) V$_1$ B$_1$ तां ( for तौ ). V$_1$ B$_1$ तौ ( for तां ). V$_1$ B$_1$ दुर्वृत्ताव् ( for दुर्वृत्ताम् ). —$^{b}$ ) Cm.g अपावर्त्तितुं ( for उपा° ). —$^{c}$ ) Ñ$_2$ B$_{2-4}$ D$_{5.7}$ M$_2$ ममेयं; V ममैषा; B$_1$ यतो मे ( for इयं च ). Ñ$_2$ V B Dt$_1$ Dm$_1$ D$_{5-8}$ M$_2$ भगिनी ( for रुधिरं ). D$_3$ इयं कुरुधिरं तेषां. —$^{d}$ ) Dt$_1$ Dm$_1$ D$_{4.6.8}$ रुधिरं ( for भगिनी ). Ñ$_2$ V B D$_{5.7}$ M$_2$ पातुमिच्छति( B$_3$ °सि ) शोणितं. ❀ Ct : मम भगिनी तेषां रुधिरं पास्यतीत्यन्वयः । अत्र रुधिरं मम पास्यतीति विपरीतार्थापत्तियुक्तवाक्येन तेषां संनिधानप्रयुक्तो बुद्धिमोहः सूचितः कविना. ❀ —After 19, M$_2$ ins. :

340* क्षिप्रं संपाद्यतामद्य तौ हत्वा रामलक्ष्मणौ ।

20 T$_2$ om. 20. —$^{a}$ ) Ñ$_2$ V B D$_{5.7}$ तु ( for ऽस्या ). Ś$_1$ मनोरथोवशिष्टोस्या. —$^{c}$ ) D$_4$ संपद्यतां. K( ed. ) तौ च ( for गत्वा ). Ñ$_2$ B$_{2-4}$ D$_{5.7}$ क्षिप्रं संपाद्यतामद्य; V क्षिप्रं संपा( V$_2$ °प )द्यतामेष; B$_1$ क्षिप्रं प्रसाध्यतामद्य. —$^{d}$ ) D$_3$ तं ( for तौ ). Ś$_1$ प्रमाथ्य ( for प्रमथ्य ). Ñ$_1$ वधं च मम नु तेजसा ( sic ); Ñ$_2$ V B D$_{5.7}$ प्रमथ्य( V °थ्या ) स्वेन तेजसा. —After 20, Ś$_1$ Ñ V B Dt$_1$ D$_{1-3.5-7}$ G$_1$ M ins. :

341* युष्माभिर्निहतौ दृष्ट्वा तावुभौ भ्रातरौ रणे ।
इयं प्रीता च तुष्टा च युधि पास्यति शोणितम् ।

[ ( l. 1 ) Dt$_1$ om. भ्रातरौ. —( l. 2 ) Ñ$_1$ च हृष्टा पीता ( for प्रीता च तुष्टा ). D$_3$ M$_2$ इयं प्रीता प्रहृष्टा च ( for the prior half ). Ś$_1$ Ñ$_1$ D$_{1-3}$ क्षतजं युधि पास्यति ( for the post. half ). Dt$_1$ D$_6$ G$_1$ M$_{1.3}$ इयं प्रहृष्टा( G$_1$ M$_3$ प्रीता च ) मुदिता रुधिरं युधि पास्यति. ]

21 $^{b}$ ) Ś$_1$ Ñ$_2$ V B D$_{1-3.5.7}$ शूलपाणयः ( for ते चतुर्दश ). —$^{c}$ ) Ś$_1$ Ñ V$_1$ B$_{1.3.4}$ D$_{1-3.5}$ [ आ ]जग्मुस् ( for जग्मुस् ). G$_1$ तथा ( for तया ). —$^{d}$ ) Ñ$_2$ B$_{1-3}$ D$_{5.7}$ Cm.t मेघा; Dt$_1$ D$_6$ घन- ( for घना ). Ñ V B$_{1.2.4}$ Dt$_1$ D$_{1.3.5-7}$ इव ( for यथा ). Ś$_1$ D$_2$ राघवौ यत्र तिष्ठतः. —After 21, Ñ$_2$ V B D$_{5.7}$ ins. :

# १९

G. 3. 26. 1 B. 3. 20. 1 L. 3. 25. 1

ततः शूर्पणखा घोरा राघवाश्रममागता ।
रक्षसामाचचक्षे तौ भ्रातरौ सह सीतया ॥ १
ते रामं पर्णशालायामुपविष्टं महाबलम् ।
ददृशुः सीतया सार्धं वैदेह्या लक्ष्मणेन च ॥ २
तान्दृष्ट्वा राघवः श्रीमानागतां तां च राक्षसीम् ।
अब्रवीद्भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ॥ ३
मुहूर्तं भव सौमित्रे सीतायाः प्रत्यनन्तरः ।
इमानस्या वधिष्यामि पदवीमागतानिह ॥ ४
वाक्यमेतत्ततः श्रुत्वा रामस्य विदितात्मनः ।
तथेति लक्ष्मणो वाक्यं रामस्य प्रत्यपूजयत् ॥ ५

342* ततो ययुस्ते परमप्रहारिणः
प्रकम्पयन्तः पृथिवीं सकाननाम् ।
खराशया रामरणावमर्दने
कृतोद्यमा दैत्यवरा इवाहवे ।

[ (l. 1) V प्रतस्थुः ( for ययुस्ते ). —(l. 2) Ñ$_{2}$ D$_{5.7}$ संकंपयंतः पृथिवीं ससागरां. —(l. 3) Ñ$_{2}$ D$_{5.7}$ रामबलाभिमर्दने; B$_{3.4}$ रामबलावमर्दने ( for रामरणावमर्दने ). —(l. 4) Ñ$_{2}$ D$_{5.7}$ धृतव्रता ( for कृतोद्यमा ). ];
while D$_{3}$ ins. after 21 :

343* ते रामं पर्णशालायामुपविष्टं परंतपम् ।
ददृशुः सीतया सार्धं तत्क्षणेन तथैव च ।

[ Cf. 3.19.2. ]

—D$_{3}$ cont.; Ś$_{1}$ Ñ$_{1}$ Dg$_{1}$ Dm$_{1}$ D$_{1.2.4.8}$ T$_{1.2}$ G M$_{2.3}$ ins. after 21 :

344* ततस्तु ते तं समुदग्रतेजसं
तथा सुतीक्ष्णप्रहराश्च राक्षसाः ।
न शेकुरेनं सहसा प्रमर्दितुं
वने द्विपा दीप्तमिवाग्निमुत्थितम् ।

[ (l. 1) Ś$_{1}$ तत्र समिद्धतेजसं; Ñ$_{1}$ G$_{2}$ तत्र समग्रतेजसं; Dm$_{1}$ D$_{8}$ G$_{3}$ राघवमुग्रतेजसं; D$_{1.3}$ तत्र तमुग्रतेजसं; D$_{2}$ तत्र समृद्धतेजसं; G$_{1}$ तं समुदग्रचेतसा ( for तं समुदग्रतेजसं ). —(l. 2) Ś$_{1}$ Ñ$_{1}$ D$_{1.2}$ तथाति( Ñ$_{1}$ D$_{1}$ °था सु )तीक्ष्णाप्रसहा( Ś$_{1}$ °हसा )श्च राक्षसाः; Dg$_{1}$ तथा हि तीक्ष्णप्रहरा निशाचराः; D$_{3}$ तथा सुतीक्ष्णसहसाश्च राक्षसाः ( sic ); D$_{4}$ T$_{1.2}$ G$_{1}$ तथा( G$_{1}$ °दा ) सुतीक्ष्णप्रहरा( T$_{1}$ G$_{1}$ °वरा )निशाचराः; G$_{2}$ तथा हि तीक्ष्णप्रहरा हि राक्षसाः; K(ed.) तथापि तीक्ष्णप्रदरा निशाचराः. —(l. 3) Ñ$_{1}$ *वीक्षितुं; Dg$_{1}$ प्रमादितुं. D$_{4}$ T$_{1.2}$ दुरासदं ( D$_{4}$ °नुगं ) धर्षयितुं न चाशकन्( T$_{2}$ शक्ताः ). —(l. 4) Ś$_{1}$ (marg. also) यथा ( for द्विपा ). Dg$_{1}$ D$_{4}$ T$_{1.2}$ वनद्विपा ( for वने द्विपा ). Dg$_{1}$ उद्यतं; D$_{4}$ उपस्थतां ( sic ); T$_{2}$ उत्तमं ( for उत्थितम् ). ]

Colophon. —*Sarga name* : Ś$_{1}$ Ñ$_{1}$ D$_{2}$ राक्षसप्रेषणं( D$_{2}$ °णः ); Ñ$_{2}$ D$_{5.7}$ सैन्यप्रया( D$_{5}$ °मा )णं; V खरप्रहृतराक्षसप्रयाणं; B$_{1.3}$ खरप्रहितराक्षसप्रयाणं; B$_{2}$ खरप्रहितचतुर्दशराक्षसप्रयाणं; B$_{4}$ खरप्रहितरक्षःप्रयाणं; D$_{1.3}$ राक्षसप्रयाणं( D$_{3}$ °प्रवेशः ). —*Sarga no.* ( figures, words or both ) : Ś$_{1}$ Ñ$_{1}$ B$_{1.3}$ D$_{2.5}$ om.; Ñ$_{2}$ V$_{2}$ D$_{7}$ 25; V$_{1}$ 24; B$_{2.4}$ 26; Dg$_{1}$ Dt$_{1}$ Dm$_{1}$ D$_{4.6.8}$ T G M$_{1}$ 19; D$_{1}$ 23; D$_{3}$ 28; M$_{2.3}$ 20. —After colophon, G conclude with श्रीरामाय नमः.

## 19

D$_{8}$ begins with ॐ; M$_{1}$ with श्रीरामाय नमः.

1 $^{a}$) Ś$_{1}$ Ñ$_{1}$ D$_{1-3}$ M$_{2}$ सा तु ( for ततः ). Ś$_{1}$ Ñ$_{1}$ Dm$_{1}$ D$_{2-4}$ T$_{3}$ M$_{2.3}$ शू( D$_{2.3}$ सू )र्पण( Ś$_{1}$ D$_{4}$ T$_{3}$ °न )खी; Dg$_{1}$ D$_{1.8}$ सू( D$_{8}$ शू )र्पनखा ( for शूर्पणखा ). —D$_{5}$ om. 1$^{c}$–2. —$^{c}$) Ñ$_{1}$ B$_{2}$ Dg$_{1}$ Dt$_{1}$ Dm$_{1}$ D$_{1.2.6.7}$ राक्षसान् ( for रक्षसाम् ). Ñ$_{2}$ V B D$_{1.2.7}$ [ ऽ ]थ ( for तौ ). Ś$_{1}$ राक्षसानां चचक्षेथ; D$_{3}$ राक्षसानामाचचक्षे. —$^{d}$) Ś$_{1}$ Ñ V B D$_{1-3.7}$ M$_{2}$ राघवौ ( for भ्रातरौ ). Dg$_{1}$ रामलक्ष्मणौ ( for सह सीतया ).

2 D$_{5}$ om. 2 ( cf. v.l. 1 ). —$^{a}$) D$_{4}$ तं ( for ते ). —$^{b}$) V$_{1}$ आसीनं च ( for उपविष्टं ). Ñ$_{2}$ महावनं ( for °बलम् ). —D$_{1}$ om. 2$^{d}$–3$^{c}$. —$^{d}$) Ś$_{1}$ Ñ$_{1}$ D$_{2.3}$ आसीनं ( for वैदेह्या ). Ñ$_{2}$ V B D$_{7}$ लक्ष्मणेन च धीमता; Dt$_{1}$ Dm$_{1}$ D$_{6.8}$ लक्ष्मणेनापि सेवितं; M$_{2}$ भ्रातरं सहलक्ष्मणं.

3 D$_{1}$ om. 3$^{abc}$ ( cf. v.l. 2 ). —$^{a}$) Dt$_{1}$ तौ; D$_{4.6}$ तां ( for तान् ). V B D$_{3}$ क्रूरान् ( for श्रीमान् ). Ś$_{1}$ Ñ$_{1}$ D$_{2}$ तान्दृष्ट्वा राक्षसान्घोरान्. —$^{b}$) Ś$_{1}$ Ñ$_{1}$ Dt$_{1}$ D$_{3.4.6}$ T$_{1}$ आगतांस्; Ñ$_{2}$ B D$_{5.7}$ राक्षसांस् ( for आगतां ). Ś$_{1}$ Ñ$_{1}$ B$_{1.2}$ Dt$_{1}$ D$_{6}$ तांश्च; M$_{2}$ चापि ( for तां च ). Dt$_{1}$ D$_{6}$ राक्षसान् ( for °सीम् ). V$_{1}$ राक्षसान्राक्षसीं च तां. —$^{c}$) G$_{1}$ राघवं ( for भ्रातरं ). —$^{d}$) T$_{1}$ damaged for दीप्ततेजसम्.

4 $^{a}$) B$_{3}$ मुहूर्तंस्तव सौमित्रे. —$^{b}$) Ñ$_{2}$ V B D$_{5.7}$ वैदेह्याः ( V$_{2}$ B$_{4}$ ह्या ) ( for सीतायाः ). B$_{2}$ प्रत्यनंतरं ( for °नन्तरः ). Ś$_{1}$ D$_{2.3}$ सीतया प्रत्यनंतरं( D$_{3}$ °रः ). —B$_{4}$ reads 4$^{c}$–5 in marg. —$^{cd}$) Ś$_{1}$ Dg$_{1}$ D$_{2.3}$ T$_{3}$ इमानद्य; M$_{2}$ यावदस्या( for इमानस्या ). Ś$_{1}$ Ñ$_{1}$ Dm$_{1}$ D$_{1-3}$ अहं ( for इह ). Ñ$_{2}$ V B D$_{5.7}$ यावन्निहन्मि रक्षांसि घोराणीमानि संयुगे.

5 B$_{4}$ reads 5 in marg. ( cf. v.l. 4 ). —$^{a}$) Ś$_{1}$ Ñ$_{1}$ D$_{2}$ एवं; D$_{3}$ एव; D$_{4}$ ए* ( for एतत् ). Ś$_{1}$ Ñ$_{1}$ तु तच्छ्रुत्वा; Ñ$_{2}$ V B D$_{5.7}$ उपश्रुत्य( B$_{4}$ °त्वा ); D$_{1}$ तु संश्रुत्य ( for ततः श्रुत्वा ). —$^{b}$) Ñ$_{2}$ V B D$_{5.7}$ [ अ ]मिततेजसः ( for विदितात्मनः ). —$^{c}$) Ś$_{1}$ D$_{2}$ उत्थाय ( for तथेति ). —$^{d}$) Dt$_{1}$ D$_{6}$ राघवस्य प्रपूजयत्. —For 5$^{cd}$, Ñ$_{2}$ V B D$_{5.7}$ M$_{2}$ subst. :

345* तथेत्युक्त्वा स वैदेह्या अभवत्प्रत्यनन्तरः ।

[ M$_{2}$ [ अ ]थ ( for स ). B$_{4}$ चाभवत्; M$_{2}$ सोभवत् ( for अभवत् ). B$_{2}$ प्रत्यनंतरं. ]

राघवोऽपि महच्चापं चामीकरविभूषितम् ।
चकार सज्यं धर्मात्मा तानि रक्षांसि चाब्रवीत् ॥ ६
पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ ।
प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकावनम् ॥ ७
फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ ।
वसन्तौ दण्डकारण्ये किमर्थमुपहिंसथ ॥ ८
युष्मान्पापात्मकान्हन्तुं विप्रकारान्महावने ।
ऋषीणां तु नियोगेन प्राप्तोऽहं सशरासनः ॥ ९
तिष्ठतैवात्र संतुष्टा नोपसर्पितुमर्हथ ।
यदि प्राणैरिहार्थो वो निवर्तध्वं निशाचराः ॥ १०
तस्य तद्वचनं श्रुत्वा राक्षसास्ते चतुर्दश ।
ऊचुर्वाचं सुसंक्रुद्धा ब्रह्मघ्नाः शूलपाणयः ॥ ११
संरक्तनयना घोरा रामं रक्तान्तलोचनम् ।
परुषा मधुराभाषं हृष्टादृष्टपराक्रमम् ॥ १२
क्रोधमुत्पाद्य नो भर्तुः खरस्य सुमहात्मनः ।
त्वमेव हास्यसे प्राणानद्यास्माभिर्हतो युधि ॥ १३
का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि ।
अस्माकमग्रतः स्थातुं किं पुनर्योद्धुमाहवे ॥ १४ G. 3. 26. 14 B. 3. 20. 14 L. 3. 25. 14

6 [a]) Ñ2 V B D5.7 रामोपि सु- (for राघवोऽपि). —[b]) Ś1 Ñ1 D1-3 कार्तस्वर- (for चामीकर-). —[c]) D1.2.4 T2 G1 सज्जं (for °ज्यं). —[d]) T1 damaged from ब्रवीत् up to रा in 7[b]. M2 सोब्रवीत् (for चा°).

7 T1 damaged up to रा in 7[b] (cf. v.l. 6). —D6 reads 8[cd] in place of 7[cd], repeating 8[cd] in its proper place. —[c]) Dt1 om.; Dm1 प्रविष्टं (sic) (for °ष्टौ). G2 दंडकारण्यं (for सीतया सार्धं). —[d]) Ś1 Ñ V1 B1-3 D1-3.5.7 M3 दंडकं वनं; G2 सीतया सह; M2 दंडकाननं (for दण्डकावनम्).

8 [a]) V1 B2 Dg1 D5 फलमूलाशिनौ. Ñ1 युक्तौ (for दान्तौ). Ś1 D1-3 फलमूलाशने युक्तौ. —[b]) Ś1 Ñ1 D1-3 धर्मसंहि(D1.3 °स्थि)तौ; Ñ2 V B1.2.4 D5.7 °माश्रितौ; Dm1 ब्रह्म° (for धर्मचारिणौ). —D6 reads 8[cd] in place of 7[cd], repeating it here. —[c]) D4 दंडकारण्यं (for °ण्ये). Ś1 D2.3 प्रविष्टौ दंडकारण्यं(D3 °ण्ये). —[d]) Ś1 Ñ1 D1-3 उपधावत; Ñ2 V B D5.7 अभि( B3 °ति)धावथ; Dm1 D8 उपहिंस्यथ (for °हिंसथ).

9 [a]) Dm1 D8 G3 M1 पापात्मनो (for °त्मकान्). Ś1 Ñ1 D1-3 युष्मत्पापात्मकर्मभ्यो. —[b]) Ś1 D1-3 महा(D3 °हद्)वनं (for महावने). —[c]) Ś1 Ñ V B D1-3.5.7 विनियोगेन (for तु नि°). —[d]) Dt1 Dm1 D4.6.8 G3 Cr.k.t संप्राप्तः (for प्राप्तोऽहं). —T1 damaged from श up to वो in 10[c]. Dg1 Dm1 D4.8 T2.3 G1.3 Cr.k सशरायुधः; Ct as in text (for °सनः). Ś1 D1-3 प्राप्तौ च(D1 स्वः; D3 स्म) सशरासनौ; Ñ1 M1 संप्राप्तौ सशरासनौ(M1 °युधौ). —For 9, Ñ2 V B D5.7 subst.:

346* युष्मद्विप्रकृतैः पूर्वमृषिभिः शंसितव्रतैः ।
नियुक्तावागतौ दुर्गमावां घोरमिदं वनम् ।

[(l. 1) V2 युष्माभिर्विकृतैः; B2 असद्विप्रकृतैः. B3.4 संशितव्रतैः. —(l. 2) V विमुक्तावागतौ.]

10 T1 damaged for 10[abc] (cf. v.l. 9). —[a]) Ś1 Ñ1 D3 [ अ ]त्रैव हे दुष्टा( Ñ1 दुष्टं नो; D3 दुर्वृत्ता); Dm1 T2.3 M3 Cmp [ए]वात्र संतुष्टाः; D1 M2 Cg.k [अ]त्रैव संतुष्टा (for [ए]वात्र संतुष्टा). Ñ2 V B D5.7 इत एव( B4 °वं) निवर्तध्वं; Ct as in text. —[b]) D3 [अ]पसर्पितुम्; M1 निवर्तितुम्; M2(after corr. *sec. m.* as in text) Cmp [उ]पा°; B(ed.) K(ed.) Cg.k.t [उ]पावर्ति°; Ctp as in text (for [उ]पसर्पितुम्). —[c]) Dg1 reads from रि up to [d] in marg. Dg1 इवार्थो; D1.2 °र्थं (for इहार्थो). V1 B Dm1 T3 वा (for वो). M2 यदि प्राणैर्हि वः कृत्यं.

11 [a]) Ñ2 V B D5.7 इति रामवचः श्रुत्वा. —[c]) Ś1 एव; Ñ V2 B D2.5.7 वचः; V1 G1 M2 वाचः; Dg1 T2 वाक्यं (for वाचं). Ś1 [अ]तिसंरब्धाः; Ñ V B D2.5.7 °रब्धाः; D3 ससंक्रुद्धां (for सुसंक्रुद्धा). D1 ऊचुर्वचनसंरब्धाः. —[d]) Ś1 Ñ V B D1-3.5.7 शूलपट्टिश(Ś1 Ñ1 D1-3 °मुद्गर)पाणयः.

12 K(ed.) reads 12 in brackets. —[a]) M3 संरब्ध- (for °क्त-). Ś1 Ñ V B D1-3.5.7 M1.2 क्रोधसंरक्तनयना. —[b]) Dg1 Dt1 D4.6 T G2 संरक्त- (for रक्तान्त-). —Dg1 D4 T G2 om. 12[cd]. —M2 reads 12[cd] *inf. lin. sec. m.* —[c]) Ś1 V1 पुरुषा; G1 °षं (for परुषा). Ś1 मधुराभासं; D1 °लापं (for मधुराभाषं). —[d]) Ś1 पुष्टापुष्ट-; Ñ V B D2.3.5.7 धृ( B4 *sup. lin.* also हृ)ष्टाधृष्ट-( D3 दृढ-); Dm1 D6 G3 M3 हृष्टाधृ( D6 °दृ)ष्ट-; D1 M2 दृष्टादृष्ट-; G1 दृष्टदृष्टि-; M1 रुष्टाधृष्ट- (for हृष्टादृष्ट-). ❀ Ct : अदृष्टपराक्रममिति छेदः. ❀

13 [a]) G3 कोपम् (for क्रोधम्). V2 मे (for नो). —[b]) M3 क्रूरस्य (for खरस्य). M2 तु (for सु-). —[c]) Ś1 Ñ1 D1-3 मोक्ष्यसे; Ñ2 V B D5.7 त्यक्ष्यसि; Dg1 Cm °सि; M3 °ते (for हास्यसे). —[d]) Dm1 D8 राम (for अद्य). D1.2 मृधे; D3 रणे (for युधि). Ś1 हतोस्माभिर्महामृधे; Ñ1 इहास्माभिर्हतो मृधे; Ñ2 V B D5.7 M2 अस्माभिः समरे हतः( B3 °तान्); G3 अस्माभिर्निहतो युधि.

14 [b]) Ś1 वहतां (for बहूनां). G3 रयमूर्धनि.

G. 3. 26. 15
B. 3. 20. 15
L. 3. 25. 15

एभिर्बाहुप्रयुक्तैर्नः परिघैः शूलपट्टिशैः ।
प्राणांस्त्यक्ष्यसि वीर्यं च धनुश्च करपीडितम् ॥ १५
इत्येवमुक्त्वा संरब्धा राक्षसास्ते चतुर्दश ।
उद्यतायुधनिस्त्रिंशा राममेवाभिदुद्रुवुः ।
चिक्षिपुस्तानि शूलानि राघवं प्रति दुर्जयम् ॥ १६
तानि शूलानि काकुत्स्थः समस्तानि चतुर्दश ।
तावद्भिरेव चिच्छेद शरैः काञ्चनभूषणैः ॥ १७
ततः पश्चान्महातेजा नाराचान्सूर्यसंनिभान् ।
जग्राह परमक्रुद्धश्चतुर्दश शिलाशितान् ॥ १८
गृहीत्वा धनुरायम्य लक्ष्यानुद्दिश्य राक्षसान् ।
मुमोच राघवो बाणान्वज्रानिव शतक्रतुः ॥ १९
रुक्मपुङ्खाश्च विशिखाः प्रदीप्ता हेमभूषणाः ।
अन्तरिक्षे महोल्कानां बभूवुस्तुल्यवर्चसः ॥ २०
ते भित्त्वा रक्षसां वेगाद्वक्षांसि रुधिराप्लुताः ।
विनिष्पेतुस्तदा भूमौ न्यमज्जन्ताशनिस्वनाः ॥ २१

---

15 a) Ś1 Ñ1 D2 एष; Ñ2 V B1.2 D5 अस्मद्-; B3 तस्माद्; B4 D7 अस्माद्; Dg1 T3 M3 एहि; D1 एका (sic); D3 एव (for एभिर्). Ś1 V2 -प्रसक्तैर्; Ñ1 B1.2 Dg1 D2.3.4.7 -प्रमुक्तैस्; Dm1 D8 G1.3 -विमुक्तैर् (for -प्रयुक्तैर्). Ñ1 om.; Ñ2 V B D5.7 त्वं; Dg1 Dt1 D6 च (for नः). —b) Dg1 G M1 शूलपट्टसैः (Dg1 G1 °शैः); D4 T °पट्टिसैः; M2 °मुद्गरैः (for शूलपट्टिशैः). Ś1 Ñ1 D1–3 परिघप्रासतोमरैः; Ñ2 V1 D5.7 शूलमुद्गरपट्टिशैः; V2 B शूलपट्टिशमुद्गरैः; M3 शूलैः परिघपट्टसैः. —c) D5 त्यक्ष्यति; M2 त्यजसि (for त्यक्ष्यसि). —d) Ñ2 V B D5.7 [इ]दं विचेतनः (D7 °नं); D2 T3 श (T2 ख)र° (for करपीडितम्).

16 a) T1.2 G2 M2 संक्रुद्धा (for संरब्धा). Ñ2 V B D5.7 एवमुक्त्वा सु(V तु)संरब्धा. —After $16^{ab}$, Dm1 D8 read $20^{cd}$. —Dg1 D4 T G1.2 M3 om. $16^{cd}$. —M2 transp. $16^{cd}$ and $16^{ef}$. —K(ed.) reads $16^{cd}$ in brackets. —d) Ś1 Ñ B D1–3.5.7 समभिदुद्रुवुः (for एवाभि°). M1 तावुभावभिदुद्रुवुः; M2 सहसा राममाद्रवन्. —After $16^{cd}$, M1.2 ins. only l. 1–2 of 347*. —f) M1.2 दुर्जयाः (for °यम्).

17 b) M2 रणाजिरे (for चतुर्दश). —d) Dg1 Dt1 D6 G1.2 M3 कांचनभूषितैः.

18 a) Dt1 Dm1 D4.6.8 पश्यन् (for पश्चान्). —For $16^{ef}$–18, Ś1 Ñ V B D1–3.5.7 subst.; while Dm1 D8 G3 ins. only l. 1–2 after 17; whereas M1.2 ins. l. 1–2 only after $16^{cd}$:

347* अभिपत्य ततो वेगाच्चिक्षिपुस्ते निशाचराः ।
परिघान्पट्टिशान्प्रासांश्चतुर्दश चतुर्दश ।
चतुर्दशभिरेकोऽग्रे राघवो निशितैः शरैः ।
शस्त्राण्यस्त्राणि रक्षोभ्यश्चिच्छेद खगपत्रिभिः ।
ततोऽपरान्महाघोरान्राघवो लघुविक्रमः ।   [5]

[(l. 1) D3 रोषाच् (for वेगाच्). Ñ2 V B D5.7 M2 अभिद्रुत्य च(Ñ2 D5.7 तु) वेगेन (for the prior half). —Ñ1 om. l. 2. —(l. 2) Dm1 D8 G3 शूलांश् (for प्रासांश्). M1 निस्त्रिंशान्हेमभूषितान् (for the post. half). Ñ2 V B D5.7 M2 चतुर्दश सुसंरब्धाः (M2 °क्रुद्धाः) शूलपट्टिशमुद्गरान् (M2 °मुद्गरपट्टसान्). —After l. 2, Ñ2 V B D5.7 ins.:

347(A)* तानि तेषां च शस्त्राणि राक्षसानां चतुर्दश ।;

while Dm1 D8 G3 ins.:

347(B)* तावद्भिरेव चिच्छेद समस्तान्स वरायुधान् ।
चतुर्दशभिरव्यग्रः शरैः काञ्चनभूषणैः ।

[(l. 1) D8 इव (for एव). —(l. 2) G3 कांचनभूषितैः.]
—(l. 3) Ñ1 D1.3 एकाग्रे (D1 °ग्रै); Ñ2 V B D5.7 एवाजौ; D2 एकाग्रो (for एकोऽग्रे). Ñ2 V B D5.7 रामश्चिच्छेद सायकैः (for the post. half). —Ñ2 V B D5.7 om. l. 4. —(l. 4) D1 तानि (for [अ]स्त्राणि). Ñ1 D3 रक्षोभिश् (for °भ्यश्). D3 चिच्छिदे (for चिच्छेद). —(l. 5) Ñ V B D5.7 अ(V1 सु)-संभ्रांतो; D1 महातेजा (for महाघोरान्).]
—c) Ñ2 V B D5.7 समरे (for परम-). —d) Ś1 Ñ1 D1–3 शिताञ्शरान्; Ñ2 V B D7 M1 शिलीमुखान्; T3 G1 शराञ्शितान्; Cr.m.g.k.t as in text (for शिलाशितान्).

19 a) M2 संधाय (for गृहीत्वा). Ś1 Ñ1 D1–3 उद्यम्य (for आयम्य). Ñ2 D5.7 संधाय चापि चापे तान्; V B संधाय चापे (B2 °पि) तानाशु; D8 गृहीतधनुरागम्य. —b) Ñ2 V2 B D5.7 लक्ष्यम्; D1.3 लक्ष्याणि; G3 M लक्षान् (for लक्ष्यान्). —After $19^{ab}$, M2 ins.:

348* कृत्वा मुष्टिं धनुर्मध्ये चतुर्दश शिलीमुखान् ।

—D8 reads $19^{cd}$ in marg. —c) M2 मुमोच लीलया रामो. —d) Ś1 Ñ1 D1–3 M1.3 वज्राणीव (for वज्रानिव). Ñ2 V B D5.7 M2 वज्राशनिसमस्वनान्. —After 19, D1–3 read 349*.

20 Dt1 D4.6 om. $20^{ab}$. Ś1 Ñ1 read $20^{ab}$ after 349*. —a) Ś1 Ñ V B D1–3.5.7 G1 M2 ते रुक्मपुंखा (for रुक्मपुङ्खाश्च). Ś1 Ñ1 D1–3 निशिताः (for विशिखाः). —b) Ś1 Ñ V B Dg1 D2.5.7 G1.2 M1 हेमभूषिताः (for °षणाः). T1.2 M3 दीप्ता हेमविभूषिताः. —Dm1 D8 read $20^{cd}$ after $16^{ab}$. —d) Ś1 तुमुलस्वनाः; Ñ1 D3 °निस्वनाः; Dm1 D8 M3 °दर्शनाः; D1 °लक्षणाः; D2 °भूषणाः; G1 °विक्रमाः (for तुल्यवर्चसः).

21 ab) D4 G2 राक्षसान् (for रक्षसां). Dt1 Dm1 D6 °रप्लुताः (for °राप्लुताः). Ś1 Ñ V B D2.3.5.7 G1 M3 ते

ते भिन्नहृदया भूमौ छिन्नमूला इव द्रुमाः ।
निपेतुः शोणिताद्राङ्गा विकृता विगतासवः ॥ २२
तान्भूमौ पतितान्दृष्ट्वा राक्षसी क्रोधमूर्छिता ।
परित्रस्ता पुनस्तत्र व्यसृजद्भैरवं रवम् ॥ २३

सा नदन्ती महानादं जवाच्छूर्पणखा पुनः ।
उपगम्य खरं सा तु किंचित्संशुष्कशोणिता ।
पपात पुनरेवार्ता सनिर्यासेव वल्लरी ॥ २४ G. 3. 26. 28 B. 3. 20. 23 L. 3. 25. 27

---

शरास्तानि रक्षांसि भित्त्वा बर्हिणलक्ष्मणाः( V1 D5 G1 °वाससः); D1 ते शरास्तानि रक्षांसि विभिदुर्बहुलक्षणाः. —$^{c}$) T3 तथा (for तदा). —$^{d}$) Dg1 Dt1 Dm1 D6.8 T3 G3 Ct वल्मीकादि (G3 °नि )व पन्नगाः. —For $21^{cd}$, Ś1 Ñ1 D1-3( D1-3 read after 19) G1 subst.:

349* चतुर्दशसु निष्पेतुश्चतुर्दश शिलीमुखाः ।

[ D1 रक्षःसु; D2 निःपेतुश् (for निष्पेतुश्). D3 G1 चतुर्दश विनिष्पेतुश् (for the prior half). G1 महाजवाः (for शिलीमुखाः).]; while Ñ2 V B D5.7 subst.:

350* विविशुर्वेगिता भूमिं वल्मीकमिव पन्नगाः ।
शोणितार्द्रा महाकाया विगतैरसुभिस्ततः ।
चतुर्दश निपेतुस्ते शरभिन्ना निशाचराः ।

[(l. 2) Ñ2 D5.7 इषुभिस् (for असुभिस्). M2 निहताः सहितास्ततः (for the post. half). —(l. 3) Ñ2 D5.7 शरैर्भिन्ना.]

—After 21 (349*), Ś1 Ñ1 read $20^{ab}$.

22 $^{a}$) T3 G2 M1 तैर् (for ते). Dg1 Dt1 D6 तैर्भग्नहृदया भूमौ. —$^{b}$) Dt1 D6 भिन्न- (for छिन्न-). —$^{c}$) Ś1 D1-3 शोणितोद्गारा( D2 °रं); Ñ1 °देशा; Dg1 Dt1 D6 T3 G2 M3 शोणितस्नाता; Dm1 D8 °क्तांगा; G3 °क्तास्या; M1 शोणितादिग्धा (for शोणिताद्राङ्गा). —$^{d}$) Ś1 D1-3 विनिकृ (D2 °वृ )त्ता निशाचराः; Ñ1 धरण्यां रजनीचराः. —For $22^{cd}$, Ñ2 V B D5.7 M2 subst.:

351* प्रपेतू राक्षसाः सर्वे रणे रामेण निर्जिताः ।

[ B2 प्रपेदू (sic). M2 शोणितादिग्धा (for राक्षसाः सर्वे). G(ed.) रामेण युधि निर्जिताः (for the post. half).]

—Thereafter cont.:

352* ते रुक्मपुङ्खा विमला विशिखा हेमभूषिताः ।
निहत्य तानि रक्षांसि स्वतूणं पुनरागमन् ।

[(l. 1) M2 transp. विमला and विशिखा. B4 विशिखाः (for विमला). B4 प्रदीप्ता (for विशिखा). D5 M2 -भूषणाः (for -भूषिताः). —(l. 2) V सुतूणं; M2 स्वतूणीं (for स्वतूणं). B4 D5 M2 आविशन् (for आगमन्).]

23 D2 om. 23. —$^{a}$) Dm1 D8 G3 राक्षसान् (for तान्भूमौ). Dg1 D4 T1.2 M2 transp. भूमौ and पतितान्. Ñ1 तान्स्वभूमिगतान्दृष्ट्वा; M3 भूमौ निपतितान्दृष्ट्वा. —$^{b}$) D4 T1.2 G1 क्षणेनैव महाबलान्. —Dt1 D6 om. $23^{cd}$. —$^{c}$) Ś1 Ñ1 D3 घोरं; Ñ2 V B Dt1 D5.7 साथ; D1 घोरान् (for तत्र). —$^{d}$) V1 D5 स्वनं (for रवम्). Dg1 Dm1 D4.8 T G M1.3 Cm भैरवस्वरान्( Dg1 Dm1 D8 G1.2 Cm °नान्). Ś1 Ñ1 D3 रुराव सुमहास्वना( Ñ1 D3 °नं); D1 मुमोच सुमहास्वनान्. —After 23, Ś1 Ñ1 D3 ins.; while D2 ins. l. 2 only after 22:

353* ते रामशरनिर्भिन्नाः पेतुरुर्व्यां निशाचराः ।
वृहत्ताला महारण्ये दग्धा इव दवाग्निना ।

24 Dt1 D6 om. $24^{ab}$. —$^{a}$) M2 नदित्वा (for नदन्ती). Ś1 B1 D1-3 G3 महानादान्; Ñ1 °नादा; D7 सिंहनादं (for महानादं). —$^{b}$) Ñ2 D5.7 घोरा (for जवाच्). Ś1 Dm1 D3.4 T G1.3 M2.3 शू( D3 सू )र्पण( Ś1 D4 °न )खी; Ñ2 B3.4 Dg1 सूर्पण( Dg1 °न )खा; D8 °नखा (for शूर्पणखा). Ś1 Ñ2 V B Dt1 D5-7 ततः (for पुनः). Ñ1 ***** खी (illeg.) पुनः. —After $24^{ab}$, Ś1 Ñ V B Dm1 D1-3.5.7.8 ins.:

354* जगाम यत्र वै भ्राता खरस्तस्या महाबलः ।

[ Ś1 Ñ1 D1-3 भ्रातरं द्रष्टुं; Dm1 D3 तत्र संभ्रांता (for यत्र वै भ्राता). G(ed.) सुसंभ्रस्ता (for खरस्तस्या). Ś1 Ñ1 D1-3 खरं तं सहदूषणं( D3 °णे); V1 खरदस्तोमहाबलः (corrupt); B1 Dm1 D8 खरो यत्र( B1 नाम ) महाबलः (for the post. half).]

—D2 reads $24^{c-f}$ in marg. —$^{c}$) Ñ1 D1.3 अभिगम्य; Dg1 G2 उपा° (for उपगम्य). Ś1 D2 अभिगम्याब्रवीत्सा तु. —$^{d}$) Ś1 D2 वै (for सं-). Dt1 -शोपिता (for -शोणिता). M2 किंचित्संसिक्तनासिका; M3 राक्षसी शुष्कशोणिता. —After $24^{cd}$, B3 ins.:

355* क्रोधयुक्ता कम्पमाना आगत्य तत्र खेचरी ।

[Note hiatus between the two halves.]

—$^{e}$) Ś1 Ñ1 D1-3 पुनरावृत्ता; M1 °रेवोर्व्यां (for पुनरेवार्ता). T3 गजच्छिन्नेव (for सनिर्यासेव). Ś1 मल्लकी; Ñ V B D1-3.5.7 शल्लकी( V1 °री); D6( after corr. marg., before corr. as in text ) वानरी; M1 वल्किकी; M3 °की; Cg सल्लकी (for वल्लरी). —After 24, Dg1 Dt1 Dm1 D4.6.8 S ins.:

356* भ्रातुः समीपे शोकार्ता ससर्ज निनदं महत् ।
भूमौ शयाना दुःखार्ता लब्धसंज्ञा चिरात्पुनः ।
सस्वरं मुमुचे बाष्पं विवर्णवदना तदा ।

[(l. 1) Dg1 D4.6 T G2.3 M2.3 मुहुः (for महत्). G1 M1 नष्टसंज्ञाभवन्मुहुः (for the post. half). —Dg1 Dt1 D4.6 T1.2 G2 om. l. 2; K( ed.) reads l. 2 in brackets. —Dg1 reads l. 3 in marg. —(l. 3) G2 सस्वरा. D4 T2 G M विषण्ण- (for विवर्ण-). T1 तथा (for तदा).]

G. 3. 26. 0
B. 3. 20. 25
L. 3. 25. 28

निपातितान्प्रेक्ष्य रणे तु राक्षसा-
न्प्रधाविता शूर्पणखा पुनस्ततः ।
वधं च तेषां निखिलेन रक्षसां
शशंस सर्वं भगिनी खरस्य सा ॥ २५

इति श्रीरामायणे अरण्यकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

## २०

स पुनः पतितां दृष्ट्वा क्रोधाच्छूर्पणखां खरः ।
उवाच व्यक्तया वाचा तामनर्थार्थमागताम् ॥ १
मया त्विदानीं शूरास्ते राक्षसा रुधिराशनाः ।
त्वत्प्रियार्थं विनिर्दिष्टाः किमर्थं रुद्यते पुनः ॥ २
भक्ताश्चैवानुरक्ताश्च हिताश्च मम नित्यशः ।
घ्नन्तोऽपि न निहन्तव्या न न कुर्युर्वचो मम ॥ ३

25 a) Dg1 निपात्य तान् (sic) (for निपातितान्). G2.3 Cr.k दृश्य (for प्रेक्ष्य). D4 तु राक्षसाधिपान् (for रणे तु राक्षसान्). —b) Dg1 D8 T3 शू(Dg1 सू)र्पनखा; Dm1 G1 °णखी; D4 T2 शू(T2 सू)र्पनखी (for शूर्पणखा). Dg1 ततः पुनः (by transp.); Dm1 D8 पुनः पुनः (for पुनस्ततः). —For $25^{ab}$, Ś1 Ñ1 D1–3 subst.:

357* निपातितांस्तान्बलिनस्तु राक्षसा-
न्शशंस सा शूर्पणखी पुनः पुनः ।

[D2 reads up to शूर्पणखी in l. 2 in marg. —(l. 2) Ś1 शूर्पनखी; D1 सूर्पनखा; D2.3 सूर्प° (for शूर्पणखी).]; while Ñ2 V B D6.7 subst. for $25^{ab}$:

358* निपातितानां बलिनां तु सा तदा
निवेदयिष्यन्त्यथ राक्षसी मुहुः ।

[(l. 1) D5 तु बलं नि (sic) (for बलिनां तु). B4 यदा (for तदा). —(l. 2) B1.4 निवेदयंती त्वथ. Ñ2 राक्षसां (for °सी).] —c) Ś1 Ñ V B D1–3.5.7 सु(Ś1 D2 तु)घोरं (for च तेषां). B1.4(marg. also) विशिखेन; G2 निखिलं च (for निखिलेन). —d) Ś1 Ñ V B D2.3.5.7 अतीव चा(Ś1 D2.3 सा)र्ता; D1 अतीव त्रासाद् (for शशंस सर्वं). Ś1 B1.2.4 D1–3 ह; Ñ1 G2 om.; D5 वै; D7 हि (for सा).

Colophon. —*Sarga name*: Ś1 Ñ1 D2 राक्षसवधः; Ñ2 प्रहितचतुर्दशराक्षसवधः; V1 B1 खरप्रहितराक्षसचतुर्दशवधः; V2 D7 खरप्रहितचतुर्दशराक्षस(V2 °*)वधः; B2 खरप्रहितराक्षसवधः; B3.4 खरप्रहितचतुर्दशरक्षोवधः; D1 सूर्पणखावाक्यं; D3.5 चतुर्दशराक्षसवधः. —*Sarga no.* (figures, words or both): Ś1 Ñ1 B1 D2 om.; Ñ2 B2.4 27; V1 25; V2 B3 D1.7 26; Dg1 Dt1 Dm1 D4.6.8 T G M1 20; D3 29; D5 36; M2.3 21. —After colophon, G concludes with श्रीरामाय नमः.

## 20

D8 begins with ॐ; M1 with श्रीरामाय नमः. —Before 1, M2 ins.:

359* ततः शूर्पणखी दृष्ट्वा राक्षसांस्तांश्चतुर्दश ।
हतानेकेन रामेण शरैरग्निशिखोपमैः ।
समीपं पुनरागम्य खरस्य निपपात ह ।
विक्रोशमाणा हस्ताभ्यामुरसि प्रतिनिघ्नती ।

1 a) Ś1 Ñ V B D1–3.5.7 G1.2 M2.3 तां (for स). M2 भूमौ (for दृष्ट्वा). ❀ Cv: स पुनः पतितां दृष्ट्वेति पाठः. ❀ —b) Ś1 Dm1 D2–4 T G1 M2.3 शूर्पणखीं (for °खां). Dt1 D6 M1 पुनः (for खरः). —Ś1 om. $1^{cd}$. —cd) D5 T2 [अ]व्यक्तया (for व्यक्तया). D2 उवाच रोषताम्राक्षो भगिनीं पुनरागतां.

2 G3 om. 2. Ś1 transp. $2^{ab}$ and $3^{ab}$. —a) Ś1 Ñ1 D1.2 M2.3 यदा; D3 यथा; G1 गतास् (for मया). Ñ2 V B1.2.4 D5.7 यदा शूराश्च दृष्टा(B1.2 दृसा)श्च; B3 ये च शूराश्च घोराश्च. —b) Ñ2 V B Dg1 Dt1 Dm1 D5–8 पिशिताशनाः (for रुधिराशनाः). —Ś1 erroneously repeats $2^{cd}$. —c) Ś1 Ñ V B D1–3.5.7 G1 M2.3 मयोत्सृ(G1 °यादि; M3 °योद्दि)ष्टाः (for विनिर्दिष्टाः). —d) Ś1 D1.2 G1.2 M2 इदं (for अर्थं). Dg1 तुद्यसे; D1.5.7 G2 M2.3 रुद्य(D5.7 °द्)से (for °ते). D1 [ऽ]धुना (for पुनः).

3 Ś1 transp. $2^{ab}$ and $3^{ab}$. —a) G1 [अ]पि (for [ए]व). Ś1 हि (for second च). —b) B4 शक्ताश्च; Dt1 om. (for हिताश्च). Ś1 D2 संनिभाः; M2 राक्षसाः (for नित्यशः). —c) M2 lacuna for न. G3 तु हंतव्या (for नि°). Dg1 G1.2 M2 (also *inf. lin.*) हन्यमाना अपि हि (Dg1 ह्ये) ते; Dt1 Dm1 D6.8 Ct हन्यमाना न हन्यंते; D4 T

किमेतच्छ्रोतुमिच्छामि कारणं यत्कृते पुनः ।
हा नाथेति विनर्दन्ती सर्पवद्वेष्टसे क्षितौ ॥ ४
अनाथवद्विलपसि किं नु नाथे मयि स्थिते ।
उत्तिष्ठोत्तिष्ठ मा भैषीर्वैक्लव्यं त्यज्यतामिह ॥ ५
इत्येवमुक्ता दुर्धर्षा खरेण परिसान्त्विता ।
विमृज्य नयने सास्रे खरं भ्रातरमब्रवीत् ॥ ६

प्रेषिताश्च त्वया शूरा राक्षसास्ते चतुर्दश ।
निहन्तुं राघवं घोरा मत्प्रियार्थं सलक्ष्मणम् ॥ ७
ते तु रामेण सामर्षाः शूलपट्टिशपाणयः ।
समरे निहताः सर्वे सायकैर्मर्मभेदिभिः ॥ ८
तान्भूमौ पतितान्दृष्ट्वा क्षणेनैव महाबलान् ।
रामस्य च महत्कर्म महांस्त्रासोऽभवन्मम ॥ ९

G. 3. 27. 8
B. 3. 21. 10
L. 3. 20. 10

घ्नंतोपि न निहन्यंते( T3 °हंतव्या ). —$^{d}$ ) Dt1 Dm1 ( before corr. ) M2 ( before corr. ) नः ( for second न ). T3 मम (sic) ( for न न ). —For $3^{cd}$, Ś1 Ñ V B D1–3.5.7 subst. :

360* न ते न कुर्युर्वचनं जीवितापेक्षया मम ।

[ V1 किं ( for first न ). Ś1 D1.2 ते च ( for ते न ). Ś1 वचनं कुर्युः ( by transp. ). D1 न ते चक्रुरवचनं (sic) ( for the prior half ). D1.3 पुनः ( for मम ). ]

4 $^{b}$ ) D6 तत्कृते; M1 ब्रूहि मे ( for यत्कृते ). —For $4^{ab}$, Ś1 Ñ V B D1–3.5.7 M2 subst. :

361* उच्यतां कारणं भद्रे येन त्वं पुनरागता ।

[ Ś1 Ñ1 D1.2 किंचित्; D3 किं तु ( for भद्रे ). D2.3 केन ( for येन ). Ś1 Ñ1 D1–3 पुनर्यत्त्वमिहा( Ś1 °मुपा )गता ( for the post. half ). ]

—$^{d}$ ) Dt1 Dm1 D6.8 T1.2 चेष्टसे; M2 वेष्टते; K( ed. ) Cg लुठसि ( for वेष्टसे ). —For $4^{cd}$, Ś1 Ñ V B D1–3.5.7 subst.; while M2 cont. after 361* :

362* किमर्थं त्वं विलपसि बाष्पदूषितलोचना ।

[ Ñ2 V B4 D5.7 त्वं विलपसे; B1 विलपसि त्वं ( by transp. ) ( for त्वं विलपसि ). Ś1 Ñ1 D1–3 हा नाथेति व( D1 रु )दंती त्वं ( for the prior half ). B4 D5.7 -भूषित- ( for -दूषित- ). ]

5 $^{a}$ ) Ś1 Ñ1 Dg1 D1–3 विलपसे; Ñ2 V1 B D5.7 इहागम्य( B3.4 °त्य ) ( for विलपसि ). —$^{b}$ ) Ś1 Ñ1 Dg1 D1–3 T3 M2.3 किं त्वं; Ñ2 V B D5.7 म( V1 त्व )यि; D8 किं तु ( for किं नु ). Ñ2 V1 B D5.7 व्यवस्थिते; D3 मयि संस्थिते (hypm.) ( for मयि स्थिते ). K( ed. ) नाथे तु मयि संस्थिते. —$^{c}$ ) M2 भद्रे ( for second [ उ ]त्तिष्ठ ). Ś1 Ñ1 मा शोचेर्; Dt1 Dm1 D8 G1.3 M1 मा भैस्त्वं; D1–3 मा शोचः; D6 मामेव (sic); T3 G2 M2.3 मा मैवं ( for मा भैषीर् ). Ñ2 V B D5.7 उत्तिष्ठ भद्रे मै( V1 सै )वं भूर्( B2 त्वं; B3 तु ). —$^{d}$ ) Ś1 Ñ V B D1–3.5.7 M1.2 इदं; Dt1 Dm1 D6.8 इति; Cg as in text ( for इह ). M3 त्यज्य सांप्रतं ( for त्यज्यतामिह ). —After 5, M2 ins. :

363* नाशयिष्यामि दुःखं ते तौ हत्वा पुरुषाधमौ ।

6 $^{a}$ ) M1.3 सा त्वेवम् ( for इत्ये° ). Dg1 दुर्दर्शा ( for दुर्धर्षा ). Ś1 Ñ1 D1–3 सा त्वेवं तेन( Ñ1 चैव ) दुर्धर्षा; Ñ2 V B D5.7 M2 सै( M2 ए )वं तेन सुदुःखार्ता. —M1 om. $6^{cd}$. —$^{c}$ ) Ñ2 V Dg1 D1.6 विसृज्य ( for विमृज्य ). B1 साश्रु; M2 तास्रे ( for सास्रे ). —$^{d}$ ) Ñ1 V B D5.7 वचनम् ( for भ्रातरम् ). —After 6, Ś1 Ñ1 Dg1 Dt1 Dm1 D1.3.6.8 T G M2.3 ins. :

364* अस्मीदानीमहं प्राप्ता हृतश्रवणनासिका ।
शोणितौघपरिक्लिन्ना त्वया च परिसान्त्विता ।

[ ( l. 1 ) Ś1 Ñ1 D1.3 ननु त्वाहमनुप्राप्ता( Ś1 °प्य ) ( for the prior half ). Ś1 D1.3 कृत्त-; Dt1 D6 G2 हत- ( for हृत- ). —( l. 2 ) Ñ1 शोणितेन ( for शोणितौघ- ). Ś1 Ñ1 D1.3 त्वया च स्वागतं कृतं ( for the post. half ). ]

—Thereafter M2 cont. 365*.

7 $^{a}$ ) D1 प्रेक्षिता (sic). Ñ1 ते ( for च ). D4 T1.2 G1 वीर ( for शूरा ). —$^{b}$ ) M3 ये ( for ते ). —$^{c}$ ) D6 राघवे ( for राघवं ). Dg1 क्रुद्धा; Dm1 D8 G3 घोरं; D1.3.4 T G1.2 क्रोधान् ( for घोरा ). —$^{d}$ ) D1 मे ( for मत्- ). Dg1 -प्रियार्थे ( for °र्थं ).

8 $^{a}$ ) D1 सामर्थ्याच्; G2 दुर्धर्षाः ( for सामर्षाः ). —$^{b}$ ) D4 S शूलपट्टस- ( for °पट्टिश- ). G2 -धारिणः ( for -पाणयः ). —$^{c}$ ) Ś1 Ñ1 D1–3 उपेयुषो हताः ( for समरे निहताः ). —For 7–8, Ñ2 V B D5.7 subst., while M2 cont. after 364* :

365* ये त्वया प्रेषिताः सौम्य राक्षसाः शूलपाणयः ।
रामेणैकेन ते सर्वे निर्दग्धाः सायकाग्निना ।

[ ( l. 1 ) B1.3( also राजा [ *sup. lin.* ] ).4 शूरा ( for सौम्य ). —( l. 2 ) Ñ2 D5.7 सौम्य ( for सर्वे ). ]

9 $^{a}$ ) Ś1 Ñ1 D1–3 क्षितौ; Dg1 D4 T1.2 दृष्ट्वा ( for भूमौ ). B4 निहतान् ( for पतितान् ). Dg1 D4 T1.2 भूमौ ( for दृष्ट्वा ). —$^{b}$ ) Dt1 लक्ष्मणेन ( for क्षणेनैव ). Dt1 Dm1 D6.8 G1.2 म( Dt1 * )हाजवान् ( for °बलान् ). Ś1 Ñ V B D1–3.5.7 छिन्न( Ś1 Ñ1 D1–3 दग्ध )मूलानिव द्रुमान्. —$^{c}$ ) Ś1 राघवस्य ( for रामस्य च ). Ñ2 V B1–3 D5.7 चैव तत्कर्म; B4 [ ए ]व हि तत्कर्म. —$^{d}$ ) Ñ1 illeg. from सोऽभवन् in $^{d}$ up to स in $10^{a}$. M2 परित्रासो ( for महांस्त्रासो ). Ś1 D1–3 परित्रासोय( D1 म )मागतः; Ñ2 V B D5.7 परित्रासो ममाप्यभूत्; G( ed.) परित्रासो ममाभवत्.

G. 3. 27. 9
B. 3. 21. 11
L. 3. 26. 11

सास्मि भीता समुद्विग्ना विषण्णा च निशाचर ।
शरणं त्वां पुनः प्राप्ता सर्वतो भयदर्शिनी ॥ १०

विपादनक्राध्युषिते परित्रासोर्मिमालिनि ।
किं मां न त्रायसे मग्नां विपुले शोकसागरे ॥ ११

10 Ñ1 illeg. up to स in $10^a$ (cf. v.l. 9). —$^a$) Ñ2 D5.7 साश्रुभूता; D4 T1.2 G1 Cg अहमस्मि (for सास्मि भीता). Ñ2 V B D5.7 विषण्णा च; Dm1 D8 G3 भयोद्विग्ना (for समुद्विग्ना). —$^b$) Ñ2 V B D5.7 समुद्विग्ना च राक्षस (V1 °सा:; V2 °सी). —$^c$) Ś1 Ñ2 V B D2.3.5.7 अनु- (for पुनः). —$^d$) Ś1 D1.3 सर्वशो (D3 °था) (for °तो). Ñ2 D5.7 -दर्शि (Ñ2 °र्शं)ना; Dm1 -दर्शनी (for °र्शिनी).

11 B1 om. $11^{ab}$. —$^a$) Ñ2 V B2-4 D5.7 -संकीर्णे (Ñ2 B3 °र्णं-) (for -[अ]ध्युषिते). —$^b$) Ñ2 V B2-4 D5.7 -संकुले (for -मालिनि). —$^c$) Ñ1 पश्यसे (for त्रायसे). D1 त्रासि पतितां (sic) (for त्रायसे मग्नां). —$^d$) Ñ2 V1 B D5.7 अप्लवे; V2 अपारे (for विपुले).

☞ In Ñ2 V B D5.7 M2.3, the sequence of stanzas 12–18 (along with substitutes and insertions) is so complicated that it is given separately in a tabular form for the guidance of the reader and is mostly ignored in the Critical Apparatus.

| Ñ2 V | B1.4 | B2.3 | D5.7 | M2 | M3 |
|---|---|---|---|---|---|
| $14^{ab}$ | $14^{ab}$ | $14^{ab}$ | $14^{ab}$ | | |
| $14^{cd}$ (369*) | $14^{cd}$ (369*) | $14^{cd}$ (369*) | $14^{cd}$ (369*) | | |
| $13^{ab}$ | $13^{ab}$ | | $13^{ab}$ | $13^{ab}$ | $13^{ab}$ |
| $12^{ab}$ | $12^{ab}$ | | $12^{ab}$ | $12^{ab}$ | $12^{ab}$ |
| 366* ($12^{cd}$) | 366* ($12^{cd}$) | | 366* ($12^{cd}$) | | $12^{cd}$ |
| | | 371* | | | |
| | | | | | $13^{cd}$ |
| $13^{ef}$ | $13^{ef}$ | $13^{ef}$ | $13^{ef}$ | $13^{ef}$ | $13^{ef}$ |
| | | | | $13^{ef}$ (r.) | |
| | | | | $13^{cd}$ | |
| | | | | 14 | 14 |
| | | | | $12^{cd}$ | |
| | | | | 367* | |
| | | | | $12^{cd}$ (r.) | |
| 368* | 368* | 368* | 368* | | 368* |
| $17^{cd}$ | $17^{cd}$ | $17^{cd}$ | $17^{cd}$ | $17^{cd}$ | $17^{cd}$ |
| $17^{ab}$ | $17^{ab}$ | $17^{ab}$ | $17^{ab}$ | $17^{ab}$ | $17^{ab}$ |
| | | | | $17^{ab}$ (r.) | |
| 373* | 373* | 373* | 373* | 373* (l. 1) | |
| 18 | 18 | 18 | 18 | 18 | 18 |
| | | | | 373* (l. 2) | |
| | | | | 375*–376* | |
| | | | | $18^{ef}$ (r.) | |
| 15–16 | 15–16 | 15–16 | 15–16 | 15–16 | 15–16 |
| $13^{cd}$ | $13^{cd}$ | $13^{cd}$ | $13^{cd}$ | $13^{cd}$ (r. twice) | $13^{cd}$ (r.) |
| | $14^{cd}$ | | | | |
| $13^{ef}$ (r.) | $13^{ef}$ (r.) | $13^{ef}$ (r.) | $13^{ef}$ (r.) | $13^{ef}$ (r.) | $13^{ef}$ (r.) |
| 14 (r.) | $14^{ab}$ (r.) | 14 (r.) | 14 (r.) | | |
| 370* | 370* | 370* | 370* | | |

एते च निहता भूमौ रामेण निशितैः शरैः ।
ये च मे पदवीं प्राप्ता राक्षसाः पिशिताशनाः ॥ १२

मयि ते यद्यनुक्रोशो यदि रक्षःसु तेषु च ।
रामेण यदि शक्तिस्ते तेजो वास्ति निशाचर ।
दण्डकारण्यनिलयं जहि राक्षसकण्टकम् ॥ १३

यदि रामं ममामित्रमद्य त्वं न वधिष्यसि ।
तव चैवाग्रतः प्राणांस्त्यक्ष्यामि निरपत्रपा ॥ १४

बुद्ध्याहमनुपश्यामि न त्वं रामस्य संयुगे ।
स्थातुं प्रतिमुखे शक्तः सचापस्य महारणे ॥ १५ G. 3. 27. 18 B 3. 21. 17 L. 3. 26. 19

---

12 In Cv, the sequence of st. 12–13 is as in text. Ś1 Ñ1 D1-3 transp. $12^{ab}$ and $13^{ab}$. —$^{a}$) Ś1 Ñ V B1.4 Dm1 D1-3.5.7.8 T M2 ये ते ( for एते ). Ś1 Ñ V B1.4 Dm1 D2.3.5.7.8 T G3 M2 विनिहता; Dt1 D1 च( D1 वि ) निहिता; G1 हि निहता ( for च निहता ). —$^{b}$) T2 नियताश्; M1 निहतैश् ( for निशितैः ). —$^{c}$) Dg1 D4 ये त्विमे; Dm1 D8 T G2.3 M येपि मे( M2 ते ); Ck ये चेमे ( for ये च मे ). —$^{d}$) M2 तेपि रामेण हिंसिताः. —For $12^{cd}$, Ś1 Ñ V B1.4 D1-3.5.7 subst. :

365* तेषामानृण्यमागच्छ यदि तेजोऽस्ति तेऽधुना ।

[ D3 [ ऽ ]स्तु ( for ऽस्ति ). ]

—After 12, M2 ins. :

367* यदि तां चैव सौमित्रिं त्वमद्य न हनिष्यसि ।

13 Ś1 Ñ1 D1-3 transp. $12^{ab}$ and $13^{ab}$. —$^{a}$) Ś1 मयि तेस्ति ह्यनुक्रोशो; Dm1 D8 G3 M2 यदि ते मय्यनुक्रोशो. —$^{b}$) T3 यद्धि; G2 M2 तेषु ( for यदि ). G2 ते न च; M2 वा विभो ( for तेषु च ). —Ñ1 om. $13^{cd}$. —$^{c}$) Ñ2 B D5.7 रामं तं( B4 तु ); V रामस्तु; M2 तं हंतुं ( for रामेण ). B2 शक्ति**; B3.4 Dg1 Dm1 D8 T1.2 G M1 Cv.r.k.t ते शक्तिस् ( by transp. ) ( for शक्तिस्ते ). D4 रामेण तेजसा शक्तिः; M2 ( first time ) तं हंतुं यदि ते शक्तिस्. —T1.2 repeat $13^{ef}$ after 16. —$^{f}$) V1 जह ( sic ); D1 न हि ( for जहि ). Ś1 -घातकं ( for -कण्टकम् ). T1.2 ( both second time ) M2 जहि त्वं कुलपांसन. —After $13^{ef}$ ( first time ), Ñ2 V B D5.7 ins., while Ś1 Ñ1 D1-3 G1 M3 ins. after 14 :

368* यापि ते पदवी दत्ता हता रामेण सापि ते ।

[ Ñ1 अपि ते; V1 यदि ते; G1 M3 येपि मे ( for यापि ते ). B3 दृष्टा ( for दत्ता ). Ś1 D1-3 अपि ते परवीरघ्ना; D7 यापि ते उपदत्ता मे; G1 M3 येपि मे पदवीं प्राप्ता ( for the prior half ). Ñ2 हतो; G1 M3 तेपि ( for हता ). Ś1 वीरेण ( for रामेण ). Ś1 D1-3 राक्षसाः; Ñ1 सापि तु; Ñ2 सोपि ते; V1 तेपि ते; B2 **ते; G1 M3 हिंसिताः ( for सापि ते ). ]

14 $^{a}$) Ś1 Ñ1 अमित्रं तं; Ñ2 V B1.2.4 D5.7 ( all second time ) अमित्रं मे; Dg1 Dt1 D6 T3 G2.3 M1 Cm अमित्रघ्नं; D1-3 अमित्रं त्वं ( for ममामित्रम् ). Ñ2 V B D5.7 ( all first time ) यदि त्वं( B तं )चै( V2 चेमं )ममामित्रं. —$^{b}$) Ś1 D1.2 मम त्वं; Ñ1 मम तं; Ñ2 तवाद्य ( first time ); V B ( all first time ) M2 त्वमद्य ( by transp. ) ( for अद्य त्वं ). Ñ2 V B D5.7 ( all second time ) M2 संयुगे न हनिष्यसि; D5.7 ( both first time ) न चाद्य निहनिष्यति; T3 न त्वमार्य वधिष्यसि. —$^{c}$) Ñ2 D5.7 ( all second time ) सा तवैव; V B2.3 ( all second time ) तवैषा हि; D4 T1.2 तवैव च ( for तव चैव ). Ś1 Ñ1 D1-3 संनिधौ ते परित्यक्षे; Dm1 D8 G3 तवाहमग्रतः प्राणांस् . —$^{d}$) Ś1 Ñ1 D1-3 जीवितं; Ñ2 V B2.3 D5.7 ( all second time ) त्यजामि ( for त्यक्ष्यामि ). Ś1 Ñ V B D5.7 M2 ( Ñ2 V B2.3 D5.7 second time ) निरपत्रप ( for °त्रपा ). —For $14^{cd}$, Ñ2 V B2.3 D5.7 subst. ( first time ) :

369* संनिधौ ते त्यजाम्येषा जीवितं राक्षसेश्वर ।

[ B4 त्यज्यताम्येषा ( corrupt ) ( for ते त्यजाम्येषा ). ]

—Ś1 Ñ1 D1-3 G1 M3 ins. 368* after 14.

—After 14 ( r. ), Ñ2 V B( B1.4 after $14^{ab}$ [ r. ] ) D5.7 ins. :

370* शूरस्त्वं किल मानी च राक्षसैस्त्विह तर्कितः ।
लङ्कायां राक्षसेन्द्रेण रावणेन महात्मना ।
स ते प्रतापश्च मनस्विता च
स्वत्कं च धैर्यं च पराक्रमश्च ।
हर्षश्च युद्धे रिपुभिश्च वैरं [5]
यशश्च मुख्यं क्व गतानि तानि ।

[ ( l. 1 ) V1 राक्षसे*; B2.3 °सेषु ( for °सैस्तु ). —( l. 3 ) V1 न ( for स ). B2.3 प्रभावश् ( for प्रतापश् ). —( l. 4 ) V1 B4 D5.7 सत्त्वं; B2.3 सत्यं ( for स्वत्कं ). V1 धर्मश् ( for धैर्यं ). ]

—Thereafter, B read an addl. colophon.

[ *Sarga name* : B खर( B3 श )रोद्दीपनं. —*Sarga no.* ( figures, words or both ) B1-3 om.; B4 28. ]

—B2.3 cont. after 369* :

371* मयि ते यद्यनुक्रोशो यदि तेषु हतेषु च ।
ये ये विनिहता भूमौ रामेण निशितैः शरैः ।
तेषां मानुष्यमागच्छ यदि तेजोऽस्ति तेऽधुना ।

15 $^{a}$) Ś1 Ñ1 D1-3 बुद्ध्या यथानु( Ś1 Ñ1 तु )पश्यामि; Ñ2 V B D5.7 एवं( D5 °कं ) त्वहं( V1 त्वं हि [ sic ] ) प्रपश्यामि. —$^{b}$) M3 न त्वा ( for न त्वं ). Ñ2 V B D5.7 राक्षस ( for संयुगे ). —$^{cd}$) Ś1 Ñ1 D2.3 प्रमुखतः ( for प्रतिमुखे ). D1 क्षमः स्थातुं प्रतिमुखः ( for ° ). Dt1 D6 Ck.t सबलोपि; D4 T1.2 Cm सबलश्च ( for सचापस्य ). ❀ Cg : सबलः ससैन्यः. ❀ D4 T1.2 G1 महात्मनः ( for महारणे ). Ñ2 V B D5.7 समर्थः संयुगे स्थातुं मुहूर्तमपि सायुधः.

G. 3. 27. 19
B. 3. 21. 17
L. 3. 26. 20

शूरमानी न शूरस्त्वं मिथ्यारोपितविक्रमः ।
मानुषौ यत्र शक्तोऽपि हन्तुं तौ रामलक्ष्मणौ ॥ १६
अपयाहि जनस्थानात्त्वरितः सहबान्धवः ।
निःसत्त्वस्याल्पवीर्यस्य वासस्ते कीदृशस्त्विह ॥ १७
रामतेजोऽभिभूतो हि त्वं क्षिप्रं विनशिष्यसि ।
स हि तेजःसमायुक्तो रामो दशरथात्मजः ।
भ्राता चास्य महावीर्यो येन चास्मि विरूपिता ॥ १८

इति श्रीरामायणे अरण्यकाण्डे विंशः सर्गः ॥ २० ॥

16 $^{a}$) Ñ1 [इ]व; D3 च (for न). Ñ2 V B D5.7 अशूरः शूरमानी त्वं( V1 D5.7 च ). —$^{b}$) Ś1 Ñ1 V1 B D1–3.5.7 G1 M2.3 मिथ्याख्यापित- (for मिथ्यारोपित-). Ct transp. 16$^{cd}$ and 17$^{ab}$. —$^{c}$) Dg1 Dm1 D8 T3 G2.3 मनुष्यौ (for मानुषौ). Ś1 Ñ1 Dt1 D1–3.6 M3 Cm.t तौ न; Ñ2 V2 B1.2 Dg1 D4.5.7 यो न; V1 B4 T G1.2 M2 यौ न (for यत्र). —$^{d}$) D7 om. तौ (subm.). Ś1 Ñ1 V B D1–3 निहंतुं; Ñ2 Dt1 D6 हंतुं वै; Dg1 D5 हंतुं त्वं (for हन्तुं तौ). —After 16, Ś1 D1–3 ins.:

372* पदातिनौ वृतः सैन्यैः प्रभूतगजवाजिभिः ।

[ D2 वृहत् (for वृतः). D2 सैन्यः (for °न्यैः). D1.3 -वाहनैः (for -वाजिभिः). ]

—After 16, D4 G2 erroneously repeat 13$^{cd}$, T1.2 13$^{ef}$.

17 T1.2 transp. 17$^{ab}$ and 17$^{cd}$. —$^{ab}$) Ñ1 अपि (for अप-). Ś1 D1–3 बंधुभिः; Ñ1 प्रसिद्दा (sic); Dm1 D8 T3 G2.3 M1 बांधवैः (for -बान्धवः). Ñ2 V B D5.7 इतोपि त्वरितो याहि जनस्थानात्सबांधवः. —After 17$^{ab}$, Ñ2 V B D5.7 ins., while M2 ins. l. 1 after 17$^{ab}$ (r.) and l. 2 after 18:

373* उत्पन्नं हि भयं घोरं तव रामसमुद्भवम् ।
प्रमादी मन्दवीर्यश्च हीनसत्त्वपराक्रमः ।

[ (l. 1) M2 उत्वणं (sic) (for उत्पन्नं). M2 -बलोजव (sic) (for -समुद्भवम्). —(l. 2) V1 मंदवीर्यस्य; D7 वीर्यहीनश्च; M2 चाल्पवीर्यस्त्वं (for मन्दवीर्यश्च). ];

while Dt1 D4.6 G1.2 ins. after 17$^{ab}$:

374* जहि त्वं समरे मूढान्यथा तु कुलपांसन ।

[ D4 G1.2 दंडकारण्यनिलयं = 13$^{c}$ (for the prior half). D4 G1.2 K(ed.) जहि त्वं( K[ed.] तं ) (for यथा तु). ] —$^{c}$) Ś1 Ñ1 D1–3 -सारस्य (for -वीर्यस्य). —$^{d}$) Ñ1 वासश्च; B2.3 रामस्य (for वासस्ते). D8 कीदृशाविह (for °शस्त्विह). ❀ Ck कुलपांसनेत्यपपाठः । दुर्योजकत्वात् पौराणिका इति यथेष्टपाठः. ❀

18 $^{a}$) V1 राज- (for राम-). Ñ2 V2 B4 D5.7 [ऽ]भिभूतश्च; V1 B1.2 [ऽ]भिभूतस्त्वं; B3 [ऽ]भिभूतस्य; Dm1 D8 G3 M1.2 °तोसि (for °तो हि). —$^{b}$) G1 मां; M2.3 मा (for त्वं). M1 क्षिप्रं त्वं (by transp.) (for त्वं क्षिप्रं). Ś1 Ñ1 V B D1–3.5.7 क्षिप्रं हि( Ś1 Ñ1 D1–3 त्वं ) न भविष्यसि (B3 °ति [sic]). —$^{c}$) D4 न (for स). Ñ2 V B D5.7 M2 तेजो( D7 °ः )वीर्य-; D1 महत्तेजः- (for स हि तेजः-). —$^{e}$) D3 G1 M3 य( D3 त )स्य (for चास्य). Ñ2 V B D5.7 M2 भ्राता चैवास्य वै( M2 द्वै )मात्रो. —$^{f}$) Ś1 Ñ1 D1.2 M2.3 [अ]स्म्येवं (for चास्मि). Ñ2 V B D5.7 लक्ष्मणो नाम वीर्यवान्. —After 18, Dg1 Dt1 Dm1 D4.6.8 S (M2 after l. 2 of 373*) ins.:

375* एवं विलप्य बहुशो राक्षसी प्रदरोदरी ।
कराभ्यामुदरं हत्वा रुरोद भृशदुःखिता ।

[ (l. 1) G2 M2 बहुधा (for °शो). Dg1 G1.2 Cg विततोदरी; Dm1 D4.8 T G3 प्रततो°; M1.3 सा नतो°; M2 भृशदुःखिता; Cmp प्रथितो°; Ct as above (for प्रदरो°). —After l. 1, Dt1 Dm1 D4.6.8 T1 G2.3 ins.:

375(A)* भ्रातुः समीपे शोकार्ता नष्टसंज्ञा बभूव ह ।

[ D4 T1 दुःखार्ता (for शोकार्ता). Dm1 D4.8 G2.3 सा (for ह). ]

—(l. 2) M2 भित्वा (for हत्वा). M2 रुरोदातिरुषान्विता (for the post. half). ]

—M2 cont.:

376* इतीदमुक्त्वा भगिनी खरस्य सा
खरं स बाष्पाकुलदीप्तलोचना ।
रुरोद भूमौ पतिता निशाचरी
निकृत्तनासोष्ठमुखी सुदुःखिता ।

Colophon. —D1.2 cont. the Sarga. —*Sarga name*: Ś1 खरोद्धर्षणं; Ñ1 खरधर्षणं; Ñ2 V B D5.7 खरोद्दीपनं; D3 शूर्पणखावाक्यं. —*Sarga no.* (figures, words or both): Ś1 Ñ1 B1–3 om.; Ñ2 V2 D7 27; V1 26; B4 28; Dg1 Dt1 Dm1 D4.6.8 T G M1 21; D3 30; D5 17; M2.3 22. —After colophon, T2 concludes with श्रीरामचन्द्राय नमः; G with श्रीरामाय नमः.

# २१

एवमाधर्षितः शूरः शूर्पणख्या खरस्तदा ।
उवाच रक्षसां मध्ये खरः खरतरं वचः ॥ १
तवापमानप्रभवः क्रोधोऽयमतुलो मम ।
न शक्यते धारयितुं लवणाम्भ इवोत्थितम् ॥ २
न रामं गणये वीर्यान्मानुषं क्षीणजीवितम् ।
आत्मदुश्चरितैः प्राणान्हतो योऽद्य विमोक्ष्यति ॥ ३
बाष्पः संहियतामेष संभ्रमश्च विमुच्यताम् ।
अहं रामं सह भ्रात्रा नयामि यमसादनम् ॥ ४
परश्वधहतस्याद्य मन्दप्राणस्य भूतले ।
रामस्य रुधिरं रक्तमुष्णं पास्यसि राक्षसि ॥ ५
सा प्रहृष्टा वचः श्रुत्वा खरस्य वदनाच्च्युतम् ।
प्रशशंस पुनर्मौर्ख्याद्भ्रातरं रक्षसां वरम् ॥ ६ G. 3. 28. 8 B. 3. 22. 6 L. 3. 27. 6

## 21

D1.2 continue the previous Sarga. D8 begins with ॐ; M1 with श्रीरामाय नमः.

1 $^{b}$) B2 Dg1 D1 तथा; Dt1 D6 T3 G2 ततः ( for तदा ). —After $1^{ab}$, M2 ins. :

377* रोषसंरम्भताम्राक्षो महाबलपराक्रमः ।

—D6 reads $1^{c}$–2 in marg. —$^{d}$) M3 शूरः ( for खरः ).

2 D6 reads 2 in marg. (cf. v.l. 1). —$^{a}$) Ñ1 उवाच मानप्रभवः; Dg1 Dm1 D1.3.4.8 G M2.3 तवावमानप्रभवः; M1 तवापमानां दृष्ट्वैव. —$^{b}$) Ś1 M3 कोपो ( for क्रोधो ). T3 अपरो ( for अतुलो ). Ś1 Ñ1 Dg1 D1–3 T3 G3 महान् ; Ñ2 V B D5.7 मया ( for मम ). —$^{c}$) B1–3 D2 T3 वारयितुं ( for धारयितुं ). —$^{d}$) M2 लवणाब्धिम् ( for लवणाम्भ ). Dt1 Dm1 D6.8 Cm.t [ इ ]लवणं; G3 M3 [ इ ]द्धृतं; Cg as in text; Cm*p* ( also as in text ) [ इ ]दितं ( for [ इ ]त्थितम् ). Ś1 Ñ1 D1–3 लवणोर्मिरिवोद्ध( Ś1 °त्थि )तः; Ñ2 V B D5.7 वेलेव लवणांभसः( V B2 °सा; B1 °सां ).

3 $^{a}$) Ś1 Ñ1 D1–3 वीर्यं ( for वीर्यान् ). —$^{b}$) Ś1 क्षण- ( for क्षीण- ). —For $3^{ab}$, Ñ2 V B D5.7 M2 subst. :

378* मानुषं हीनवीर्यं च रामं न गणयाम्यहम् ।

[ Ñ2 D5.7 M2 तं ( for च ). V1 न रामं ( by transp. ). ]

—$^{d}$) Ś1 B2 निहतोद्य; Ñ1 D1( also as in text ).2.3 हतोद्य स; Ñ2 D5.7 हतो युद्धे ( for हतो योऽद्य ). Ñ1 Dg1 Dt1 Dm1 D4.6.8 T G Cr.k.t विमोक्ष्यते; Cg as in text.

4 $^{a}$) Ś1 बाष्पं ( for बाष्पः ). Ś1 Ñ1 D1–3 संगृह्यताम् ; Ñ2 B4 संक्रियताम् ; Dt1 D6 संधार्यताम् ( for संहियताम् ). Ñ1 V1 एव ( for एष ). D5 संशयो हियतामेष. —$^{b}$) D1 (*sup. lin.* also ) संभवं ( for संभ्रमश्च ). V2 परिमुच्यतां. —$^{c}$) Ś1 Ñ V D1–3.5.7 अद्य ( for अहं ). Dm1 समं ( for सह ).

5 $^{a}$) Ñ2 V B1.3.4 D5.7 गदयाभिहतस्य; B2 गदयातिहतस्य; T G M1 Ck परश्वथहतस्य ( for परश्वधहतस्य ). G3 [ अ ]स्य ( for [ अ ]द्य ). —$^{b}$) Ś1 Ñ2 V B D5.7 गतप्राणस्य. D1 तस्य च; D4 T1.2 M3 संयुगे; Cm as in text (for भूतले). —$^{c}$) D1 सफेन- ( for रामस्य ). Ñ1 त्वद्य ; Ñ2 V B D4.5.7.8 T1.2( after corr. ) व्यक्तम् ; Dm1 धातुम् ; D1.3 भूरि ( for रक्तम् ). —$^{d}$) Ñ2 V B D5 अद्य; D1 कोष्णं; D3 व्यक्तं ( for उष्णं ). V पास्यति; B3 पास्यामि ( for पास्यसि ). B3( marg. also ) फेनिलं; Dm1 D8 G3 M1 कांक्षितं ( for राक्षसि ). —After 5, Ñ2 V B D5.7 ins. :

379* मम बाणैर्निकृत्तानि तस्याङ्गानि पृथक्पृथक् ।
भक्षयिष्यसि संहृष्टा त्वमानीय ततस्ततः ।
सूदैः संपादितान्याशु स्निग्धानि च मृदूनि च ।
हते रामे सह भ्रात्रा सीतामांसानि भक्षये ।

[ (l. 1) B2 D5 बाण- ( for बाणैर् ). D5 -निकृंतानि. D7 om. ( hapl. ) second पृथक्. —(l. 2) Ñ2 V2 B1 भक्षयिष्यामि (sic). V समानीय; B3 त्वयानीय; B4 तमानीय ( for त्वमानीय ). B2 यतस् ( for ततस् ). —(l. 3) V2 illeg. up to मृदू. Ñ2 D7 गृध्रैः; B3 ( marg. also as above ) मुख्यैः; D5 मुदा ( for सूदैः ). Ñ2 D7 संस्वादितानि ( for संपा° ). —(l. 4) Ñ2 B4 D5.7 खादये; B2.3( marg. also as above ) भक्षय ( for भक्षये ). ]

6 $^{a}$) V1 सा च हृष्टा; Dg1 Dt1 D6 T1.3 संप्रहृष्टा; G( ed. ) साथ हृष्टा ( for सा प्रहृष्टा ). Dm1 D8 G3 M1 प्रहृष्टा वचनं श्रुत्वा. —$^{b}$) Ś1 Ñ V B1.2.4 D1–3.5.7 हृदयंगमं ( for वदनाच्च्युतम् ). —$^{c}$) V2 illeg. from स पुन up to विवृ in l. 2 of 380*. D5 शशंस तं ( for प्रशशंस ). Ś1 Ñ1 D1–3 क्रूरा; Ñ2 V1 B D5.7 हृष्टा; T2 मौढ्यात् ; G2 मोहात् ; M1 मुख्यं ( for मौर्ख्याद् ). —$^{d}$) D3 राक्षसं ( for भ्रातरं ). Ś1 Ñ1 D1–3 दीप्ततेजसं; V1 G1 M2.3 राक्षसाधिपं; G2 राक्षसेश्वरं ( for रक्षसां वरम् ). —After 6, Ñ2 V B D5.7 ins. :

380* दिष्ट्या ते वीर विक्रान्ता शत्रुविध्वंसनैषिणी ।
संग्रामसुभगा बुद्धिर्विवृद्धा राक्षसेश्वर ।
स्थितं मनः शत्रुवधे दिष्ट्या वीर सुनिश्चितम् ।
रावणस्यासि सदृशः शौर्येण च बलेन च ।
त्वया गुप्ता महाबाहो राक्षसा भीमविक्रमाः ।
विचरन्ति जनस्थाने विहरन्तो यथासुखम् ।
त्वया त्रैलोक्यविजये दैत्यदानवपन्नगाः ।
रावणेन सह भ्रात्रा सुराश्च युधि निर्जिताः ।
तव दत्त्वा जनस्थानं रावणो राक्षसाधिपः ।
लङ्कायां सुखितः शेते ससुहृत्सहबान्धवः ।

G. 3. 28. 17 B. 3. 22. 7 L. 3. 27. 7 तया परुषितः पूर्वं पुनरेव प्रशंसितः ।
अब्रवीद्दूषणं नाम खरः सेनापतिं तदा ॥ ७
चतुर्दश सहस्राणि मम चित्तानुवर्तिनाम् ।
रक्षसां भीमवेगानां समरेष्वनिवर्तिनाम् ॥ ८
नीलजीमूतवर्णानां घोराणां क्रूरकर्मणाम् ।
लोकहिंसाविहाराणां बलिनामुग्रतेजसाम् ॥ ९
तेषां शार्दूलदर्पाणां महास्यानां महौजसाम् ।
सर्वोद्योगमुदीर्णानां रक्षसां सौम्य कारय ॥ १०
उपस्थापय मे क्षिप्रं रथं सौम्य धनूंषि च ।
शरांश्च चित्रान्खड्गांश्च शक्तीश्च विविधाः शिताः ॥ ११

---

तव संजातकोपस्य मुखं दृष्ट्वा रणाजिरे ।
विद्रवन्ति भयत्रस्ताः सर्वभूता दिशो दश ।
एक एव स पर्याप्तो भवांस्तस्य गतायुषः ।
किं पुनः संवृतो घोरै राक्षसैर्भीमविक्रमैः ।
तच्छीघ्रमभिनिर्याहि बाधयास्य दुरात्मनः । [15]
पातुमिच्छामि रुधिरं रामस्य रणमूर्धनि ।

[ V2 illeg. up to विद्र in l. 2. —(l. 1) D5.7 दृष्ट्वा ( for दिष्ट्या ). D5 मे ( for ते ). —( l. 2 ) V1 B1.2 संग्रामे ( for संग्राम- ). D5 बुद्धिर् ( for बुद्धिर् ). B2 विबुधा; D7 विक्षता ( for विवृद्धा ). —V2 illeg. from l. 4 up to यथा in l. 6. —( l. 4 ) D7 [ अ ]पि ( for [ अ ]सि ). —( l. 5 ) Ñ2 मुदावाहो ( sic ) ( for महा° ). Ñ2 राक्षसी ( sic ) ( for राक्षसा ). D5 मम ( for भीम ). —( l. 6 ) B4 D5 जनस्थानं ( for जनस्थाने ). V1 निर्भयास्ते; B1 विहरंते; B2 विहरंति ( for विहरन्तो ). —( l. 8 ) V2 illeg. from सुराश्च up to l. 10. B2 पुरा युधि विनिर्जिताः ( for the post. half ). —( l. 9 ) B2 कृत्वा ( for दत्त्वा ). B2 बाधते ( for रावणो ). V1 B2 राक्षसेश्वरः. —( l. 10 ) B1 सुखतः ( for सुखितः ). V1 -गण-; B2 स-( subm. ) ( for सह- ). —( l. 11 ) V2 -रोपस्य ( for -कोपस्य ). —( l. 12 ) V B2 सर्वे भूता; B4 योधाः सर्वा ( for सर्वभूता ). V1 om. दश. —V2 illeg. for l. 13-14. —( l. 13 ) B2.3 तु ( for स ). V1 एकस्तावद्वधे शक्तो ( for the prior half ). —( l. 14 ) V1 संयुगे; D5 संवृतैर् ( for संवृतो ). —( l. 15 ) B3 ततः ( hypm. ) ( for तच्‌ ). V अभिनिर्यात ( for °निर्याहि ). —After l. 15, B3 ins. :

380(A)* येनासौ विकृता मेऽद्य भगिनी कामरूपिणी ।

—( l. 16 ) V2 तस्याहं ( for रुधिरं ). V1 B2 तस्याहं; V2 रुधिरं ( for रामस्य ). V2 बलमूर्धनि. ]

—After 6, M3 ins. 381*.

7 V2 illeg. for $7^{a}$–$8^{b}$. M2 reads $7^{a}$–$9^{c}$ *inf. lin. sec. m.* —$^{a}$) G2 तथा ( for तया ). Dm1 प्रधर्षितः ( for परुषितः ). M3 तयैव रुषितः पूर्वं. —For $7^{ab}$, Ś1 Ñ V1 B D1–3.5.7 subst.; M3 ins. after 6 :

381* ततः शूर्पणखावाक्यं श्रुत्वा श्रुतिमनोहरम् ।

[ Ś1 Ñ1 D2.3 M3 शूर्पणखी- ( for °णखा- ). Ś1 D2.3 श्रोत्र-; V1 प्रति- ( for श्रुति- ). ]

—$^{d}$) Ś1 Ñ V1 B D1–3.5.7 M2 सेनापतिमुप( V1 °मवा )-स्थितं.

8 V2 illeg. for $8^{ab}$; M2 reads 8 *inf. lin. sec. m.* ( for both cf. v.l. 7 ). —$^{b}$) D3 जनस्थाननिवासिनां. —$^{c}$) G2 भीमघोराणां. Dg1 घोराणां हि महास्यानां. —$^{d}$) Ś1 Ñ1 D1.2 घोराणां चंडकर्मणां; D3 घोराणां चानुवर्तिनां.

9 M2 reads $9^{abc}$ *inf. lin. sec. m.* ( cf. v.l. 7 ). V2 illeg. for $9^{bcd}$. Dg1 Dt1 D6 T3 om. $9^{b}$. —$^{ab}$) G2 घोषाणां ( for घोराणां ). Ś1 Ñ1 D1.2 अंजनाचलवर्चसां; Dm1 D8 G3 M1 घोराणां कामरूपिणां ( for $^{b}$ ). D3 यंत्रप्रतिमवेगानां नीलजीमूतवर्चसां. —Dm1 D8 G3 transp. $9^{cd}$ and $10^{ab}$. —$^{c}$) M3 damaged for कहिंसाविहा. Ś1 Ñ1 D1.2 मांस- ( for लोक- ). Dg1 Dt1 D6 T3 -विहारिणां; Dm1 -विकाराणां ( for -विहा° ). ❀ Ck : लोकस्य त्रैलोक्यप्राणिनः पीडारूपो विकारो यैरेवासाधारण्येन ते तथा. ❀ —Dg1 Dt1 D6 T3 om. $9^{d}$–$10^{b}$. G( ed. ) transp. $9^{d}$ and the post. half of l. 2 of 382*. —$^{d}$) Ś1 Ñ2 V1 B D1.2.5.7 कामरूपिणां; Ñ1 illeg. ( for उग्रतेजसाम् ). D3 घोराणां कामरूपिणां. —After 9, B3( marg. ).4 G( ed. ) ins. :

382* वज्रतुल्यप्रतापानां जनस्थाननिवासिनाम् ।
युधि हिंसाविहाराणामनेकायुधधारिणाम् ।

[ ( l. 1 ) G( ed. ) वज्रप्रतिमवेगानां ( for the prior half ). —( l. 2 ) B3 मुनिर्हिंसानुरक्तानाम् ( for the prior half ). ]

10 Dg1 Dt1 D6 T3 G2 om. $10^{ab}$ ( for all except G2 cf. v.l. 9 ). Dm1 D8 G3 transp. $9^{cd}$ and $10^{ab}$. —$^{a}$) M3 damaged for तेषां शा. Ś1 D2 -वीर्याणां; G1 M2.3 -सत्त्वानां ( for -दर्पाणां ). —$^{b}$) Ñ2 V1 B D5.7 असह्यानां; V2 समस्तानां; M2.3 महतां च ( for महास्यानां ). Dm1 D8 महात्मनां ( for महौजसाम् ). —$^{c}$) B1 समुद्योगम्. Ś1 Ñ1 D1–3 सर्वोद्योगसमर्थानां; D6.7 सर्वोद्योगसुदीर्णानां. —$^{d}$) Ñ1 अभ्यहारय; D1–3 सौम्य हारय ( for सौम्य कारय ).

11 $^{a}$) V1 B4 D1.5 च ( for मे ). D3 शीघ्रं ( for क्षिप्रं ). Ñ2 B1–3 उपस्थापयत क्षिप्रं. —$^{b}$) V B D5 मम; D1 प्रासान् ( for सौम्य ). V2 illeg. from धनूंषि च up to l. 2 of 384*. D7 मम तूर्णं धनूंषि च. —$^{c}$) Ś1 Ñ1 D2 शक्तीश् ( for खड्गांश् ). D1.3 शरांश्च विविधास्तीक्ष्णान्( D3 °धांश्चित्रान् ); D4 T1.2 शरांश्चित्रांश्च खड्गांश्च. —$^{d}$) D3 T3 M2.3 विमलाः ( for विविधाः ). Ś1 Ñ1 D1.2 खड्गांश्च विमलाञ्शितान्. —For $11^{cd}$, Ñ2 V1.2 ( illeg. ) B D5.7 subst. :

383* शक्तिं च विमलां दिव्यां खड्गं चाकाशवर्चसम् ।

[ B1 विपुलां ( for विमलां ). Ñ2 D5.7 शूलं ( for खड्गं ). B4 -संनिभं ( for -वर्चसम् ). ]

अग्रे निर्यातुमिच्छामि पौलस्त्यानां महात्मनाम् ।
वधार्थं दुर्विनीतस्य रामस्य रणकोविदः ॥ १२
इति तस्य ब्रुवाणस्य सूर्यवर्णं महारथम् ।
सदश्वैः शबलैर्युक्तमाचचक्षेऽथ दूषणः ॥ १३
तं मेरुशिखराकारं तप्तकाञ्चनभूषणम् ।
हेमचक्रमसंबाधं वैदूर्यमयकूबरम् ॥ १४
मत्स्यैः पुष्पैर्द्रुमैः शैलैश्चन्द्रसूर्यैश्च काञ्चनैः ।
माङ्गल्यैः पक्षिसंघैश्च ताराभिश्च समावृतम् ॥ १५
ध्वजनिस्त्रिंशसंपन्नं किङ्किणीकविभूषितम् ।
सदश्वयुक्तं सोऽमर्षादारुरोह रथं खरः ॥ १६ G. 3. 28. 32 B. 3. 22. 15 L. 3. 27. 16

—Thereafter cont. :

384* आयसीश्च गदा दिव्याः शतघ्नीश्च महास्वनाः ।
परश्वधान्सुतीक्ष्णांश्च नाराचांश्चोग्रदर्शनान् ।
भिन्दिपालान्सुतीक्ष्णाग्रान्पाषाणांश्च ग्रहोपमान् ।
प्रासान्पाशांस्तथा पर्शून्कुन्तांश्च कुणपांस्तथा ।
त्रिकण्टकान्भुशुण्डीश्च मुसलान्यायसानि च । [5]
परिघास्तोमरांश्चैव मुद्गराः कूटमुद्गराः ।
तनुत्राणि विचित्राणि कवचा जालिकास्तथा ।
यानि चान्यानि दिव्यानि आयुधानि महान्ति च ।
तान्यस्मिन्स्यन्दने क्षिप्रं न्यस्यन्तामविचारणात् ।

[ V2 illeg. for l. 1 and 2. —( l. 1 ) B1 आयसीं च गदां दिव्यां ( for the prior half ). Ñ2 B2 D5 महाधनाः; V1 B3 ( also ) महाबलाः; D7 om. ( for महास्वनाः ). —( l. 2 ) D7 *** धान्. B2-4 परश्वधाः सुतीक्ष्णाश्च नाराचाश्चोग्रदर्शनाः. —( l. 3 ) V सुतीक्ष्णांश्च; D5 सतीक्ष्णाभान् ( for सुतीक्ष्णाग्रान् ). G( ed. ) महोपलान्. B2-4 भिंदिपालाः सुतीक्ष्णाग्राः पाषाणाश्च ग्रहोपमाः. —( l. 4 ) Ñ2 D5 पाशाः प्रासास्; V1 पाशान्प्रासांस् ( by transp. ); V2 प्राशाः प्राशास्; B2.4 प्रासाः पाशास्; B3 D7 पाशाः प्रासास् ( for प्रासान्पाशांस् ). Ñ2 D7 पर्शुर्हुताशः; V1 पर्शून्नाराश्च; V2 B4 पर्शुर्हुताशाः; B2.3 पर्शून्कुंताः( subm. ); D5 पर्शुं हुताशः ( for पर्शून्कुन्तांश्च ). Ñ2 कुमपास्; B1 कणपांस्; B2.4 कणपास्; B3 D5.7 कुणपास् ( for कुणपांस् ). V2 illeg. from पांस्तथा up to l. 7. —( l. 5 ) V1 B4 D5.7 त्रिकंटका. Ñ2 B4 भुशुंडश्; D5.7 भृशुंडश् ( for भुशुण्डीश् ). —( l. 6 ) B4 सकुणाश् ( for तोमराश् ). V1 B1 परिघान्तोमरां( B1 °न्लांगलां )श्चैव मुद्गरान्कूटमुद्गरान्. —D7 reads l. 7 after l. 4. —( l. 7 ) Ñ2 B4 D7 तनुत्राणानि चित्राणि ( for the prior half ). V1 कवचाञ्जालिकांस्तथा ( for the post. half ). —( l. 8 ) Note hiatus between the two halves. V1 ( to avoid hiatus ) स्वायुधानि. —( l. 9 ) Ñ2 B2 D5.7 अन्यस्मिन् ( for तान्य° ). V2 illeg. from ने क्षिप्रं up to st. 12. B4 अविचारितं. ]

12 V2 illeg. for 12 ( cf. v.l. 384* ). —[a]) V1 अग्रे निर्यातु मित्राणां; D3 अवनिं त्रातुमिच्छामि. —[b]) Ś1 Ñ1 D1.2 बलस्यास्य महाबल( D1.2 °लः ). —[c]) Ś1 Ñ1 D1.2 G1 अविनीतस्य ( for दुर्वि° ). —[d]) Ñ1 वनवासिनः; Ñ2 V1 B D5.7 रणकांक्षिणः; Dg1 Dt1 D4 G2 M3 °कोविद; Dm1 D8 G3 °मूर्धनि; Cg as in text ( for रणकोविदः ).

13 [a]) Ñ2 V B D5.7 वचः श्रुत्वा ( for ब्रुवाणस्य ). —[b]) Ś1 Ñ1 D2 स्वर्णवर्णं; Ñ2 V B D5.7 न( V1 अ )चिरेण; D1 सुवर्णस्य ( for सूर्यवर्णं ). Ñ1 महाबलं; V1 महारथः ( for महारथम् ). —[c]) Ś1 सुबलैर्; Ñ1 B4 Dg1 D1.3.5.7 M3 सबलैर्; V1 सकलैर्; D2 तु बलैर्; G2 विपुलैर्; M1 च बलैर् ( for शबलैर् ). —[d]) Ś1 Ñ B4 D5.7 [ऽ]स्य; V1 D1.3 स; V2 B2 D2 च ( for ऽथ ). B1 आचचक्षे भृशं तदा.

14 V2 illeg. from 14[a] up to सूर्यै in 15[b]. —[a]) B2 तमेव ( for तं मेरु- ). —[b]) T3 G1 -भूषितं ( for -भूषणम् ). —T3 om. ( hapl. ) 14[c]–16[b]. —[c]) Ś1 D1.2 -चित्रम् ( for -चक्रम् ). Ñ1 महेंद्रायुधनादं वै; B1 हेमचामरसंबाधं. —[d]) Ś1 Dg1 D2-4.6 G2.3 M2.3 Cr.m.k वैडूर्य-. Ñ2 V1 B D7 G1 M1( before corr. ) वैदू( G1 M1 °डू )र्यमणिकूबरं. —After 14, Ñ2 V1 B D5.7 ins. :

385* नानारत्नसमाकीर्णं कामगं नगरोपमम् ।

[ B1 गगनोपमं ( for नगरो° ). ]

15 V2 illeg. up to सूर्यै in [b]; T3 om. 15 ( for both, cf. v.l. 14 ). D5 om. from मै: in 15[a] up to सदश्वयु in 16[c]. —[a]) V1 फलैर्; B2 मान्यैः; T2 मंत्रैः ( for मत्स्यैः ). Ś1 B4 D1.2 शैलैर्; Ñ1 illeg.; Ñ2 D5.7 पुष्प-; V1 मत्स्यैर् ( for पुष्पैर् ). Ś1 D2 मुख्यैश्; Ñ1 V1 B4 D1 पुष्पैश्; D3 चैव ( for शैलैश् ). —[b]) Ś1 Ñ1 D1.2 चंद्रादित्यैश्; B1 चंद्रैः सूर्यैश्; Dt1 D6 M1 चंद्रकांतैश् ( for चन्द्रसूर्यैश् ). Ñ2 काननैः. —[c]) Ñ1 D1.2.4 M2.3 मंगल्यैः; Ñ2 V B D7 राजतैः; Dg1 Dm1 D3.8 T2 Cr.m.g.k मंगलैः; Ct as in text ( for माङ्गल्यैः ). —V2 illeg. from च up to 17[c]. V1 पक्षिसंघातैस्; B2 D8 परिसंघैश्च; D3 पक्षिभिश्चैव ( for पक्षिसंघैश्च ). G1.2 M1 पक्षिसंघैश्च मातंगैस्( G2 मांगल्यैस्; M1 मंगल्यैस् ). —[d]) D3 मृगैश्चापि; M2 तारकाभिर्; M3 नानाभेदैः ( for ताराभिश्च ). Ś1 D3 समन्वितं; Ñ2 V1 B D7 M2 विचित्रितं; D1.2 समाचितं ( for समावृतम् ). Ñ1 ताराभिः समलंकृतं; D4 T1.2 G1.2 ताराभिरभिसंवृतं( T2 °तः ).

16 T3 om. 16[ab] ( cf. v.l. 14 ). V2 illeg. for 16; D5 om. up to सदश्वयु in [c] ( for both, cf. v.l. 15 ). —[a]) Ś1 Ñ V1 B D1-3.7 ध्वजिनं श( B2 व; B4 चा )स्त्रसंपन्नं( B2 °पूर्णं ). —[b]) Ñ2 V1 D7 किंकिणीशतशोभितं; B D1 किंकिणीशतभूषितं; Dg1 D8 किंकिणीवरभूषितं; Dt1 D6 किंकिणीरत्नभूषितं; Dm1 G3 किंकिणीभिर्विभूषितं; D3 सानुकर्षं महास्वनं; M1 किंकिणीजालभूषितं; K( ed. ) किंकिणीकविराजितं; G( ed. ) किंकिणीशतमंडितं. —[c]) Ñ1 दशाश्वयुक्तं. Ś1 Ñ1 D1.2 सामर्षे ( Ñ1 °र्षै )स्; Ñ2 V1 B1.2.4 D5.7 सामर्षम्; B3 Dg1 Dm1 D6.8 T2.3 सामर्षाद् ( for सोऽमर्षाद् ). D3 अतित्रिदंडं द्युतिमान्. —[d]) Ś1 Ñ1 D2 तमारोहद्; D1 समारोहद् ( for

G. 3. 28. 33
B. 3. 22. 16
L. 3. 27. o

निशाम्य तं रथगतं राक्षसा भीमविक्रमाः ।
तस्थुः संपरिवार्यैनं दूषणं च महाबलम् ॥ १७
खरस्तु तान्महेष्वासान्घोरचर्मायुधध्वजान् ।
निर्यातेत्यब्रवीद्दृष्ट्वा रथस्थः सर्वराक्षसान् ॥ १८
ततस्तद्राक्षसं सैन्यं घोरचर्मायुधध्वजम् ।
निर्जगाम जनस्थानान्महानादं महाजवम् ॥ १९
मुद्गरैः पट्टिशैः शूलैः सुतीक्ष्णैश्च परश्वधैः ।
खड्गैश्चक्रैश्च हस्तस्थैर्भ्राजमानैश्च तोमरैः ॥ २०
शक्तिभिः परिघैर्घोरैरतिमात्रैश्च कार्मुकैः ।
गदासिमुसलैर्वज्रैर्गृहीतैर्भीमदर्शनैः ॥ २१
राक्षसानां सुघोराणां सहस्राणि चतुर्दश ।
निर्यातानि जनस्थानात्खरचित्तानुवर्तिनाम् ॥ २२
तांस्त्वभिद्रवतो दृष्ट्वा राक्षसान्भीमविक्रमान् ।
खरस्यापि रथः किंचिज्जगाम तदनन्तरम् ॥ २३

आरुरोह ). Dt1 D4.6 T1.2 G2 खरस्तदा; T3 विभूषणः; K( ed. ) G( ed. ) खरो रथं ( by transp. ) ( for रथं खरः ).

17 V2 illeg. up to $17^{c}$ ( cf. v.l. 15 ). Ś1 Dt1 D6 om. 17.—$^{a}$) V1 B Dg1 D2.3.5.7 T3 निशम्य. Ñ1 Dg1 Dm1 D1–4.8 T G M1.3 तु( D1 च )रथस्थं तं( G1 तु ) ( for तं रथगतं ). ❀ Cm : रथस्थं खरं निशाम्य दृष्ट्वा. ❀ —$^{b}$) T1 G2.3 राक्षसं ( for राक्षसा ). V1 भीमपराक्रमाः ( hypm. ); B3 T1 भीमविक्रमं.—$^{c}$) Dg1 Dm1 D8 T3 G3 M1 ते परिवार्य; G1 स्म परि° ( for संपरि° ).—$^{d}$) Ñ1 B2–4 D1–3.5.7 दूषणश् ( for °णं ). Ñ V1 B4 D1–3.5.7 महाबलः; B1–3 महाबलाः; M2.3 °रथं ( for °बलम् ).

18 $^{a}$) Ś1 Ñ1 B3 Dt1 D1.2.6.7 M Ct तन्महत्सैन्यं; Ñ2 V B1.2.4 D5 तन्म( B1.4 तं म )हासैन्यं( V2 illeg. from सैन्यं up to $19^{b}$ ); Dg1 T3 तान्महाप्राज्ञा( T3 °सा )न् ; D3 दृष्ट्वा तत्सैन्यं ( for तान्महेष्वासान् ).—$^{b}$) Dg1 Dm1 D1–4 T G M1.2 -वर्मा- ( for -चर्मा- ). Ś1 Ñ1 D1–3 M1.2 -ध्वजं ( for -ध्वजान् ). Ñ2 V1 B D5.7 दृष्ट्वा नानायुधध्वजं( B2 °धान्वितं ); Dt1 D6 रथचर्मायुधध्वजं; M3 घोरकर्मायुधध्वजं.—T1 reads $18^{c}$–$19^{b}$ twice.—$^{c}$) M2 निर्यांतु ( for निर्यात ). Ś1 Ñ V1 B1 Dm1 D2.3.5.7.8 G3 M [ अ ]ब्रवीद्रु( D3.8 °त्ह )ष्टो; Dg1 °त्क्रुद्धो; Dt1 D6 T1( second time ) °त्प्रेक्ष्य; D1 °द्दृष्टो ( for [ अ ]ब्रवीद्दृष्ट्वा ).—$^{d}$) Dt1 D6 T1( second time ) Ct दूषणः ( for रथस्थः ). D1 सर्वरक्षसां ( for °राक्षसान् ). ❀ Ck : खरस्तु तत् महत्सैन्यं घोरवर्मायुधध्वजमिति पाङ्कः । सर्वराक्षसानिति । सेनाप्रधानानिति शेषः । अथ सेनापतिप्रेषणं । ततस्तु तन्महदित्यादि । रथवर्मायुधध्वजं, निर्यातेत्यब्रवीत् प्रेक्ष्य दूषणः सर्वराक्षसानिति पाङ्कः. ❀

19 V2 illeg. for $19^{ab}$; T1 repeats $19^{ab}$ ( for both, cf. v.l. 18 ).—$^{ab}$) Ck अतस् ( for ततस् ). D1 तं ( for तद् ). Dm1 D8 G3 M1 रक्षसां ( for राक्षसं ). D4 T1.2 ततस्तु तन्महत्सैन्यं; M2 ततो राक्षससैन्यं तत् .—$^{b}$) Dg1 Dm1 D1–4.8 T3 G M1.2 -वर्म-; M3 -कर्म- ( for -चर्म- ). Ñ2 V1 B D5.7 G( ed. ) ततो राक्षससैन्यं तच्छूलशक्ति( G[ ed. ] °च्छक्तिशूल [ by transp. ] )गदाधरं.—$^{c}$) Ñ1 आजगाम ( for निर्जगाम ). D3 जनस्थानं ( for °नान् ).—$^{d}$) D3 निजस्थानान् ( for महानादं ). Ś1 Ñ V B D1.2.5.7 महोदधिसमस्वनं; Dm1 D8 G3 खरचित्तानुवर्तिनां; T3 महावेगं महास्वनं.

20 The sequence of st. from 20–24 ( D3 up to 25 ) in Ś1 Ñ1 D1–3 is: 23, 24, 25( only D3 ), 22, 20 and 21.—$^{a}$) Ś1 Ñ1 D1–3 आयसैः; Cv पट्टिसैः; Cr.m*p*.k पट्टसैः; Cg.k( also ) as in text ( for पट्टिशैः ).—$^{b}$) G1.2 तीक्ष्णैश्चैव ( for सुतीक्ष्णैश्च ).—$^{c}$) D1 हस्तैश्च; M3 पाशैश्च ( for हस्तस्थैर् ). Ñ1 Dt1 D6 खड्गैश्चक्रै रथस्थैश्च; M2 शूलानि चोद्वहंतस्ते.—$^{d}$) Dg1 भ्राजमानः; D4 भ्राजमानं ( for भ्राजमानैश् ). Dg1 Dt1 Dm1 D4.6.8 T G M1 स- ( for च ). Ś1 Ñ1 D1–3 M2.3 निर्ययुर्नैऋतर्षभाः( D1 °भौ ).—For 20, Ñ2 V B D5.7 subst. :

386* मुद्गरान्शक्तिखड्गांश्च सुतीक्ष्णांश्च परश्वधान् ।
सर्वे शूलानि चादाय निर्ययू राक्षसर्षभाः ।

[ ( l. 1 ) B1 मुद्गरं ( for °रान् ). Ñ2 तोमरांश्; V2 सुतीक्ष्णैश् ( for सुतीक्ष्णांश् ).—V2 illeg. from l. 2 up to st. 21.—( l. 2 ) V1 खरस्य रथमास्थाय; B2–4 शूलानि चादाय तदा( B4 °था ) ( for the prior half ). ]

21 For sequence in Ś1 Ñ1 D1–3, cf. v. l. 20. V2 illeg. for 21 ( cf. v.l. 386* ).—$^{a}$) Ñ2 V1 B D5.7 पट्टिशैः ( for परिघैर् ). Ñ2 B1–3 चान्यैस् ; V1 B4 D5.7 चान्ये ( for घोरैर् ). Ś1 Ñ1 D1–3 भिंडिपा( D3 °मा )लैश्च निशितैर्.—$^{b}$) Ñ2 V1 B D5.7 तथासिवर- ( for अतिमात्रैश्च ).—$^{c}$) Ś1 Ñ V1 B Dm1 D1–3.5.7 M2 गदाभिर् ( for गदासि- ). Ś1 Ñ1 D2.3 खड्गैर् ; Ñ2 D1.5.7 शूलैर् ; V1 B चक्रैर् ( for वज्रैर् ).—$^{d}$) Ś1 Ñ V1 B2–4 D1–3.5.7 उग्रदर्शनाः; B1 व्य( marg. also उ )ग्रदर्शनाः; T3 घोर°; G1.2 M उग्र° ( for भीमदर्शनैः ).—After 21, D3 repeats 25.

22 For sequence in Ś1 Ñ1 D1–3, cf. v.l. 20.—$^{a}$) Ś1 Ñ1 B3 D1.3 M3 सहस्राणि( B3 °णां ); Ñ2 V1 D5.7 T2 तु ( V1 च )घोराणां ( for सुघोराणां ).—$^{b}$) Ś1 Ñ1 B3 D3 M3 सुघोराणि( Ñ1 M3 °णां ); B4 सहस्राणां; D1 घोराणां च ( for सहस्राणि ).—$^{d}$) Ñ2 V B D5.7 खरस्य वशवर्तिनां.—After 22, D3 ins. :

387* सर्वे ते चागता दूरात्खरचित्तानुसारिणः ।

23 For sequence in Ś1 Ñ1 D1–3, cf. v.l. 20. T3 om. 23. D3 om. $23^{ab}$ and wrongly reads $24^{ab}$ in its place.—$^{a}$) Ś1 Ñ1 D1.2 M2 तांस्तु( D2 °श्च ) निर्धावितान्दृष्ट्वा; Ñ2 V B D5.7 निर्गच्छतस्तु( B4 °तं तु ) तान्द( B3 तौ द )ष्ट्वा;

ततस्ताञ्शबलानश्वांस्तप्तकाञ्चनभूषितान् ।
खरस्य मतमाज्ञाय सारथिः समचोदयत् ॥ २४
स चोदितो रथः शीघ्रं खरस्य रिपुघातिनः ।
शब्देनापूरयामास दिशश्च प्रदिशस्तथा ॥ २५

प्रवृद्धमन्युस्तु खरः खरस्वनो
रिपोर्वधार्थं त्वरितो यथान्तकः ।
अचूचुदत्सारथिमुन्नदन्पुन-
र्महाबलो मेघ इवाश्मवर्षवान् ॥ २६ G. 3. 28. 42 B. 3. 22. 24 L. 3. 27. 25

इति श्रीरामायणे अरण्यकाण्डे एकविंशः सर्गः ॥ २१ ॥

Dt1 Dm1 D6.8 G3 M1 तांस्तु निर्धावतो दृष्ट्वा. —b) Dt1 Dm1 D6.8 G3 M1.2 भीमदर्शनान् ( for °विक्रमान् ). —cd) Dt1 D6 [ अ ]थ; Ck.t as in text ( for [ अ ]पि ). D3 खरस्य मतमाज्ञाय ( = $24^{c}$ ). Ñ2 V B D5.7 खरोपि( Ñ2 D5.7 °रोथ; B4 °रश्च ) स्व( Ñ2 सु )रथेनाशु निर्ययौ बलदर्पितः.

24 For sequence in Ś1 Ñ1 D1–3, cf. v.l. 20. —a) V1 तत्र ( for ततस् ). M3 तु ( for ताञ् ). B3 बलवान् ; D1 प्रबलान् ; M1 च बलान् ; M3 शलभान् ( for शबलान् ). —b) Ś1 Ñ B2 Dg1 Dm1 D1–3.5.7.8 T3 M -भूषणान् ( for भूषितान् ). —D5 om. $24^{cd}$. —c) Cg मतिं ( for मतम् ). V1 D4 T1.2 G1 आस्थाय ( for आज्ञाय ). B1 च तमादाय ( for मतमाज्ञाय ). —d) Ś1 D1.2 प्रत्यचो( D1 °नो )दयत् ; Ñ1 लघुविक्रमः; V2 समदेशयत् ; Dt1 D6 पर्यचोदयत् ( for समचोदयत् ). B1 सारथिं समदेशयत् ; B3 निर्ययू राक्षसर्षभाः.

25 V2 illeg. for $25^{abc}$. D3 repeats 25 after 21. —a) Dg1 Dt1 D6 T3 संचोदितो; D1 स नोदितो; D3 प्रचोदितो ( for स चोदितो ). Ś1 Ñ1 D1.2 श्रीमान् ( for शीघ्रं ). Ñ2 V1 B D5.7 निर्गच्छतो( V1 B °न्स ) रथस्त( B1 °स्त्व; D5.7 °स्थ )स्य. —b) Ñ2 D5.7 तत्सैन्यं ( for खरस्य ). G2 खरस्याध्वरघातिनः. —c) Ś1 Ñ B D1–3.5.7 T2 G2 पूरयामास ( for [ आ ]पूरयामास ). —d) D2.3.6 स दिशः ( for दिशश्च ). Ś1 Ñ1 B3 च विदिशस् ; Ñ2 V B1.2.4 D5.7 M2 चोपदिशस् ; Dt1 D4 T1 सप्रदिशस् ; D1 T3 प्रतिदिशस् ( for च प्रदिशस् ). K( ed. ) तदा ( for तथा ). ❀ Ct : संचोदित इत्यादि श्लोकद्वयं कतकसंख्यारीत्या प्रक्षिप्तं. ❀

26 a) Ś1 D2 प्रवृद्धसैन्यस् ; Ñ2 V B D5.7 विवृद्धमन्युः. Ñ2 V B D3.5.7 M3 स; D1 च ( for तु ). Ñ2 om. खरः. Ś1 समस्वनो; Ñ1 Dt1 D6 M2 °रस्वरो ( for खरस्वनो ). —b) V1 वधार्थे- ( for वधार्थं ). Ś1 Ñ1 D1–3 विनिर्गतः ( for यथान्तकः ). Ñ2 V B D5.7 कुपितां( Ñ2 B2 D7 °तों )तकोपमः ( for त्वरितो यथान्तकः ). —c) Ś1 Ñ1 D2.3 प्रा( D2.3 प्र )चोदयत् ; D1 प्रनोदयत् ; D4 G1 M अचोदयत् ( for अचूचुदन् ). Ś1 Ñ1 Dg1 D1–4 T1.2 G1.2 M2 भृशं; K( ed. ) Cm.g घनं ( for पुनर् ). Ñ2 V2 B2–4 D5.7 प्रचोदयामास भृशं ससारथिं; V1 B1 प्रचोदयामास रथं स( B1 च )सारथिं. —V2 illeg.; G3 damaged for d. —d) Ś1 D2 महाधनो; D1 मनोरथो; Cg as in text; Cgp महानिलो ( for महाबलो ). Ñ1 [ अ ]श्मवान्यथा ( for [ अ ]श्मवर्षवान् ). Ñ2 V1 B D5.7 महाबलस्तू( B4 लं तू )र्णतरं व्रजेत्यथ.

Colophon. —*Sarga name* : Ś1 खरसैन्यनिर्याणः; Ñ V2 B D1.5.7 खरनिर्याणं; V1 खरप्रयाणं; D2.3 खरनिर्याणः —*Sarga no.* ( figures, words or both ) : Ś1 Ñ1 B1.3 D1.2 om.; Ñ2 V2 D7 28; V1 27; B2.4 29; Dg1 Dt1 Dm1 D4.6.8 S 22; D3 31; D5 18. —After colophon, G1.2 conclude with श्रीरामाय नमः; G3 with श्रीमते रामानुजाय नमः.

# २२

G. 3. 19. 1
B. 3. 23. 1
L. 3. 28. 1

तत्प्रयातं बलं घोरमशिवं शोणितोदकम् ।
अभ्यवर्षन्महामेघस्तुमुलो गर्दभारुणः ॥ १
निपेतुस्तुरगास्तस्य रथयुक्ता महाजवाः ।
समे पुष्पचिते देशे राजमार्गे यदृच्छया ॥ २
श्यामं रुधिरपर्यन्तं बभूव परिवेषणम् ।
अलातचक्रप्रतिमं प्रतिगृह्य दिवाकरम् ॥ ३
ततो ध्वजमुपागम्य हेमदण्डं समुच्छ्रितम् ।
समाक्रम्य महाकायस्तस्थौ गृध्रः सुदारुणः ॥ ४
जनस्थानसमीपे च समाक्रम्य खरस्वनाः ।
विस्वरान्विविधांश्चक्रुर्मांसादा मृगपक्षिणः ॥ ५
व्याजह्रुश्च प्रदीप्तायां दिशि वै भैरवस्वनम् ।
अशिवा यातुधानानां शिवा घोरा महास्वनाः ॥ ६
प्रभिन्नगिरिसंकाशास्तोयशोणितधारिणः ।
आकाशं तदनाकाशं चक्रुर्भीमा बलाहकाः ॥ ७

## 22

D8 begins with ॐ; T2 with श्रीरामचन्द्राय नमः; M1 with श्रीरामाय नमः.

1 $^{a}$) Ś1 B1 D1.2 तं प्रयातं; Ñ V B2–4 D3–5.7 T1.2 M1–3 तं प्रयांतं, Dg1 T3 G तस्मिन्याते; D6 तत्प्रयांतं; Cmp as in text (for तत्प्रयातं). Ś1 Ñ V B D1–3.5.7 जय(D1 °न)प्रेप्सुम्; Dg1 बले घोरे; D4 T G जनस्थानाद्; M2.3 खरं वीरम् (for बलं घोरम्). ❀ Cg : तस्मिन्यात इत्यादि ।; Ck तस्मिन्नित्यादि. ❀—$^{b}$) Dt1 अशिव- (for °वं). Ś1 अशुभः शोणितोदकः; Ñ1 D1–3 M2.3 अशुभाः(M2.3 °शिवाः) शोणितोदकाः. G3 illeg. for 1$^{c}$–2$^{b}$.—$^{c}$) V1 B1 D5.7 अश्मवर्षं; V2 B2–4 अश्मवर्षी (for अभ्यवर्षन्). Ñ1 D1–3 M2.3 महामेघास्; Dt1 D6 °घोरस् (for °मेघस्). ❀ Ct : अभ्यवर्षन्मेघ इति शेषः. ❀—$^{d}$) T2 तुमुलं (for °लो). Ś1 लोमहर्षणः (for गर्दभारुणः). Ñ1 D1–3 तुमुला(D1 °लं) लोमहर्षणाः (D1 °णं); Ñ2 V B D5.7 सहसैव ववर्ष ह; M2.3 तुमुला गर्दभारुणाः. ❀ Cr : गर्दभारुणा धूसरवर्णाः ।; Ck अभ्यवर्षन्निति पदं । गर्दभारुणा धूसरवर्णाः. ❀

2 G3 illeg. for 2$^{ab}$ (cf. v.l. 1).—$^{a}$) Ñ2 D5.7 स्खलितास् (for तुरगास्). M2.3 चास्य (for तस्य).—$^{b}$) Ñ2 V B D5.7 जवनैस्तुरगा(V B स्खलिता) भृशं; G2 रथे युक्ता मनोजवाः.—For 2$^{ab}$, Ś1 Ñ1 D1–3 subst.:

388* पपात तुरगश्चास्य स्खलितो हेमभूषणः।
[Ś1 Ñ1 बलिनो (for स्खलितो).]

—G3 damaged from समे up to मा in $^{d}$.—$^{c}$) M2.3 सम्यक् (for समे). Ś1 तु प्रचिते; Ñ1 सूप°; Ñ2 V B D5.7 [अ]पि च तदा(B1 °था); D1 सुप्रथिते; D2 सुप्र°; D3 परि° (for पुष्प°).—$^{d}$) V B4 -मार्ग- (for -मार्गे). Ñ2 D5.7 तथा मुहुः; V B1.2.4 गता मुहुः; D6 यथेच्छया (for यदृच्छया).

3 Ś1 Ñ V B D1–3.5.7 transp. 3 and 4.—$^{a}$) Ś1 D3 श्यावं (for °मं). Ñ2 V B D5.7 च रक्त- (for रुधिर-). Ñ1 श्यावो रुधिरपर्यंतो (sic).—$^{b}$) Ñ2 D5.7 परिवेपकं; B1 °शनं; B2.3 °शणं (for °वेषणम्).—$^{d}$) Ś1 प्रतिगृह्णन्; B2 Dg1 D1.4.6.7 T2.3 G3 Cg परिगृह्य (for प्रति°).

4 Ś1 Ñ V B D1–3.5.7 transp. 3 and 4.—$^{a}$) D2 समाक्रम्य (for उपागम्य). Ś1 Ñ V B D1.3.5.7 M3 ततो (Ñ2 D5.7 तथा; V अथो; B अथा)स्य ध्वजमाक्रम्य(V M3 °गम्य); M2 ततोस्य तु ध्वजस्याग्रं.—$^{b}$) D2 -दंड- (for -दण्डं). Ñ2 D7 समुत्थितं. D3.5.6 हेमदंडसमुत्थितं.—$^{c}$) Ś1 Ñ1 D1–3 सहसैव; Ñ2 V B D5.7 तस्थौ गृध्रो; D8 समाकृष्य (for समाक्रम्य).—$^{d}$) Dg1 स दारुणः (for °रुणः). Ñ2 V B D5.7 वक्त्राच्छोणितमुद्वमन्(B2–4 °द्गिरन्).

5 $^{a}$) Ñ2 V B D5.7 -समीपं (for °पे). D1.4 T1.2 G1 M3 तु (for च).—$^{b}$) Ś1 Ñ1 D1–4 T2 G1.2 M समागम्य (for °क्रम्य). D4 M1 खरस्वराः (for °नाः). Ñ2 V B D5.7 समुत्पत्य(Ñ2 B1.3[m.] °पेत्य) महास्वनाः.—$^{c}$) G3 damaged from क्र up to प्रदी in 6$^{a}$. Dt1 D6 नादान् (for चक्रुर्). Ñ2 V B D5.7 विस्वरं(D5 °नं) बहुधा नेदुर्.—$^{d}$) Dt1 om. मांसादा. V2 गृध्र- (for मृग-).

6 G3 damaged up to प्रदी (cf. v.l. 5).—$^{a}$) Dg1 M2.3 अपि दीप्तायां; Dt1 D6 T3 Ct अभिदी°; T2 M1 चाभि (M1 अपि) दीप्तास्या (for च प्रदी°).—$^{b}$) G1 M2 भैरवं (for °व-). G2 -स्वनाः; M2.3 -स्वरं (for -स्वनम्). M1 दीप्तायां दिशि भैरवं.—For 6$^{ab}$, Ś1 Ñ V B D1–3.5.7 subst.:

389* व्याजहार च दीप्तायां याम्यायां दिशि भैरवम्।
[Ś1 Ñ1 D1–3 दीप्तास्या (for °यां). Ś1 Ñ1 D1–3 दीप्तायां (for याम्यायां). Ñ1 अशिवा शिवं (sic); D3 (m.) दिशि भैरवाः (for दिशि भैरवम्).]

—$^{c}$) Ñ1 तथैव; Dg1 Dt1 D6 T3 M2(before corr.) अशिवं; D3 अशुभं (for अशिवा).—$^{d}$) Dm1 D6 घोर- (for °रा). G3 -स्वराः (for °नाः). Ś1 शकुनी चैव संस्थिता; Ñ1 शकुनी दैवतार्थिता; D1.2 शकुनी देवसंज्ञिता; D3 शृगाली दैवनिर्मिता.—For 6$^{cd}$, Ñ2 V B D5.7 subst.:

390* रवं शिवा महाघोरा वमन्ती पावकं मुखात्।
[B1 वमंतं (for °न्ती).]

7 $^{a}$) Ś1 D2 ते भिन्ना; Ñ1 D3 ते भिन्न-; D1 विभिन्न- (for प्र°). Dt1 D6 G Ctp (also as in text) -गज-

बभूव तिमिरं घोरमुद्धतं रोमहर्षणम् ।
दिशो वा विदिशो वापि सुव्यक्तं न चकाशिरे ॥ ८
क्षतजार्द्रसवर्णाभा संध्या कालं विना बभौ ।
खरस्याभिमुखं नेदुस्तदा घोरा मृगाः खगाः ॥ ९
नित्याशिवकरा युद्धे शिवा घोरनिदर्शनाः ।
नेदुर्बलस्याभिमुखं ज्वालोद्गारिभिराननैः ॥ १०
कबन्धः परिघाभासो दृश्यते भास्करान्तिके ।
जग्राह सूर्यं स्वर्भानुरपर्वणि महाग्रहः ॥ ११
प्रवाति मारुतः शीघ्रं निष्प्रभोऽभूद्दिवाकरः ।
उत्पेतुश्च विना रात्रिं ताराः खद्योतसप्रभाः ॥ १२

G. 3. 29. 10
B. 3. 23. 13
L. 3. 28. 12

( for -गिरि- ). ❀ Cr.k : प्रभिन्नो मत्तः. ❀—For 7$^{ab}$, Ñ2 V B D5.7 subst. :

391* भिन्नभेरीस्वनाश्चैव मांसशोणितवर्षिणः ।

[ D7 भिन्ना ( for भिन्न- ). B1.3 -स्वराश् ( for -स्वनाश् ). ]

—D3 reads 7$^c$ in marg. —$^d$ ) Ś1 Ñ2 B1.3.4 D1.2.5.7 T2 भीम- ( for भीमा ). Dt1 D6 चक्रुर्भीमांबुवाहकाः.

8 $^b$ ) T2 उत्थितं; M2 उद्गतं ( for उद्धतं ). Ñ1 लोम- ( for रोम- ). D6 -हर्षिणं. Ś1 D2 सुमहल्लोमहर्षणं; D1.3 उद्गतं लोम°. —$^c$ ) D3 [ ऽ ]थ ( for the first वा ). Dg1 ( marg. also [ अ ]तिदिशो ) Dt1 D6 T3 प्रदिशो ( for वि° ). D3 च ( for the second वा ). —$^d$ ) T1.2 न च व्यक्तं ( for सुव्यक्तं न ). Dg1 T3 प्रकाशिरे. Ś1 Ñ1 Dm1 D1–3.8 G1.3 M1.3 न व्यक्तं ( Ñ1 नात्यर्थं ) प्र( Dm1 D8 G3 M1 सं )चकाशिरे; D4 G2 M2 न च व्यक्तं( M2 न व्यक्तं सं ) प्रकाशते( D4 °शिरे ). —For 8, Ñ2 V B D5.7 subst. :

392* तमसा चैव घोरेण समुद्धूतेन सर्वशः ।
प्रच्छादितं जनस्थानं न चकाशे समन्ततः ।

[ ( l. 1 ) B3 मुहूर्तेन च( m. also as above ) ( for समुद्धूतेन ). ]

9 $^a$ ) G1.3 -[ अ ]द्रि- ( for -[ आ ]र्द्र- ). Ś1 D3 -सवर्णस्तु; Ñ1 °र्णास्तु; D1 °र्णा तु; D2 °र्णांशुस्; G3 -सुवर्णाभा ( for -सव° ). Ñ2 V B D5.7 नभश्च रुधिराभासं. —$^b$ ) Ś1 D1–3 तस्मिन्काले रवि( D1 विनि )र्बभौ; Ñ1 तस्मिन्काले विनिर्बभुः. —$^c$ ) Dm1 D4.8 T G1.3 M1 [ अ ]भिमुखा; G2 °मुखे ( for °मुखं ). Ś1 Ñ V B1.3.4 Dg1 Dt1 D1–3.5–7 M2.3 खरं चाभिमुखा( Ñ2 °खे; B3 Dt1 D6 °खं ) नेदुः; B2 खराश्च विमुखा नेदुः. —$^d$ ) Dm1 Cg घोर- ( for °रा ). Ś1 खस्थाः खरतरस्वनाः; Ñ1 खखगाः खरनिस्वनाः; Ñ2 V B D1–3.5.7 G1 M2.3 खगाः ( V1 D2 °राः ) खस्थाः खरस्वनाः( D1.3 M2.3 °राः ); Dg1 खरा घोरखगा मृगाः. —After 9, Dg1 Dt1 Dm1 D4.6.8 T G2.3 M ins.; while G1 ins. after 10 :

393* कङ्कगोमायुगृध्राश्च चुक्रुशुर्भयशंसिनः ।

[ M2 कंका ( for कङ्क- ). G2 -वृद्धाश् ( for -गृध्राश् ). ]

10 Ś1 Ñ1 D1( after 12$^{ab}$ ).2.3 M2.3( both preceded by 398* ) read 10( $^{ab}$ and $^{cd}$ transp. ) after 12. —$^a$ ) Dg1 Cm.g -[ अ ]शुभकराः; G2 °शिवतराः ( for -[ अ ]शिवकरा ). D1 दीप्ता भयंकरा युद्धे. —$^b$ ) D1 पाप- ( for घोर- ). Dm1 G2 M2.3 -[ अ ]भिदर्शनाः; M1 -निद ** ( damaged ) ( for -निदर्शनाः ). —$^c$ ) Dm1 T2 G3 M1 [ अ ]भिमुखा ( for °मुखं ). Ś1 D2 सर्वश( D2 संघश )स्त्वस्थिरे भूमौ; Ñ1 D3 संघशश्च( D3 शब्दांश्च च )क्रिरे भूमौ; D1 M2.3 संघशश्चक्रुर्भीमा. —For 10, Ñ2 V B D5.7 subst. and read after 397* :

394* रुरुदुः संघशो घोराः पावकोद्गारिभिर्मुखैः ।
अशिवा दिशि दीप्तायां शिवास्तत्र भयावहाः ।

[ V2 mostly illeg. for l. 1 and 2. —( l. 1 ) B4 रुरुवुः ( for °दुः ). B1 सहसा ( for संघशो ). —( l. 2 ) D7 अदिवा ( for °शिवा ). ]

—After 10, G1 ins. 393*.

11 D1 om. 11. —$^a$ ) Dg1 Dm1 D4 T1.2 G3 कबंधाः. T2 परिघाभासाः; G2 °कारो ( for °भासो ). Cm.g.t कबंधः परिघाभासः ( as in text ). —$^b$ ) Dg1 Dm1 D4.8 T1.2 G3 दृश्यंते. —For 11$^{ab}$, Ś1 Ñ V B D2.3.5.7 subst. :

395* सकबन्धः सपरिघः स्वर्भानुश्च दिवाकरम् ।

[ Ś1 Ñ1 D2.3 भास्करं दीप्ततेजसं ( for the post. half ). ]

—$^c$ ) Ś1 Ñ1 कालपर्याप्तम्( Ñ1 °र्यंतम् ); Ñ2 B1 D5.7 कालपर्यंस्तस् : V B2–4 D2.3 कालपर्यंतम् ( for सूर्यं स्वर्भानुर् ). —$^d$ ) Ñ2 V B D2.3.5.7 त्वपर्वणि; G1 M2.3 पर्वणीव ( for अप° ). D3 तथा ( for महा- ).

12 $^a$ ) Ñ2 V B D1.5.7 प्रववौ. Ñ2 V B D5.7 चंडो; M2 रूक्षं ( for शीघ्रं ). Ś1 Ñ1 D2.3 न वाति( Ś1 चापि; Ñ1 रात्रि ) पवनः शीतो. —After 12$^a$, Ś1 D2.3 ins. :

396* न शशी सौम्यदर्शनः ।
उदयादुदितो द्योः.

—$^b$ ) Ś1 Ñ1 D2.3 च ( for ऽभूद् ). —After 12$^{ab}$, D1 reads 10 and om. 12$^c$–13$^d$. Dg1 reads 12$^{cd}$ in marg. —$^c$ ) Ś1 तदा नक्तं; Ñ1 विना वह्नं ( sic ); D2.3 M2 विना( M2 दिवा ) चंद्रं ( for °रात्रिं ). —$^d$ ) Ñ1 -निस्वनाः ( sic ); Dm1 D2.3.8 T3 G -संनिभाः ( for -सप्रभाः ). M2 ताराश्च विगतप्रभाः. —For 12$^{cd}$, Ñ2 V B D5.7 subst. ( followed by 394* ) :

397* उदभासद्दिवा चन्द्रस्तारागणसमन्वितः ।

[ V D5.7 तदभासद् ( for उद° ). Ñ2 D5.7 -समावृतः; V1 -निवेशितः ( for -समन्वितः ). ]

—After 12, Ś1 Ñ1 D2.3 read 10, while M2.3 ins. :

398* चक्रिरे विह्वलान्घोरान्मांसादा वनगोचराः ।

G. 3. 29. 12 B. 3. 23. 13 L. 3. 28. 13

संलीनमीनविहगा नलिन्यः शुष्कपङ्कजाः ।
तस्मिन्क्षणे बभूवुश्च विना पुष्पफलैर्द्रुमाः ॥ १३
उद्धूतश्च विना वातं रेणुर्जलधरारुणः ।
वीचीकूचीति वाश्यन्तो बभूवुस्तत्र सारिकाः ॥ १४
उल्काश्चापि सनिर्घोषा निपेतुर्घोरदर्शनाः ।
प्रचचाल मही चापि सशैलवनकानना ॥ १५
खरस्य च रथस्थस्य नर्दमानस्य धीमतः ।
प्राकम्पत भुजः सव्यः स्वरश्चास्यावसज्जत ॥ १६
सास्रा संपद्यते दृष्टिः पश्यमानस्य सर्वतः ।
ललाटे च रुजा जाता न च मोहान्न्यवर्तत ॥ १७
तान्समीक्ष्य महोत्पातानुत्थितान्रोमहर्षणान् ।
अब्रवीद्राक्षसान्सर्वान्प्रहसन्स खरस्तदा ॥ १८
महोत्पातानिमान्सर्वानुत्थितान्घोरदर्शनान् ।
न चिन्तयाम्यहं वीर्याद्बलवान्दुर्बलानिव ॥ १९

[ M3 विस्वरान् ( for विह्वलान् ). M3 नादान् ( for घोरान् ). ]

—Thereafter M2.3 read 10.

13 D1 om. 13 ( cf. v.l. 12 ). V2 illeg. for $13^{ab}$. —After $13^{ab}$, G3 reads $15^{cd}$ repeating it in its proper place.. —$^{cd}$ ) M1 damaged for तस्मिन् . Dm1 D4.8 T2 G3 पुष्पैः ( for पुष्प- ). M1 -फला द्रुमाः ( for -फलैर्द्रुमाः ). Ś1 Ñ1 D2.3 तस्मिन्मुहूर्ते न बभुः पुष्पाणि च फलानि च. —For $13^{cd}$, Ñ2 V B D5.7 subst. :

399* पत्रपुष्पविहीनाश्च तरवो न चकाशिरे।

[ V B फल- ( for पत्र- ). ]

14 $^{a}$ ) B3.4 D2 उद्भूतश्च ; Dm1 D8 उत्पेतुश्च ; D1 उद्भूतं; D3 उद्धतश्च ; D6 उद्धृतश्च ( for उद्धू° ). D5 दिवा ( for विना ). —$^{b}$ ) Ñ2 D5.7 रेणुर्ज्वालाकरारुणः; D1 °जालं खरारुणं. —After $14^{ab}$, V1 reads $17^{cd}$. D1 transp. $14^{cd}$ and $15^{ab}$. —$^{c}$ ) Ś1 Ñ1 Dt1 Dm1 D1–3.6.8 T Ct चीची- ( for वीची- ). Ś1 Ñ1 D2.3 वाशंत्यो; Dt1 तेश्यंतो ( sic ); D1 वासिनो ( sic ); Cm.g वाश्यंत्यो ( for वाश्यन्तो ). —$^{d}$ ) Ś1 Ñ1 D2.3 बभ्रमुश्चैव; D1 बभ्रमुस्तत्र ( for बभूवुस्तत्र ). D4.8 T G2.3 M शारिकाः ( for सा° ). —For $14^{cd}$, Ñ2 V B D5.7 subst. :

400* विनेदुरुच्चैः सुभृशं पक्षिणः खरनिस्वनाः ।

[ V1 च ( for सु- ). V1 दक्षिणे ( for पक्षिणः ). ]

15 D1 transp. $14^{cd}$ and $15^{ab}$. —$^{a}$ ) Ś1 Ñ V B Dm1 D1–5.7.8 S( M2 after corr. *sec. m.* ) सनिर्घाता ( for °र्घोषा ). —$^{b}$ ) V1 B M3 -निस्वनाः ( for -दर्श° ). G3 repeats $15^{cd}$ here ( cf. v.l. 13 ). —$^{c}$ ) V1 D4 T1.2 सर्वा; M2.3 सद्यः ( for चापि ). —$^{d}$ ) D4 -काननी ( sic ) ( for °ना ).

16 $^{a}$ ) Dg1 तु; D8 marg. ( for च ). V B3( *inf. lin.* also as in G2 ) खरस्तस्य; G2 M2 रथस्तस्य ( for °स्थस्य ). —$^{b}$ ) Dg1 वर्धमानस्य ( for नर्द° ). Ñ1 D2.3 दुर्मतेः ( for धीमतः ). Ś1 नंदमानस्य दुर्मतेः; Ñ2 V B D5.7 नर्दतो जयगर्धिनः( B1.3 °गृध्निनः ); D1 नदतस्तस्य दुर्मतेः. —After $16^{ab}$, B4 erroneously reads $18^{cd}$ up to वाहिनी( cf. v.l. 18 ) in brackets repeating it in its proper place. —$^{c}$ ) D2 भुज- ( for °जः ). B3 रामः; G3 सव्यं ( for °व्यः ). —$^{d}$ ) Dm1 D4.8 T1 [ अ ]वसज्यत; T3 °ज्जितः ( for °ज्जत ). Ś1 D2 स्वरश्चैवोपहन्यत; Ñ1 D3 °श्चैव व्यहन्यत; Ñ2 V B1–3 D5.7 °श्चापि व्यभिद्यत; B4 °श्च व्यवभिद्यत; Dg1 शरश्चापावसर्जितः; D1 °श्चाभ्यवहन्यत; G1 M2.3 सव्यं नेत्रमकंपत.

17 $^{ab}$ ) D2.3 साश्रुः; T1 Cm*p* सास्रं ( for °स्रा ). Ñ1 सास्रा तस्य च वै दृष्टिः; D1 सास्रा बभूव दृष्टिस्तु ( for $^{a}$ ). D1 पश्यतस्तस्य ( for °मानस्य ). G2 M1 सर्वशः ( for °तः ). Ñ2 V B D5.7 सास्रा( B4 °श्रा ) दृष्टिरभूद्दीना मुखं चैव व्यशुष्यत. —V1 reads $17^{cd}$ after $14^{ab}$. —$^{c}$ ) Dt1 च रुतो ( sic ); D6 T1.2 च रुजो; T3 विरुजो; G2 तु रुजा ( for च रुजा ). Ś1 Ñ V B D2.3.5.7 जज्ञे ( for जाता ). D1 अभूच्च रुग्ललाटस्य. —$^{d}$ ) B4 D3 T2 M2.3 मोहो ( for मोहान् ). M2 [ ऽ ]न्ववर्तत.

18 Ñ1 D2.3 repeat $18^{ab}$ after 405*. —$^{a}$ ) Ñ1 D2.3 ( all second time ) उत्थितांस्तान्; Ñ2 V B D5.7 तानुत्थितान् ( for °समीक्ष्य ). D1 महाघोरान् ( for महोत्पातान् ). —$^{b}$ ) Dg1 Dt1 D6 उदितान् ; D1 उत्पातान् ( for उत्थि° ). Ś1 D2 ( first time ) घोरदर्शनान् ; D1.3 ( first time ) लोमहर्षणान् ( for रोम° ). Ñ1( first time ) अतीव भृशदारुणान् ; Ñ V2 B D2.3.5.7( Ñ1 D2.3 second time ) निशम्य( D5.7 °हत्य ) भृशदारुणान् ; V1 निशम्य भृशमुत्थितान् . —After $18^{ab}$, Ñ1 D2.3 read $27^{cd}$ for the first time repeating it in its proper place. Ś1 om.( hapl. ) $18^{c}$–$19^{b}$. B4 reads erroneously $18^{cd}$ for the first time in brackets after $16^{ab}$ repeating it here. G3 transp. $18^{cd}$ and $19^{ab}$. —$^{c}$ ) D1 घोरान् ( for सर्वान् ). —$^{d}$ ) D2 प्रसहन् ( meta. ) ( for प्रहसन् ). Ñ V B( B4 both times ) Dm1 D1–3.5.7.8 G1.3 M वाहिनीपतिः ( for स खरस्तदा ).

19 Ś1 om. $19^{ab}$ ( cf. v.l. 18 ). G3 transp. $18^{cd}$ and $19^{ab}$. —$^{a}$ ) Ñ1 D2.3 घोरान् ( for सर्वान् ). Dt1 D6 उदितान् ; D8 उच्छ्रितान् ( for उत्थि° ). D1.8 घोरदर्शनात् ; D6 °दर्शितान् ; T2 रोमहर्षणान् ; G2 रोमदर्शनान् ( sic ) ( for घोरदर्शनान् ). —M2 reads ( var. ) $19^{cd}$ twice. —$^{c}$ ) Ñ2 V B D5.7 वीर्यम् ( for °र्याद् ). —$^{d}$ ) Ñ1 D2.3 transp. दुर्बलान् and इव. Ś1 बलवानिव दुर्बलं; Ñ2 V B D5.7 M2 ( first time ) आश्रित्य स्व( M2 °त्यात्म )बलोद्भवं.

तारा अपि शरैस्तीक्ष्णैः पातयेयं नभस्तलात् ।
मृत्युं मरणधर्मेण संक्रुद्धो योजयाम्यहम् ॥ २०
राघवं तं बलोत्सिक्तं भ्रातरं चापि लक्ष्मणम् ।
अहत्वा सायकैस्तीक्ष्णैर्नोपावर्तितुमुत्सहे ॥ २१
सकामा भगिनी मेऽस्तु पीत्वा तु रुधिरं तयोः ।
यन्निमित्तं तु रामस्य लक्ष्मणस्य विपर्ययः ॥ २२
न क्वचित्प्राप्तपूर्वो मे संयुगेषु पराजयः ।
युष्माकमेतत्प्रत्यक्षं नानृतं कथयाम्यहम् ॥ २३
देवराजमपि क्रुद्धो मत्तैरावतयायिनम् ।
वज्रहस्तं रणे हन्यां किं पुनस्तौ च मानुषौ ॥ २४
सा तस्य गर्जितं श्रुत्वा राक्षसस्य महाचमूः ।
प्रहर्षमतुलं लेभे मृत्युपाशावपाशिता ॥ २५
समेयुश्च महात्मानो युद्धदर्शनकाङ्क्षिणः ।
ऋषयो देवगन्धर्वाः सिद्धाश्च सह चारणैः ॥ २६
समेत्य चोचुः सहितास्तेऽन्योन्यं पुण्यकर्मणः ।
स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकानां ये च संमताः ॥ २७ G. 3. 29. 26 B. 3. 23. 28 L. 3. 28. 27

20 a) D1 चापि ( for अ° ). Ś1 Ñ1 D2.3 अपि ताराः ( by transp. ). Ñ2 V B D5.7 M2 तारापतिमपि क्षिप्रं. —b) B2.3( before corr. as in text ) पातयिष्ये; D4 T1.2 G1.2 °यामि ( for °येयं ). Dg1 Dm1 D1.4.8 T G3 नभस्थलात्. —c) D7 om. धर्मेण. —V2 illeg. from धर्मेण up to धनदा in the post. half of l. 1 of 401*. —d) Ś1 D2.3 योजये चाहमच्युत( Ś1 °च्यत: ); Ñ1 योजये चाद्य पौरुषात्; Ñ2 V1 B D1.5.7 योजयेयं रुषा( D7 पुरुषा [ hypm. ] )न्वितः ( D1 °दहं ). —After 20, Ñ2 V B D5.7 ins.:

401* न मे भयं सहस्राक्षाद्धनदाद्वापि विद्यते ।
शक्तोऽहं सर्वभूतानामिति मे निश्चयो दृढः ।

[ ( l. 1 ) B1.3 D7 अपि ( for चापि ). —D5 om. from l. 2 up to 22. —( l. 2 ) B4 ते ( sic ) ( for मे ). V2 B2 निश्चिता मतिः ( for निश्चयो दृढः ). ]

21 D5 om. 21 ( cf. v.l. 401* ). —a) Ñ1 D3 च ( for तं ). Ñ2 V B1.4 D7 रामं वीर्य-; B2.3 रामं मध्य- ( for राघवं तं ). —b) Ś1 Ñ1 V B D1–4.7 T1.2 G2.3 M चास्य; G1 तस्य ( for चापि ). T3 लक्ष्मणं चापि सोदरं. —d) Ś1 [अ]पवर्तितुम्; D1 निव°; D2 [उ]पव°; M2 °पसर्पितुम् ( for [उ]पाव° ). —For 21cd, Ñ2 V B D7 subst.:

402* निहत्य सायकैरद्य नयामि यमसादनम् ।

[ B2 तीक्ष्णैर् ( for अद्य ). B1 सायकैर्बाणैर् ( sic ). ]

22 D5 om. 22 ( cf. v.l. 401* ). Dg1 Dt1 Dm1 D6.8 T3 G3 M1 transp. 22ab and 22cd. —a) Ñ1 नो; D3 चा ( for मे ). V1 om. ऽस्तु. D1 transp. भगिनी and मेऽस्तु. —b) Dm1 D8 G3 [इ]यं ( for तु ). Dm1 D8 शोणितं ( for रुधिरं ). Ś1 Ñ V B D1–3.7 राक्षसी कामरूपिणी( B1 °चारिणी ). —c) Ñ2 प्रनिमित्तम्; Dg1 Dm1 D4 T3 यं निमित्तम्; G1 तं°; Cv.m यन्निमित्तस् ( for य° ). Ñ2 V B D7 क्षसौ रामो; G1 तु रामश्च ( for तु रामस्य ). —d) Ñ2 V B D7 G1 लक्ष्मणश्च विपत्स्यते. —For 22cd, Ś1 Ñ1 D1–3 subst.:

403* तन्निमित्तं हनिष्यामि समरे तौ कुमारकौ ।

[ D1 समेतौ ( for समरे ). ]

23 D1 om. ( hapl. ? ) 23–24; Ñ1 T2 om. 23ab. —a) D3 कच्चित्; G2 कश्चित् ( for क्वचित् ). B1 -पूर्वं ( for °र्वो ). Dm1 D8 तु ( for मे ). —b) Ś1 D2.3 समरेषु; B3 संयुगे च ( for °षु ). —c) V B1.2.4 D2.5.7 M2 एव; B3 अपि ( for एतत् ). —d) Ś1 Ñ1 D2.3 प्रवदामि ( for कथयामि ).

24 D1 om. 24 ( cf. v.l 23 ). —a) Ś1 Ñ1 D2.3 M2 ( after corr. sec. m. as in text ) क्रोधान्; Ñ2 V1 B1.3.4 D5.7 क्रुद्धं; V2 B2 क्षिप्रं ( for क्रुद्धो ). —b) D5 तत्र ( for मत्त- ). D4 T1.2 -[ऐ]रावण-. Ñ2 V Dt1 D5.6 G1.2 M3 -गामिनं ( for -यायि° ). Ś1 Ñ1 D2.3 मत्तैरावणवाहनं; B1.3.4 D7 °णगामिनं; B2 मत्तवारणगामिनं. —cd) Ś1 Ñ1 D3 वज्रांकितकरं हन्यां; D2 अहं हन्मि शराघातैः ( for c ). Ś1 Ñ1 M2 तु ( for च ). Dg1 Dm1 D4.8 T G2.3 M1.3 Cm कुमानुषौ; Dt1 D6 च मानवौ; D2.3 कुमारकौ ( for च मानुषौ ). Ñ2 V B D5.7 वज्रपाणिमहं हन्यां किमु तं मानुषं रणे.

25 a) Ñ2 V B D5.7 तस्यैवं( B4 °व ) ( for सा तस्य ). Ś1 Ñ1 D1–3 तस्य तद्वचनं( D1 गर्जितं ) श्रुत्वा. —b) Ś1 Ñ1 D2.3 राक्षसी सा; Dt1 D6 °सानां; M2 खरस्य च ( for राक्षसस्य ). —d) B2 वज्र- ( for मृत्यु- ). Ś1 Ñ1 V1 B D1–3.5.7 M -वशं गता; Ñ2 V2 -[अ]वशं गता ( for °वपाशिता ). —After 25, D1 reads 30–34.

26 ☞ Dg1 Dm1 T3 G3 om. 26–29( Dg1 T3 26–28 ) here and read after 3.23.17ab; while Dt1 D4.6.8 T1.2 G1.2 M read 26–28( D8 26–29 including 406* ) here for the first time and repeat them after 3.23.17ab. —a) Ś1 Ñ1 G1 समीयुश्च. —b) Ś1 Ñ1 D1–3 M -कांक्षया ( for °ङ्क्षिणः ). —c) Ś1 Ñ1 D2.3 सुरैः सार्धं मुनिगणाः. —For 26, Ñ2 V B D5.7 subst.:

404* आजग्मुरृषयः सिद्धास्ततो रणदिदृक्षवः ।
देवगन्धर्वमुख्याश्च दिव्याश्चाप्सरसां गणाः ।

27 For sequence and om. in Dg1 Dm1 T3 G3, cf. v.l. 26. —a) Ñ2 V2 B D5.7 M2 [ऊ]चुश्च; V1 [उ]चैश्च; D1 वोचुः; D2 नेदुः ( for चोचुः ). —b) Ś1 T1 तु; B1.3 हि ( for ते ). Ñ2 B4 D4.5.7.8 -कर्मिणः; B1 -कर्मणि ( for °णः ). D3 अन्योन्यं पुण्यकर्मिणः. Ñ1 D2.3 read 27cd for

G. 3. 29. 27 B. 3. 23. 28 L. 3. 28. 28

जयतां राघवो युद्धे पौलस्त्यान्रजनीचरान् ।
चक्रहस्तो यथा युद्धे सर्वानसुरपुंगवान् ॥ २८
एतच्चान्यच्च बहुशो ब्रुवाणाः परमर्षयः ।
ददृशुर्वाहिनीं तेषां राक्षसानां गतायुषाम् ॥ २९
रथेन तु खरो वेगात्सैन्यस्याग्राद्विनिःसृतः ।
तं दृष्ट्वा राक्षसं भूयो राक्षसाश्च विनिःसृताः ॥ ३०
श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहंगमः ।
दुर्जयः करवीराक्षः परुषः कालकार्मुकः ॥ ३१
मेघमाली महामाली सर्पास्यो रुधिराशनः ।
द्वादशैते महावीर्याः प्रतस्थुरभितः खरम् ॥ ३२
महाकपालः स्थूलाक्षः प्रमाथी त्रिशिरास्तथा ।
चत्वार एते सेनाग्र्या दूषणं पृष्ठतोऽन्वयुः ॥ ३३

---

the first time after $18^{ab}$ repeating it here. —c) Ñ2 V1 D1.5.7 च; B4 Dt1 D4.6 T1.2 M2.3 तु (for ऽस्तु). Ś1 Ñ1 D2.3 (both times) स्वस्ति गोब्राह्मणायेति. —d) D4.8 T1 Cv.g येभिसंगताः; T2 ये च संगताः; G1.2 M1.3 चेति संगताः (for °संमताः). Ś1 D2.3 (D2.3 second time) लोकेभ्यश्चैव संगताः; Ñ1 (both times) D2 (first time) लोकेभ्यश्चेति संगताः; Ñ2 V B D3 (first time).5.7 M2 लोकेभ्यश्च (M2 °कानां) चैव सर्वशः (D3 °तः); D1 लोकेभ्यश्चापि नित्यशः. —After $27^{cd}$ (first occurrence), Ñ1 D2.3 ins.:

405* इति वै व्यसृजन्वाचमन्तरिक्षे महर्षयः ।

[D3 चैवासृजन् (for वै व्य°). Ñ1 illeg. for वाच.];
—Thereafter they all repeat $18^{ab}$.

28 For sequence and om. in Dg1 Dm1 T3 G3, cf. v.l. 26. —ab) M1 जयताद्. D1 राघवौ (for °वो). D4.8 T1.2 Cg संख्ये (for युद्धे). Ñ2 V B D5.7 रामो विजयतां युद्धे सपौलस्त्यान् (V °स्त्य) निशाचरान्. —c) Ś1 D2.5 इंद्रो हंता; Ñ V B D3.7 पाक (V1 वृत्र) हंता; D1 पाकशास्ता (for चक्रहस्तो). Ś1 -पूर्वः Dt1 D6 विष्णुः (for युद्धे). —d) Ñ2 -दारुणान्; Dt1 D8 G1.2 M1 -सत्तमान्; D5.7 -दानवान् (for -पुंगवान्). Ś1 सर्वांश्चासुरराक्षसान्; D2 सर्वांस्तान्सुरराक्षसान्.

29 T3 om. 29–30; Dm1 G3 om. 29 here and read after 420*; Dg1 om. $29^{ab}$. D8 repeats 29 (including 406*) after 420*. —a) Ñ V B D1.3.5.7 बहुधा; D8 बहवो (for °शो). Ś1 D2 एत (D2 °ता) श्चान्य (D2 °न्या) श्च बहुधा. —b) Ś1 कुर्वाणाः (for ब्रुवा°). —After $29^{ab}$, Dg1 (before $29^{cd}$) Dt1 D4.6.8 T1.2 G1.2 M ins.:

406* जातकौतूहलास्तत्र विमानस्थाश्च देवताः ।

[D4.8 (first time) T1.2 तस्थुर् (for तत्र).];
while D1 ins. after $29^{ab}$:

407* यदेतदौत्पातिकमत्र दृश्यते ।
तदाशु रक्षःसु भृशं विमुच्यताम् ।
भवन्तु लोका मुदिता हतद्विषः ।
सदेति तत्त्वं मुनिपुंगवाब्रुवन् ।

—D1 om. $29^{cd}$. —c) Ś1 सेनां (for तेषां). —d) M3 महात्मनां (for गतायुषाम्).

30 T3 om. 30 (cf. v.l. 29). D1 reads 30–34 after 25. —a) Dg1 D1 M2 च (for तु). —b) Ñ2 V B D5.7 अथ सैन्याद्; Dg1 M2.3 अग्रे सैन्याद्; Dm1 D4.8 T1.2 G उग्रसैन्यो (for सैन्यस्याग्राद्). Ñ2 Dg1 D4.8 T2 G3 विनिसृतः. Ś1 Ñ1 D1–3 अग्रे (D1 °ग्र) सैन्याद्विनिर्गतः. Dt1 D6 om. $30^{cd}$. —c) D1.2 निसृतं; D3 निर्गतं (for राक्षसं). Ñ1 दृष्ट्वा विनिसृतं भूयो; Ñ2 V B D5.7 M तं दृष्ट्वा निःसृतं तूर्णं (B2.3 हंतुं; M1 भूमौ; M3 भूयो); Dm1 D8 G3 °निसृतं भूमौ. —d) D2 ते (for च). Ś1 D5.7 ते विनिःसृताः; Ñ1 D3 ते (D3 च) विनिर्गताः; Ñ2 V B1.2.4 अपि (Ñ2 तेपि) निःसृताः; D1 M3 चाभि (M3 °पि) निःसृताः; M2 चापि निसृताः (for च विनिः°).

31 a) Ś1 D2 दूरगामी; B4 °मानी; D1 °मी च (for श्येनगामी). Dt1 D6 T3 पृथुश्यामो; D2 °वलो; G2 पृष्ठग्रीवो (for पृथुग्रीवो). —b) Ś1 D2 यज्ञशक्रो (for °शत्रुर्). Ś1 Ñ V2 B4 D1–3.5.7 G1 M महाविषः; V1 महाबलः; B1 महारथः; B2.3 महावृषः (for विहंगमः). —c) B2 दुर्दमः; D3 दुर्जरः (for °यः). Ś1 D2 परवीरघ्नः; Ñ2 V B D5.7 कालकाख्य (V1 B4 °ख्या; B1 °ख्यै) श्च; D6 परवीराक्षः (for कर°). —d) V1 B1–3 (before corr. as in text) D4.6 पुरुषः (for प°). Ś1 कालकर्मकः; Ñ2 V B Dt1 D1.5–7 T3 कालि (V2 B2 Dt1 D1.6 T3 °ल) कामुखः (for कालकार्मुकः).

32 a) Ñ2 V B1.4 D5.7 मेघमालो (V1 °लोमा [meta.]); B3 °वाणो; Dt1 T1.2 हेममाली (for मेघमाली). Ś1 Ñ V B D1–3.5.7 G1 महाबाहुः (for °माली). —b) Dt1 D6 वरास्यो (for सर्पा°). Ñ2 D5.7 लंवितोदरः; V B निह्न (B1.4 °र्ण; B2.3 °र्हं) तोदरः; G2 रुधिराशनिः; M3 °रांबरः; G (ed.) विकृतोदरः (for °शनः). Ś1 Ñ1 D1–3 महास्यो (D1 सर्पाभो) लोहितांबरः. —c) Dg1 महावीराः (for °र्याः). —d) Ñ2 V2 B1–3 D1.3.5.7 तस्थुस्तम्; V1 ततस्तम् (for प्रतस्थुर्). Ś1 Ñ1 B4 D2 G (ed.) तस्थुः प्रमुखतः (Ñ1 B4 समभितः; G [ed.] समंततः) खरं.

33 a) B3 G1 महाकपाली; Dg1 °कलापः; D5 °कपाटः; D6 °कापालः. —b) Dt1 D6 G3 प्रमाथिस् (for °थी). —c) Ś1 Ñ V B1.3.4 Dg1 (before corr.) Dt1 D1–3.5–7 T3 सेनाग्रे; B2 सैन्याग्रे; G3 सैन्याग्र्या (for °ग्र्या). —d) Ś1 Ñ2 V2 B2.3 (before corr. *sup. lin.* as in text) D1.4 T1.2 G3 M3 ययुः (for ऽन्वयुः). —After 33, Ś1 D1–3 ins.:

सा भीमवेगा समराभिकामा
सुदारुणा राक्षसवीरसेना ।
तौ राजपुत्रौ सहसाभ्युपेता
माला ग्रहाणामिव चन्द्रसूर्यौ ॥ ३४

इति श्रीरामायणे अरण्यकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

# २३

आश्रमं प्रति याते तु खरे खरपराक्रमे ।
तानेवौत्पातिकान्रामः सह भ्रात्रा ददर्श ह ॥ १
तानुत्पातान्महाघोरानुत्थितान्रोमहर्षणान् ।
प्रजानामहितान्दृष्ट्वा वाक्यं लक्ष्मणमब्रवीत् ॥ २
इमान्पश्य महाबाहो सर्वभूतापहारिणः ।
समुत्थितान्महोत्पातान्संहर्तुं सर्वराक्षसान् ॥ ३
अमी रुधिरधारास्तु विसृजन्तः खरस्वनान् ।
व्योम्नि मेघा विवर्तन्ते परुषा गर्दभारुणाः ॥ ४

G. 3. 30. 4
B. 3. 24. 4
L. 3. 29. 4

408* तत्कार्मुकैराभरणैर्ध्वजैश्च
तैर्वर्मभिश्चाग्निसमानवर्णैः ।
बभूव रूपं रुधिराशनानां
सूर्योदये रक्त इवाभ्रराशिः ।

[ (l. 1) D1 आभरण- (for °रणै). D2 द्विजैश् (sic) (for ध्वजैश्). ];

while B3 ins. after 33 :

409* त्वरमाणाश्च ते सर्वे वायुकम्पिसमा जवे ।

34 $^{a}$) Ś1 -[ अ ]भिकामुका; Ñ2 D5.7 °गामिनी; Dt1 D6 °कांक्षिणी (for °कामा). —$^{b}$) D4 T1.2 G1.2 महाबला (for सुदारुणा). Ñ2 V2 B2 D7 G2 -भीम- (for -वीर-). —$^{c}$) Ś1 Ñ1 D1-3 [ उ ]पतस्थे ( D2 °स्थौ ); Ñ2 D5.7 [ अ ]भ्युपेयाच्; V B °पायाच् (for [ अ ]भ्युपेता). —$^{d}$) D6 सम- (for इव). D2 सूर्यबिंबं (for चन्द्रसूर्यौ). Ñ2 V B D5.7 M3 छायेव राहोर्दि( M3 कृष्णा दि )वि चंद्रसूर्यौ.

Colophon. —*Sarga name*: Ś1 खरोत्पातदर्शनं; Ñ1 उत्पातदर्शनं; Ñ2 D2.3.5 खरनिर्याणः( D5 °णं ); V B खरनिर्याणे उत्पातदर्शनं; D1 खरोत्पातः; D7 खरनिर्याणे दुःशकुनानि. —*Sarga no.* ( figures, words or both ) : Ś1 Ñ1 B1.3 D2 om. Ñ2 V2 D5.7 29; V1 28; B2.4 30; Dg1 Dt1 Dm1 D4.6.8 T G M1 23; D1 26; D3 32; M2.3 24. —After colophon, G concludes with श्रीरामाय नमः.

## 23

D8 begins with ॐ; M1 with श्रीरामाय नमः.

1 $^{a}$) Ñ2 V B D1.5.7 समनुप्राप्ते; M2 त्वभिसंप्राप्ते; M3 त्वनभिप्राप्ते ( for प्रति याते तु ). Ś1 Ñ1 D2.3 तमाश्रममनुप्राप्ते. —$^{b}$) Dg1 reads खरे in marg. M3 भीम- ( for खर- ). —$^{c}$) Ś1 Ñ1 D2 [ उ ]त्पातकान्; D3 [ उ ]त्पादुकान् (sic); D6 M2.3 [ उ ]त्पातिकान् ( for [ औ ]त्पातिकान् ). Ñ2 V B D5.7 तानुत्पातांस्ततो रामः; D1 तदेवोत्पातिकं रामः.

2 $^{a}$) Ñ2 V B D5.7 दृष्ट्वा च( B2 तु ) तान् ( for तानुत्पातान् ). —$^{b}$) D3 लोम° ( for रोम° ). Ñ2 V B D5.7 उत्पाताँल्लो( B4 D7 °रो )महर्षणान्; Dt1 Dm1 D6.8 रामो दृष्ट्वात्यमर्षणः. Cvp as in text for $^{ab}$. ❀ Cr.k.t cite अम ( Ct अल्पम )र्षणः अ( Ct अल्प )स्वस्थचित्तः. ❀ —Ś1 om. $2^{c}$–$3^{b}$. —$^{d}$) G2.3 M2 रामो ( for वाक्यं ). Dm1 D8 लक्ष्मणं वाक्यम् ( by transp. ). —For $2^{cd}$, Ñ V B D1-3.5.7 subst. :

410* द्विषतामहितान्सर्वान्रामो वचनमब्रवीत् ।

[ D7 om. ( hapl. ) for तामहि. Ñ1 D3 दृष्ट्वा ( for सर्वान् ). D1 द्विषतामहितं ज्ञात्वा; D2 द्विषतः सह तान्दृष्ट्वा ( for the prior half ). Ñ1 D1-3 लक्ष्मणम् ( for वचनम् ). ]

3 Ś1 om. $3^{ab}$ ( cf. v.l. 2 ). —$^{a}$) V1 उत्पातान्पश्य सौमित्रे. —$^{b}$) Ñ2 B1.4 D5.7 सर्वभूताहिताय वै; V1 B2.3 °भूताशिवाय वै; D1 °भूतनिपातिनः; D2 °भूतोपहारिणः; D3 °भूतार्थहारिणः; M3 °भूतापहात्रणे. —$^{c}$) V B महाघोरान् ( for महोत्पातान् ). Ñ2 D5.7 उत्थितान्सुमहाघोरान्; D1 उत्पातानशिवान्घोरान्. —$^{d}$) Ś1 Ñ V B D2.3.5.7 संक्षेप्तुमिव मानुषान्( B3 *sup. lin.* also राक्षसान् ); D1 युगांतस्य पुरःसरान्; M2 संक्षेप्तुमिह राक्षसान्; M3 संक्षेप्तुं सर्वराक्षसान्.

4 $^{a}$) Ś1 Ñ V B D1.2.5.7 इमे ( for अमी ). Ñ2 V B D5.7 -धाराभिर्; M1 -धारा वै ( for -धारास्तु ). D1 समंसरुधिरा धाराः. —$^{b}$) Dg1 विसृजंति; Dt1 D8 विसृजंते; D3 ( with hiatus ) उत्सृजंतः ( for विसृजन्तः ). Dm1 D8 G3 खरस्वराः; Cg खरस्वरान्. Ś1 Ñ1 V1 D1.2 सृजंतः( V1 वर्षंते ) खरनिःस्वनाः; Ñ2 V2 B D5.7 वर्षंतोति( D5.7 °भि )-वर्षंते ) खरनिःस्वनाः. —$^{c}$) Ñ2 D5.7 मेघा व्योम्नि( by transp. ). Ś1 Ñ1 D2.3.7 विवर्धंते; B2 D1 निवर्तंते; Dg1 [ अ ]भिवर्तंते; Dm1 विनर्दंति; D8 G3 M3 विनर्दंते; M1 प्रदृश्यंते; M2 प्रवर्धंते ( for विवर्तन्ते ). —$^{d}$) Ś1 D2 दारुणाः; Ñ V B1( after corr. ) Dg1 Dm1 D1 पुरुषा ( for परुषा ). Ś1 भीमदर्शनाः; D1 शैलवर्चसः ( for गर्दभारुणाः ).

# २५

तद्द्रुमाणां शिलानां च वर्षं प्राणहरं महत् ।
प्रतिजग्राह धर्मात्मा राघवस्तीक्ष्णसायकैः ॥ १
प्रतिगृह्य च तद्वर्षं निमीलित इवर्षभः ।
रामः क्रोधं परं भेजे वधार्थं सर्वरक्षसाम् ॥ २
ततः क्रोधसमाविष्टः प्रदीप्त इव तेजसा ।
शरैरभ्यकिरत्सैन्यं सर्वतः सहदूषणम् ॥ ३

G. 3. 31. 10
B. 3. 26. 6
L. 3. 31. 6

## 25

Ś1 D2.3 continue the previous sarga. D8 begins with ॐ; T2 with श्रीरामचन्द्राय नमः; M1 with श्रीरामाय नमः. Before 1, Ñ2 V B1.3.4 D5.7 ins.:

464* रक्षसामवशेषं तु खरदूषणसंश्रयम् ।
दुर्बलं बलिनं राममाहवे पुनरुत्थितम् ।
तेषामल्पावशेषाणां सगर्वमुपसर्पताम् ।
स्थितः स्थिरमतिर्वीरो गर्वितानामगर्वितः ।

[(l. 4) V1 स्थिरः; B3 (marg. also as above) ततः (for स्थितः). D7 om. गर्वितानाम.];

while Dg1 Dt1 Dm1 D4.6.8 S ins.:

465* दूषणस्तु स्वकं सैन्यं हन्यमानं निरीक्ष्य च ।
संदिदेश महाबाहुर्भीमवेगान्दुरासदान् ।
राक्षसान्पञ्चसाहस्रान्समरेष्वनिवर्तिनः ।
ते शूलैः पट्टिशैः खड्गैः शिलावर्षैर्द्रुमैरपि ।
शरवर्षैरविच्छिन्नं ववर्षुस्तं समन्ततः ।

[(l. 1) M3 स्वयं (for स्वकं). Dt1 Dm1 D6.8 विलोक्य (for निरीक्ष्य). D4 T1 सः; G1 तत् (for च).—(l. 2) D8 सुरासदान् (for दुरा°).—Dg1 reads l. 3 in marg.—(l. 4) M2.3 तैः (for ते). Dg1 (before corr. as above) D4 S पट्टसैः. Dt1 -वर्षं (for -वर्षैर्).—(l. 5) D6 इव छिन्नं; G1 अविच्छिन्नैर् (for अविच्छिन्नं). D4 ददृशुस्; K (ed.) ववृषुस् (for ववर्षुस्). G1.2 M ते (for तं).]

1 D1 om. 1–3.—[ab]) Dg1 T G1.2 M1.3 Cm.g स; Dm1 तं; D4 न (for तद्). Ś1 D2 नगानां; Ñ1 शराणां (for शिलानां). G1 प्रहरतां (for प्राणहरं). Ñ2 V B1.3.4 D5.7 तेषां शस्त्रमयं वर्षं भीषणं लो(B1 रो)महर्षणं.—[cd]) G2 धर्मज्ञो (for धर्मात्मा). Ś1 Ñ1 D2.3 राघवोमोघसायकैः (Ñ1 D3 °कः) (for [d]). Ñ2 V B1.3.4 D5.7 प्रहृष्टः(B3 °ष्टं) प्रतिजग्राह राघवो निशितैः शरैः.

2 D1 om. 2 (cf. v.l. 1).—[a]) Ś1 D2.3 G1 तु (for च). M2.3 सर्वं (for वर्षं).—[b]) Dg1 संमीलित (for निमीलित). Ś1 Ñ1 D2.3 सुमहत्पर्वतोपमं(Ñ1 °मः).—[cd]) Dg1 Dt1 Dm1 D4.6.8 G3 M3 लेभे (for भेजे). Ś1 Ñ1 D2.3 चुक्रोध राघवस्तेषां वधे चैव मनो दधे.—For 2, Ñ2 V B1.3.4 D5.7 subst.:

466* प्रतिगृह्य तु तद्वर्षं घोरं शत्रुनिषूदनः ।
शारदं स्थूलपृषतं शृङ्गाभ्यां गोवृषो यथा ।
ततः क्रोधसमाविष्टः कालान्तकयमोपमः ।
दिव्यं समाददे सोऽस्त्रं वधार्थं सर्वरक्षसाम् ।

[(l. 1) Ñ2 V2 D5.7 तं (for तद्). V1 शत्रुनिषूदनं.—(l. 2) B1 शारदांबुदवर्षं तु (for the prior half). B4 वृषभो (for गोवृषो).—(l. 4) V B4 समादधे.]

—Thereafter all cont.:

467* उद्यतं तु खरो दृष्ट्वा ह्यस्त्रं राक्षसनाशनम् ।
ततो मायामयं दिव्यमस्त्रं चिक्षेप राघवे ।
राघवस्तु ततो दृष्ट्वा तदस्त्रं दीप्तमोजसा ।
मायास्त्रेणैव हत्वा तु तदस्त्रं पुनराददे ।
हत्वा च राक्षसश्रेष्ठान्खरदूषणसंश्रितान् ।
अवशेषं बलं सर्वं निहन्तुमुपचक्रमे ।
प्रत्यासन्नास्ततो रामं राक्षसा बलदर्पिताः ।
सावज्ञं प्रत्ययुध्यन्त राघवं शत्रुसूदनम् ।

[(l. 1) V1 D7 उद्यंतं.—(l. 3) V B1 दीप्ततेजसा.—(l. 4) V च (for [ए]व). V1 तद्; B3 च (for तु).—(l. 5) V2 स हत्वा (for हत्वा च). Ñ2 B4 D7 राक्षसान् (for राक्षस-). Ñ2 D5.7 -संश्रयान् (for -संश्रितान्).—(l. 6) V1 अवशेषबलं सर्वं (for the prior half). B4 अवशेषं बलं हंतुं सर्वं समुपचक्रमे.—(l. 7) V B3.4 D5 अत्यासन्नास् (for प्रत्यासन्नास्). Ñ2 D5.7 राघवं (for राक्षसा). V1 रणदर्पिताः; V2 रणगर्विताः; B3 बलगर्विताः (for बलदर्पिताः).]

3 D1 om. 3 (cf. v.l. 1). Ñ2 B4 D5.7 read 3 twice.—[a]) Ś1 Ñ2 B4 D2.3.5.7 (Ñ2 B4 D5.7 second time) स तु (for ततः).—[b]) Ñ2 V B1.3.4 D5.7 M1 (Ñ2 B4 D5.7 first time) पावकः (for तेजसा). Ś1 Ñ B4 D2.3.5.7 (Ñ2 B4 D5.7 second time) शत्रु(D2 °क्र)मर्मनि(Ś1 वि)कृंतनैः.—[c]) Ś1 Dm1 D2.3.8 G3 अभ्यहनत्; Ñ1 चाभ्यहनत्; B1.3 (also) D4 T1.2 अवाकिरत् (for अभ्यकिरत्). Dm1 D6 G3 तूर्णं (for सैन्यं).—[d]) Ñ2 V B1.4 D5.7 (all except V B1 first time) सर्वं सखरदूषणं; Ñ2 B3.4 D5.7 (all except B3 second time) सर्वतः खरदूषणं.—After 3, Ś1 Ñ V1 B3.4 D2.3.5.7 ins.; D1 (om. st. 1–3) ins. before 4; M2 ins. l. 6–16 only after 470*:

468* विमुखीकृत्य रक्षांसि दूषणं च महाबलम् ।
तस्थौ संख्ये चरन्रामः प्रदीप्तानलसंनिभः ।
राक्षसांस्तान्रणे भग्नान्दृष्ट्वा रामेण धीमता ।
रथस्थो दूषणो रामं शरवर्षैरवाकिरत् ।
सोऽतिविद्धः शरैस्तेन सर्वगात्रेषु राघवः ।
क्रोधमाहारयत्तीव्रं दूषणं प्रति वीर्यवान् ।

G. 3. 32. 11
B. 3. 26. 6
L. 3. 31. 15

ततः सेनापतिः क्रुद्धो दूषणः शत्रुदूषणः ।
जग्राह गिरिशृङ्गाभं परिघं रोमहर्षणम् ॥ ४
वेष्टितं काञ्चनैः पट्टैर्देवसैन्याभिमर्दनम् ।
आयसैः शङ्कुभिस्तीक्ष्णैः कीर्णं परवसोक्षितम् ॥ ५

वज्राशनिसमस्पर्शं परगोपुरदारणम् ।
तं महोरगसंकाशं प्रगृह्य परिघं रणे ।
दूषणोऽभ्यपतद्रामं क्रूरकर्मा निशाचरः ॥ ६

स चापमादाय रणे दूषणाभिमुखः स्थितः ।
मुमोच निशितान्बाणान्वज्रानिव शतक्रतुः ।
ततोऽस्य ध्वजमेकेन चतुर्भिश्चतुरो हयान् ।
त्रिभिस्त्रिवेणुं धर्मात्मा द्वाभ्यां तु रथसारथिम् ।
न्यकृन्तद्राघवः क्रुद्धः शरैरग्निशिखोपमैः ।
आयुधानि च सर्वाणि चिच्छेद लघुहस्तवत् ।
स हताश्वो हतरथो भूमौ तिष्ठन्निशाचरः ।
गदां चिक्षेप रामाय प्रदीप्तामशनीमिव ।
तामापतन्तीं चिच्छेद राघवो निशितैः शरैः ।
दूषणं चाष्टभिर्बाणैर्विव्याध लघुहस्तवत् ।

[ D$_1$ om. l. 1–2. —(l. 1) Ñ$_2$ B$_4$ D$_{5.7}$ महारथं ( for महाबलम् ). —(l. 2) Ś$_1$ तस्थौ चासंभ्रमो; Ñ$_1$ D$_{2.3}$ तस्थावसंभ्रमो; V$_1$ तस्थावसंभ्रमाद् ; B$_{3.4}$ तस्थौ चासंभ्रमाद् ( for तस्थौ संख्ये चरन् ). Ś$_1$ -सप्रभः; D$_2$ -संनिभं ( for -संनिभः ). —(l. 3) Ñ$_2$ B$_{3.4}$ D$_{5.7}$ संयुगे ( for धीमता ). —(l. 5) D$_1$ सर्वगात्रेण. —(l. 6) Ñ$_2$ B$_4$ D$_{5.7}$ अभ्याहरत ( for आहारयत् ). Ñ$_2$ B$_{3.4}$ D$_{5.7}$ रा( Ñ$_2$ र )क्षसं प्रति; D$_1$ प्रति संयुगे; M$_2$ प्रति राक्षसं ( for प्रति वीर्यवान् ). —(l. 7) Ñ$_1$ आनम्य; Ñ$_2$ B$_{3.4}$ D$_{5.7}$ M$_2$ उद्यम्य; D$_{2.3}$ आयम्य ( for आदाय ). V$_1$ स चापरान्शरान्दृष्ट्वा; D$_1$ स चापं मंडलीकृत्य ( for the prior half ). Ñ$_2$ V$_1$ D$_{5.7}$ दूषणोभि- ( for दूषणाभि- ). D$_2$ -[ अ ]भिमुखं स्थितं. —(l. 8) Ñ$_1$ V$_1$ D$_{1.2}$ M$_2$ वज्राणीव. B$_1$ शतानि च ( for शतक्रतुः ). —After l. 8, D$_1$ ins. :

468(A)* दूषणोऽपि शरांस्तीक्ष्णाञ्ज्वलितान्भुजगानिव ।
राघवाभिमुखान्गृह्य क्षिपञ्शतसहस्रशः ।
अथ रामो महाबाहुस्तूर्णमुद्धृत्य सायकान् ।
ब्रह्मदण्डोपमांस्तीक्ष्णान्संधाय धनुषि क्षुरान् ।

—After l. 9, D$_1$ ins. :

468(B)* षष्ठेन तु शिरः कायात्पातयामास सारथेः ।

—(l. 10) Ñ$_2$ D$_{5.7}$ च तथा; B$_4$ च तदा; D$_1$ बलवान् ( for धर्मात्मा ). B$_3$ त्रिभिस्तु रथं च तदा ( for the prior half ). Ñ$_2$ B$_{3.4}$ D$_{3.5.7}$ M$_2$ च ( for तु ). V$_1$ द्वाभ्यामश्वं ससारथिं; D$_1$ द्वाभ्यामक्षौ महाबलः ( for the post. half ). —(l. 11) Ś$_1$ निकृत्य; V$_1$ व्यकृंतन् ; B$_3$ निकृंत; D$_3$ निकृंतद् ; M$_2$ व्यहनद् ( for न्यकृन्तद् ). —For l. 11, D$_1$ subst. l. 1 and then cont. l. 2 :

468(C)* द्वादशेन तु बाणेन धनुश्चिच्छेद राघवः ।
रक्षसस्तु सुसंक्रुद्धो बाणैराशीविषोपमैः ।

—(l. 12) M$_2$ चित्राणि ( for सर्वाणि ). Ñ$_2$ B$_{3.4}$ D$_{5.7}$ M$_2$ लघुविक्रमः ( for °हस्तवत् ). D$_1$ चिक्षेप अशनीमिव ( for the post. half ). —D$_1$ om. l. 13–14. —(l. 14) D$_2$ reads गदां in marg. M$_2$ रामाय चिक्षेप ( by transp. ). Ñ$_2$ B$_{3.4}$ D$_{5.7}$ गदामादाय चिक्षेप वासवस्त्वशनीमिव. —(l. 16) Ś$_1$ बहुभिर् ( for चाष्टभिर् ). Ñ$_2$ पन्नगोत्तमैः; B$_{3.4}$ D$_{5.7}$ पन्नगोपमैः; M$_2$ लघुविक्रमः ( for °हस्तवत् ). V$_1$ बाणैश्चतुर्भिर्विव्याध दूषणं लघुहस्तवत्. ];

—while M$_2$ ins. after 3 :

469* तान्दृष्ट्वा निहतान्संख्ये राक्षसान्परमातुरान् ।
ननाद विविधान्नादान्रामः परपुरंजयः ।

4 $^{b}$) Ñ$_2$ V B$_{1.3.4}$ D$_{1.5.7}$ शत्रुसूदनः; D$_{2.3}$ शक्रदूषणः; G( ed. ) भीमविक्रमः ( for शत्रुदूषणः ). —After $4^{ab}$, Dg$_1$ Dt$_1$ Dm$_1$ D$_{4.6.8}$ T G M$_{1.3}$ ins.; M$_2$ ins. l. 1–2 only after $4^{ab}$ :

470* शरैरशनिकल्पैस्तं राघवं समवाकिरत् ।
ततो रामः सुसंक्रुद्धः क्षुरेणास्य महद्धनुः ।
चिच्छेद समरे वीरश्चतुर्भिश्चतुरो हयान् ।
हत्वा चाश्वान्शरैस्तीक्ष्णैरर्धचन्द्रेण सारथेः ।
शिरो जहार तद्रक्षस्त्रिभिर्विव्याध वक्षसि ।
स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।

[ (l. 1) Dt$_1$ D$_4$ तु; G$_{1.2}$ M$_{2.3}$ च ( for तं ). —(l. 2) Dt$_1$ D$_6$ स संक्रुद्धः. M$_1$ ततो रामेण संक्रुद्धः ( for the prior half ). M$_2$ क्षुरप्रेणास्य तद्धनुः ( for the post. half ). —(l. 3) G$_1$ M$_3$ समरे रामश् ; G$_2$ चतुरो रामश् ( for समरे वीरश् ). —(l. 4) M$_1$ [ अ ]स्य ( for [ अ ]श्वान् ). —D$_4$ om. ( hapl. ) from रथं in l. 4 up to st. $5^{c}$. —(l. 6) T$_1$ M$_3$ संछिन्नधन्वा. ]

—Thereafter M$_2$ cont. l. 6–16 of 468*.

—$^{cd}$ ) Ñ$_2$ V B$_{1.3.4}$ D$_{5.7}$ घोरदर्शनं; Dt$_1$ लोमहर्षणं ( for रोम° ). Ś$_1$ Ñ$_1$ D$_{1-3}$ जग्राह परिघं( Ś$_1$ परमं ) घोरमायसं वज्रसंनिभं( D$_1$ सूर्यवर्चसं ); M$_2$ दूषणोथ समादाय परिघं भास्करप्रभं. —After 4, D$_1$ ins. :

471* यमदण्डप्रतीकाशं भीमं शत्रुनिबर्हणम् ।

—After 4, G$_3$ ins. 472*.

5 D$_4$ om. $5^{abc}$ (cf. v.l. 470*). For 5–$6^{b}$, M$_3$ subst. 472*. —$^{a}$ ) V$_1$ वेष्टितैः; D$_3$ विष्टितं ( for वेष्टितं ). Ś$_1$ D$_2$ पत्रैर् ( for पट्टैर् ). —$^{b}$ ) Dg$_1$ देवसेना- ( for देवसैन्य- ). Ś$_1$ Ñ V B$_{1.3.4}$ D$_{2.3.5}$ M$_2$ बलवानंतकोपमः; D$_1$ आमयश्चांतको यथा; M$_1$ देवसैन्यविमर्दनं; K( ed. ) देवसैन्यप्रमर्दनं. —$^{c}$ ) Ñ$_1$ आयुधैः ( for आयसैः ). Ś$_1$ Ñ$_1$ D$_{2.3}$ दीप्तैः; Dg$_1$ कीर्णं ( for तीक्ष्णैः ). —$^{d}$ ) Dg$_1$ तीक्ष्णैः ( for कीर्णं ). Ś$_1$ Ñ$_1$ D$_{1-3}$ संयुतं( D$_1$ संकीर्णं ) शोणितोक्षितं; Ñ$_2$ V B$_{1.3.4}$ D$_{5.7}$ सर्वतः परिवारितं( B$_3$ °वेष्टितं ); M$_2$ संयुक्तं रुधिरोक्षितं.

6 $^{a}$ ) M$_2$ इंद्राशनि-. —$^{b}$ ) Ś$_1$ D$_2$ परिघं परदारु( D$_2$ °र ) णं; Ñ$_2$ V B$_{1.3.4}$ D$_{5.7}$ शत्रुदेहविदारणं; Dg$_1$ Dt$_1$ D$_{3.4.6.8}$ T$_3$ G$_{2.3}$ M$_1$ पु( Dt$_1$ D$_6$ G$_2$ प )रगोपुरदारु( Dg$_1$ D$_8$ G$_3$ M$_1$

तस्याभिपतमानस्य दूषणस्य स राघवः ।
द्वाभ्यां शराभ्यां चिच्छेद सहस्ताभरणौ भुजौ ॥ ७

भ्रष्टस्तस्य महाकायः पपात रणमूर्धनि ।
परिघश्छिन्नहस्तस्य शक्रध्वज इवाग्रतः ॥ ८

G. 3. 32. 19
B. 3. 26. 14
L. 3. 31. 27

°र )णं; D1 रथाश्वगजसूदनं. ❀ Ct : शत्रूणां गात्र इंद्रियाणि तेषां पुरं शरीरं तस्य दारणं विदारणम्। यद्वा पुरद्वारविदारणम् .❀ —M3 subst. for 5–$6^{b}$; Ś1 Ñ V B1.3.4 D1–3.5.7 G2 M1.2 ins. after $6^{ab}$; G3 ins. after 4 :

472* आसनं सर्वभूतानां काञ्चनाङ्गदभूषणम् ।

[ Ś1 Ñ1 D2.3 -धारिणं ( for -भूषणम् ). D1 गिरिसारमयं दृढं ( for the post. half ). ]

Ñ2 V B1.3.4 D5.7 cont. :

473* यमदण्डोपमं घोरं तीक्ष्णं परमशोभितम् ।

[ V1 तूर्णं ( for तीक्ष्णं ). V1 B4 D5.7 परमशोभनं. ]

—$^{c}$ ) Ś1 महावेग- ( for महोरग- ). —$^{d}$ ) Ñ2 V B1.3.4 D5.7 महत् ; D1 मृधे ( for रणे ). —$^{e}$ ) Ś1 Ñ1 D2 [ ऽ ]भ्य( D3 [ ऽ ]भि )पतत्तूर्णं; Ñ2 B4 Dg1 D1.4.5.7 T1 [ ऽ ]भ्यद्रवद्रामं; V1 न्यपतद्रामं; B1 [ ऽ ]भ्येत्य तद्रामं; D3 [ ऽ ]भ्यहनत्तूर्णं. —$^{f}$ ) Ś1 D2.3 हतोसीति वदन्रणे; Ñ1 दूषणाभ्यवदन्रणे ( sic ); Ñ2 B1.3.4 D5.7 वृत्रः शत्रुमिवासुरः; V वृत्रः शक्रमिवासुरः( V1 °हरेत् ); D1 M2 पतंग इव पावकं; M3 कृतकर्मा निशाचरः. —After 6, D1 reads( preceded by 475* and 476* ) 1.1–15 ( including star passages ). —After 6, Ś1 D2 ins.; D1 cont. after 486* :

474* भर्त्सयामास संक्रुद्धश्चित्रं विस्फार्य कार्मुकम् ।
रे रे रक्षोधम क्रूर वृथा तव पराक्रमः ।
प्रतियुध्यस्व समरे मया सार्धं निशाचर ।
ये त्वया भक्षिताः पूर्वं दण्डकारण्यवासिनः ।
द्रक्ष्यन्ति त्वां मृतं तेऽद्य मुनयः संशितव्रताः ।
राघवेणैवमुक्तस्तु दूषणः परुषं वचः ।
प्रत्युवाच तदा रामं क्रोधविस्फारितेक्षणः ।
प्राकृतान्राक्षसान्हत्वा शूरोऽहमिति मन्यसे ।
परिघस्य प्रहारं तु सहस्व मम संयुगे ।
एवमुक्तस्ततो रक्षो रामं रक्तान्तलोचनम् ।
उद्यम्य परिघं घोरं राघवाभिमुखो ययौ ।

[ ( l. 1 ) D1 स्फार्य च ( for विस्फार्य ). —( l. 2 ) D1.2 नाम ( for तव ). —( l. 3 ) D1 एहि युध्यस्व ( for प्रति° ). —( l. 6 ) D1 एवमुक्तस्तु रामेण ( for the prior half ). —( l. 10 ) D1.2 एवमुक्त्वा ( for °मुक्तस् ). —( l. 11 ) L( ed. ) तुद्यमानः स्वपरिघं ( for the prior half ). ]

—After 6, D1 M2 ins. :

475* तं कालदण्डप्रतिमं भ्रामयन्नेव दूषणः ।

—D1 cont. :

476* अभिदुद्राव काकुत्स्थं हतोऽसीति वदन्रणे ।

—After 475*, M2 cont. :

477* परावमर्दनं गृह्य परिघं राक्षसोत्तमः ।
दूषणः परमक्रुद्धो हतोऽसीति वदन्रणे । ;

whereas Ñ2 V B1.3.4 D5.7 ins. after 6 :

478* तस्याभिपततस्तूर्णं दूषणस्य स राघवः ।
शरैरापूरयद्रामः परिघं क्रोधमूर्छितः ।
ते शरा राघवोत्सृष्टा आसाद्य परिघं शिताः ।
कुण्ठधाराः क्षितिं जग्मुः शतशीर्षा इवोरगाः ।
ततो दूषणमायान्तं दृष्ट्वा परिघधारिणम् ।
वधेप्सुं तं रोषदीप्तं दण्डहस्तमिवान्तकम् ।

[ ( l. 1 ) V B1.3.4 संख्ये ( for तूर्णं ). —( l. 2 ) B4 om. from घं up to तः. D7 क्रोधमूर्छितं. —( l. 4 ) G( ed. ) नतशीर्षा. —( l. 6 ) Ñ2 B4 D5.7 रोषदीप्तं तं ( by transp. ); V1 रोषसंदीप्तं; V2 क्रोधदीप्तं तं ( for तं रोषदीप्तं ). ]

7 D3 reads from $7^{a}$ up to l. 1 of 480* in marg. —$^{a}$ ) Ś1 Ñ V B1.3 तस्याभिपततः संख्ये; B4 तस्य चापततः संख्ये. —$^{b}$ ) G2 M2.3 च ( for स ). —$^{c}$ ) Ñ2 B4 D7 क्षुराभ्यां ( for शराभ्यां ). —$^{d}$ ) Ñ2 सशस्त्र:; D5.7 सशस्त्र- ( for सहस्त- ). B1 प्रशस्ताभरणौ भुजौ. —For 7, D1 subst. and reads after 474* :

479* तस्योद्यतौ भुजौ द्वाभ्यां क्षुराभ्यां रघुनन्दनः ।
अकृन्तत्स महाबाहुः स्कन्धदेशान्महाबलः ।
छित्वा तस्य भुजौ रामः प्रहसन्राक्षसस्य वै ।
परिघं तं महाघोरं नियतं तं ददर्श ह ।

—After 7, Ś1 Ñ1 D2.3 ins., M2 ins. l. 1 and 4, while V1 ins. l. 3 only after 9 :

480* तस्य छित्वा भुजौ रामः प्रहसन्रघुनन्दनः ।
ज्याघाततलशब्देन रक्षसां भयमादधे ।
भूर्दिशः खं च घोषेण सर्वतोऽप्यनुनादयन् ।
परिघं च महाघोरं पातयामास पश्यतः ।

[ ( l. 1 ) D3 ततः छित्वा; M2 छित्वा तस्य ( for तस्य छित्वा ). D3 राघवो रणे ( for रघुनन्दनः ). —( l. 2 ) Ñ1 ज्याघोषतलशब्देन; V1 ज्याशब्दतलघोषेण; D3 ज्याघोषतलघोषेण ( for the prior half ). Ñ1 V1 D2.3 आदधत् ( for आदधे ). —( l. 3 ) Ś1 भूरिशं ( for भूर्दिशः ). Ñ1 शब्देन; V1 वेगेन ( for घोषेण ). Ñ1 V1 [ ऽ ]प्यनुनादयन्. —( l. 4 ) M2 तं ( for च ). D3 यथा ( for महा- ). M2 पतमानं ददर्श सः ( for the post. half ). ]

8 $^{a}$ ) Ś1 ततस् ; B3 हस्तस् ; D2 सोस्तस् ; D3 G1 त्रस्तस् ( for भ्रष्टस् ). Dg1 भ्रष्टहस्तो; D1 पृष्ठतश्च ( for भ्रष्टस्तस्य ). Ñ1 D4 T1 महाकायात् ; Ñ2 V B1.3.4 D5.7 महाघोरः; D1 महाकायं; D2 महावेगः ( for महाकायः ). —$^{b}$ ) D1 धरणीतले ( for रणमूर्धनि ). —After $8^{ab}$, B3 ins. :

481* पतिते च तदा हस्ते रक्षसो व्याकुलोऽभवत् ।

G. 3. 32. 20 B. 3. 26. 15 L. 3. 31. 28 स कराभ्यां विकीर्णाभ्यां पपात भुवि दूषणः ।
विषाणाभ्यां विशीर्णाभ्यां मनस्वीव महागजः ॥ ९
दृष्ट्वा तं पतितं भूमौ दूषणं निहतं रणे ।
साधु साध्विति काकुत्स्थं सर्वभूतान्यपूजयन् ॥ १०
एतस्मिन्नन्तरे क्रुद्धास्त्रयः सेनाग्रयायिनः ।
संहत्याभ्यद्रवन्रामं मृत्युपाशावपाशिताः ।
महाकपालः स्थूलाक्षः प्रमाथी च महाबलः ॥ ११

महाकपालो विपुलं शूलमुद्यम्य राक्षसः ।
स्थूलाक्षः पट्टिशं गृह्य प्रमाथी च परश्वधम् ॥ १२
दृष्ट्वैवापततस्तांस्तु राघवः सायकैः शितैः ।
तीक्ष्णाग्रैः प्रतिजग्राह संप्राप्तानतिथीनिव ॥ १३
महाकपालस्य शिरश्चिच्छेद रघुनन्दनः ।
असंख्येयैस्तु बाणौघैः प्रममाथ प्रमाथिनम् ॥ १४

---

—$^{c}$) D3 परिघं ( for परिघश् ). Dg1 तस्य विच्छिन्नहस्तस्य; D1 परिघच्छिन्नहस्तस्य. —$^{d}$) Ñ2 शत्रुध्वज ( for शक्र° ). Ñ1 इवोत्थितः; D4 T1 इवोच्छ्रितः; M2 इवापरः ( for इवाग्रतः ). —After 8, Dt1 ins. रामचन्द्राय नमः.

9 $^{a}$) Dt1 D6 कराभ्यां च ( for स कराभ्यां ). Ś1 Ñ1 Dg1 D3.4 T3 G2 M1 विशीर्णाभ्यां; D1 M2 निकृत्ताभ्यां; D2 विदीर्णाभ्यां ( for विकीर्णाभ्यां ). Ñ2 V B1.3.4 D5.7 स भुजाभ्यां निकृत्ताभ्यां. —$^{b}$) D3 रणमूर्धनि ( for भुवि दूषणः ). ❀ Ct : विकीर्णाभ्यां विक्षिप्ताभ्यां भुजाभ्यामुपलक्षितो दूषणश्च पपात विगतासुरिति शेषः. ❀ —$^{c}$) Ś1 Ñ1 D1–3 M2 निकृत्ताभ्यां; B1 विजीर्णाभ्यां; D4 T2 विकीर्णाभ्यां ( for विशीर्णाभ्यां ). —$^{d}$) Ś1 Ñ V2 B3.4 D1–3.5.7 M2 विरण्ण( D1 अरण्य; M2 विपंड ) इव कुंजरः; V1 B1 यथा हैमवतो गजः. —After 9, V1 ins. l. 1–3 of 480*.

10 $^{a}$) Ñ1 G3 तं दृष्ट्वा ( by transp. ); Dt1 om. ( for दृष्ट्वा तं ). Ñ1 परिघं; G2 M3 निहतं ( for पतितं ). Ś1 Ñ2 V B1.3.4 D1–3.5.7 M2 सपरिघं ( for तं पतितं ). Ñ2 V B1.3.4 D5.7 तत्र ( for भूमौ ). —$^{b}$) Ś1 पातितं; M3 पतितं ( for दूषणं ). Ś1 तेन तद् ; Ñ V B1.3.4 D1–3.5.7 पतितं; M3 दूषणं ( for निहतं ). Ñ2 V B1.3.4 D5.7 भुवि ( for रणे ). —$^{c}$) Ś1 Ñ1 Dg1 D2.3 T3 M2 भूतानि ( for काकुत्स्थं ). —$^{d}$) Ś1 Ñ1 D2.3 M2 राघवं प्रत्य( M2 सम )पूजयन् ; Dg1 T3 काकुत्स्थं समपूजयन् ; D6 सर्वलोकान्यपूजयन् . ❀ Cg : तमिति । अपूजयन् अस्तुवन् . ❀ —After 10, Ñ2 B1.3.4 D5.7 ins. ; V ins. after 16 :

482* यत्र यत्र च वीक्षेत राघवो राक्षसान्रणे ।
तत्रैव निहतास्तेन न शेकुरभिवर्तितुम् ।

[ ( l. 1 ) V परीक्षेत; D5 च विक्षेप ( for च वीक्षेत ).—( l. 2 ) V D5 अतिवर्तितुं. ]

11 For sequence of st. 11–15 in D1, cf. v.l. 6. —$^{a}$) Ś1 D2 क्रूरास् ( for क्रुद्धास् ). —$^{b}$) D4 ततः ( for त्रयः ). M2.3 सेनाग्रनायकाः. Ś1 Ñ V B1.3.4 D2.3.5.7 विक्रांता राक्षसास्त्रयः. —Ś1 Ñ1 V1 D2.3 transp. $^{cd}$ and $^{ef}$. —$^{c}$) Ś1 Ñ1 V1 D2.3 M1 सहसा; Ñ2 B1.3.4 D5.7 सहिता ( for संहत्य ). Dg1 G1 [ अ ]भिद्रवन् ; D5.7 ह्यद्रवन् ; G3 [ अ ]भ्यपतन् ( for [ अ ]भ्यद्रवन् ). —$^{d}$) Ś1 Ñ2 B1.3.4 D2.3.5.7 मृत्युपाशवशं गताः; V1 मृत्युपाशावशं गताः; M2 पतंगा इव पावकं. ❀ Ct : संहत्य मिलित्वा । मृत्युपाशेनावपाशिता बद्धाः. ❀ —For 11$^{abcd}$, D1 subst. :

483* दूषणं विरथं दृष्ट्वा हताश्वं हतसारथिम् ।
सचिवा दूषणस्यैव राघवं पर्यवारयन् ।

—Ñ2 V2 B1.3.4 D5.7 om. ( hapl. ) 11$^{ef}$. —$^{e}$) M1 महाकलाप( meta. ) ( for °कपालः ). D6 सालाक्षः ( for स्थूलाक्षः ). —$^{f}$) D1 रक्षसां वरः ( for च महाबलः ). —After 11, D1 ins. :

484* राघवं ते त्रयो रक्षा अर्दयन्समरे स्थिताः ।

12 For sequence of st. 11–15 in D1, cf. v.l. 6. —$^{a}$) Ś1 D2.3 विमलं; Ñ1 दुष्टात्मा ( for विपुलं ). —$^{b}$) D1 राक्षसं; M2 चायसं ( for राक्षसः ). ❀ Cv : प्रमाथी च महाबलः इत्यतः परं महाकपालो विपुलं शूलमुद्यम्य राक्षसः इत्येतदन्तं कोशेषु लेखकैः प्रमादात् पातितं. ❀ —$^{c}$) Dg1 D4 S पट्टसं; D5 परिघं ( for पट्टिशं ). —$^{d}$) Ñ1 महाबलः ( for परश्वधम् ).

13 For sequence of st. 11–15 in D1, cf. v.l 6. —$^{a}$) Ñ2 B1.3.4 D5.7 च ( for [ ए ]व ). K( ed. )तूर्णं ( for तांस्तु ). Ś1 Ñ1 V D2.3 [ आ ]पतमानांस्तान् ; Ñ2 B1.3.4 D1.5.7 [ आ ]पतमानानि; G( ed. ) धावमानांस्तान् ( for [ आ ]-पततस्तांस्तु ). —$^{b}$) Ś1 Ñ1 V1 D2.3 त्रिभिः ( for शितैः ). Ñ2 B1.3 D1.5.7 तानि रक्षांसि राघवः; V2 राक्षसान्राघवः शरैः; B4 रक्षांसि तानि राघवः. —$^{c}$) Ñ2 B1.3.4 D5.7 क्षुरप्रैः; D1 सुतीक्ष्णैः; D3 क्षीणाग्रैश् ( for तीक्ष्णाग्रैः ). Ś1 D2 अभिजग्राह; Ñ1 चापि जग्राह; D3 च निजग्राह ( for प्रतिजग्राह ). —$^{d}$) Ś1 Ñ V B1.3.4 D1–3.5.7 सत्कारैर् ( for संप्राप्तान् ). Ñ1 यथा ( for इव ).

14 For sequence of st. 11–15 in D1, cf. v.l. 6. —$^{a}$) M1 महाकलापस्य. —$^{b}$) Ś1 Ñ2 V B1.3.4 D2.3.5.7 [ ए ]केषुणैव( Ñ2 V1 B1.3.4 D5.7 °णा च ) सः; D1 [ ए ]केषुणा सह; D4 T1.2 G1.2 M2.3 परमेषुभिः( T2 G2 °णा ) ( for रघुनन्दनः ). Ñ1 चिच्छेदादाय कार्मुकं. —$^{c}$) Ś1 Ñ V B4 D2.3.5.7 बाणैश्च बहुभि( Ñ1 विविधै )स्तीक्ष्णैः( D6 °ग्रैः ); B1.3 बाणैर्बहुविधैस्तीक्ष्णैः; D1 बाणैश्च दशभिस्तीक्ष्णैः.

स्थूलाक्षस्याक्षिणी तीक्ष्णैः पूरयामास सायकैः ।
स पपात हतो भूमौ विटपीव महाद्रुमः ॥ १५
ततः पावकसंकाशैर्हेमवज्रविभूषितैः ।
जघान शेषं तेजस्वी तस्य सैन्यस्य सायकैः ॥ १६
ते रुक्मपुङ्खा विशिखाः सधूमा इव पावकाः ।
निजघ्नुस्तानि रक्षांसि वज्रा इव महाद्रुमान् ॥ १७
रक्षसां तु शतं रामः शतेनैकेन कर्णिना ।
सहस्रं च सहस्रेण जघान रणमूर्धनि ॥ १८
तैर्भिन्नवर्माभरणाश्छिन्नभिन्नशरासनाः ।
निपेतुः शोणितादिग्धा धरण्यां रजनीचराः ॥ १९ G. 3. 32. 30 B. 3. 26. 32 L. 3. 31. 38

15 For sequence of st. 11–15 in D1, cf. v.l. 6. —[a]) Ñ B1.3.4 D1.7 च चक्षुंषि; V2 तु चक्षुंषि; Dg1 [अ]क्षिणोस्तीवैः (sic); Dt1 D6 [अ]क्षिणी स्थूले (for [अ]क्षिणी तीक्ष्णैः). —[b]) Ñ V2 B1.3.4 D5.7 मार्गणैः (for सायकैः). —[c]) V2 D1 ते निपेतुः; Dg1 निपपात (for स पपात). Ś1 Ñ1 V1 D2.3 क्षितौ छिन्नो (V1 °न्ना); Ñ2 B1.3.4 D5.7 क्षितौ क्षीणे; V2 परिच्छिन्ना; Dg1 ततो भूमौ; D1 क्षणं छिन्ना; G1 महान्भूमौ (for हतो भूमौ). —[d]) Ś1 V1 D2.3 विनिकृत्तो यथा द्रुमः; Ñ1 भूयो रामशराहतः; Ñ2 V2 B1.3.4 D5.7 हतो (V2 illeg.) रामस्य सायकैः; D1 भूमौ रामस्य सायकैः. —After 15, Dg1 Dt1 Dm1 D4.6.8 S ins.:

485* दूषणस्यानुगान्पञ्चसाहस्रान्कुपितः क्षणात् ।
हत्वा तु पञ्चसाहस्रैरनयद्यमसादनम् ।
दूषणं निहतं दृष्ट्वा तस्य चैव पदानुगान् ।
व्यादिदेश खरः क्रुद्धः सेनाध्यक्षान्महाबलान् ।
अयं विनिहतः संख्ये दूषणः सपदानुगः ।
महत्या सेनया सार्धं युद्ध्वा रामं कुमानुषम् ।
शस्त्रैर्नानाविधाकारैर्हनध्वं सर्वराक्षसाः ।
एवमुक्त्वा खरः क्रुद्धो राममेवाभिदुद्रुवे ।
श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहंगमः ।
दुर्जयः करवीराक्षः परुषः कालकार्मुकः ।
हेममाली महामाली सर्पास्यो रुधिराशनः ।
द्वादशैते महावीर्या बलाध्यक्षाः ससैनिकाः ।
राममेवाभ्यधावन्त विसृजन्तः शरोत्तमान् ।

[(l. 2) Dg1 हत्वा तान्; D4 T1.2 G1.2 बाणौघैः; T3 हत्वा तं (for हत्वा तु). Dm1 D8 G3 पंचसाहस्रान्; M2 पंचसाहस्रम्. Dt1 D6 तान्नयद् (for अनयद्). —(l. 3) G1 च हतं (for निहतं). Dt1 D6 श्रुत्वा (for दृष्ट्वा). Dg1 तस्यैव च (by transp.) (for तस्य चैव). G1 वशानुगान्. —(l. 4) M1.2 ततः (for खरः). —(l. 5) Dt1 विनिर्हितः (sic) (for विनिहतः). Dm1 D8 G2.3 शेते (for संख्ये). —(l. 6) M1 युध्यमानं (for युद्ध्वा रामं). —(l. 7) G2 नानाविधैर्वीरैर्. —(l. 9) G2 दशग्रीवो (for पृथु°). —(l. 10) D8 G2 पुरुषः (sic) (for परुषः). —(l. 11) D4 G M मेघमाली (for हेममाली). —(l. 12) D4 ससैन्यकाः (for ससैनिकाः). —(l. 13) Dg1 D4 T G1.2 M2.3 [अ]भ्यवर्तंत (for [अ]भ्यधावन्त).]

—After 15, D1 ins.:

486* अथ तान्राक्षसान्दृष्ट्वा पतितान्रणमूर्धनि ।
राघवास्त्रविनिर्दग्धान्पतंगानिव पावकः ।
दृष्ट्वैव दूषणः क्रुद्धो सचिवाद्विहतान्रणे ।
परिघं भ्रामयामास कालदण्डमिवोत्थितम् ।
तं दृष्ट्वा राघवो रक्षः परिघायतपाणिनम् ।

—Then cont. 474*.

16 Ñ2 D5.7 om. 16. —[a]) Ś1 तथा (for ततः). —[b]) Ś1 Ñ1 V B1.3.4 D1–3 शरैर्हेमविभूषितैः (B1.3.4 D1 °वर्णैः). —[c]) V1 सर्वं (for शेषं). D1 जघान बलिनस्तस्य. —[d]) Ś1 Ñ1 V B1.3.4 D2.3 राक्षसं (B1.3.4 D3 रक्षसां) सैन्यमाहवे; D1 तत्र सैन्यस्य राघवः. —After 16, V ins. 482*.

17 [a]) Ñ1 निशिता (for विशिखाः). —[b]) G (ed.) खे ग्रहाः (for पावकाः). Ś1 Ñ1 D2.3 रामकार्मुकनिःसृताः; Ñ2 V B1.3.4 D1.5.7 सधूमा हेमभूषणाः (D1 °षिताः). —[d]) Ś1 Ñ V B1.3.4 D2.3.5.7 G2 M1.2 वज्राणीव; D1 यथा वज्रो; (for वज्रा इव). Ś1 D2.3 महीधरान्; Dm1 D8 G3 महासुरान्; M1 महाचलान् (for महाद्रुमान्).

18 [a]) D1.3 M1.2 राक्षसानां (for रक्षसां तु). Ś1 शतान्; G2 शरं (sic) (for शतं). —[b]) Dg1 Dm1 D8 G3 M2 शरेण; D4 शितेन; T3 शस्त्रेण (for शतेन). Ś1 D2.3 पत्रिणा (D3 °णां) (for कर्णिना). D1 एकैनैव त्रिकर्णिना. —For 18[ab], Ñ2 V B1.3.4 D5.7 subst.; Ñ1 subst. l. 2 only for 18[ab]:

487* राक्षसानां शतं हत्वा श्रेष्ठानां राघवः पुनः ।
एकैकेन जघानैकं शरेण युधि राक्षसम् ।

[(l. 1) D5 ज्येष्ठानां (for श्रेष्ठानां). —(l. 2) Ñ1 एककेन; B1.4 एकेनैव (for एकैकेन). B4 जघानैकः (for जघानैकं). V2 शतेन (for शरेण). Ñ1 राक्षसान् (for राक्षसम्).]

—[c]) Dg1 Dt1 Dm1 D6.8 T3 G2.3 M1.3 तु (for च). —[d]) Ñ V B1.3.4 D5.7 शराणां निजघान सः (Ñ1 ह); D1 जघान नृवरात्मजः.

19 [a]) Ś1 Ñ B1.3.4 D2.3.5.7 G1.3 M3 ते (for तैर्). Ś1 Ñ1 V B4 D2.3 छिन्न- (for भिन्न-). B1 -मर्म- (for -वर्म-). Ñ2 V2 B1.3.4 D3.7 G2 -[आ]वरणाश्च (for -[आ]भर°). —[b]) Ś1 D3 छिन्नभिन्नशिरोरुहाः; Ñ2 D5.7 छिन्ना भिन्नाः शराहताः; V छिन्नभिन्नशराहताः; B1.3.4 छिन्नभिन्नाः शराहताः; D2 छिन्नभिन्नशिरोधराः; T2 छिन्ना भिन्नशरासनाः. —D3 reads 19[c]–21 in marg. —[c]) V1 B4 D5–7 शोणितैर्दिग्धा; B1.3 शोणितैर्दिग्धैर् (for °तादिग्धा). —[d]) G (ed.) पृथिव्यां (for धरण्यां). —For 19, D1 subst. and reads after 20[ab]:

G. 3. 32. 31
B. 3. 26. 33
L. 3. 31. 39

तैर्मुक्तकेशैः समरे पतितैः शोणितोक्षितैः ।
आस्तीर्णा वसुधा कृत्स्ना महावेदिः कुशैरिव ॥ २०
क्षणेन तु महाघोरं वनं निहतराक्षसम् ।
बभूव निरयप्रख्यं मांसशोणितकर्दमम् ॥ २१
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
हतान्येकेन रामेण मानुषेण पदातिना ॥ २२
तस्य सैन्यस्य सर्वस्य खरः शेषो महारथः ।
राक्षसस्त्रिशिराश्चैव रामश्च रिपुसूदनः ॥ २३
ततस्तु तद्भीमबलं महाहवे
समीक्ष्य रामेण हतं बलीयसा ।
रथेन रामं महता खरस्ततः
समाससादेन्द्र इवोद्यताशनिः ॥ २४

इति श्रीरामायणे अरण्यकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

---

488* बभूव गिरिसंकाशैरावृतं धरणीतलम् ।
तैर्भिन्नैर्गिरिसंकाशैः पतितैर्वारणोपमैः ।

20 D3 reads 20 in marg. (cf. v.l. 19). —$^{ab}$) D1 तैश्छिन्नहृदयैः संख्ये (for $^{a}$). Ñ V B1.3.4 D5.7 पतितैः समरे (by transp.) (for समरे पतितैः). —After $20^{ab}$, D1 reads 488*. —$^{c}$) Dt1 D6 Ct विस्तीर्णा (for आस्तीर्णा). Ś1 D2.3 रराज वसुधाकीर्णा; Ñ V B1.3.4 D5.7 व्यराजद्वसुधाकीर्णैर् (Ñ1 V1 B1 °र्णा); D1 बभूव वसुधाकीर्णा. —$^{d}$) Ś1 B1 D3 मखवेदी; Ñ1 V2 B3.4 D2.5.7 मखे वेदी; Ñ2 मखे वेदिः; V1 अभ्ये वेदी (sic); Dg1 D8 महावेदी; D4 महादिवैः (sic) (for महावेदिः). D1 कुशैर्वेदिरिवाध्वरे.

21 D3 reads 21 in marg. (cf. v.l. 19). —$^{a}$) Ś1 Ñ1 D2.3 M2 क्षणेन तद्; Ñ2 V1 B1.3.4 D5.7 तत्क्षणेन; V2 Dg1 Dt1 Dm1 D6.8 T3 तत्क्षणे तु (for क्षणेन तु). Ś1 Ñ1 बलं सर्वं; D2 M2 बलं घोरं; D3 वनं घोरं (for महाघोरं). D1 निःशब्दमिति तत्सर्वं. —$^{b}$) Ñ1 D2.3 M2 तदा; D1 दीनं (for वनं). Ñ2 V B1.3.4 D5.7 निहतकंटकं (for निहतराक्षसम्). L(ed.) तदानीं हतराक्षसं. —For $21^{ab}$, G(ed.) subst. l. 4 of 490*. —$^{c}$) Ś1 निरपेक्षं च (for निरयप्रख्यं). —After 21, Ś1 D2.3 ins.:

489* तैर्भिन्नगिरिसंकाशैः पतितैर्वारणोपमैः ।
निःशब्दमभवत्सर्वं दीनं निहतराक्षसम् ।

[cf. 488*. —(l. 2) D3 दीनं सर्वं (by transp.).]; while Ñ2 V B1.3.4 D5.7 ins.:

490* तत्रान्ये शेरते भूमौ शरार्ता गतजीविताः ।
कूजन्त्यन्ये भ्रमन्त्यन्ये मत्ता इव शरार्दिताः ।
तद्बदार्तमहायोधं विप्रद्रुतनिशाचरम् ।
शून्यमायोधनं सर्वं रामबाणाग्निना हतम् ।

[(l. 1) Ñ2 गतजीविकाः. —(l. 2) B3 वमंत्यन्ये; D7 सैरे भित्र (sic) (for भ्रमन्त्यन्ये). V1 B2 शराहताः (for शरार्दिताः). B1 G(ed.) om. l. 3. —(l. 3) V2 तं हत तु (sic); B4 तं हतार्त-. V -महाघोरं (for -महायोधं). Ñ2 D5.7 विप्रकीर्ण- (for विप्रद्रुत-). —G(ed.) reads l. 4 for $21^{ab}$. —(l. 4) G(ed.) त्वायोधनं (for आयो°).]

22 Ñ1 om. 22–23. —$^{b}$) M2 क्रूरकर्मणां (for भीम°). —$^{d}$) D1 दूषणश्च निपातितः.

23 Ñ1 om. 23 (cf. v.l. 22). —$^{a}$) D1 स तु (for तस्य). Ñ2 V B1.3.4 D3.5.7 G3 M2 सर्वस्य सैन्यस्य (by transp.). —$^{b}$) Ś1 D2 शिष्टोतिपौरुषात्; Ñ2 V B1.3.4 D5.7 G1.2 M शेषो महाबलः; D1 चैषो महाबलः; D3 शेषोतिपौरुषात्. —$^{d}$) G3 स (for च). Ñ2 B1.3.4 D5.7 हतशेषौ निशाचरौ; V हतशेषौ महाबलौ; D2 रामं तु रिपुसूदनं. —After 23, Dg1 Dt1 Dm1 D4.6.8 S ins.:

491* शेषा हता महावीर्या राक्षसा रणमूर्धनि ।
घोरा दुर्विषहाः सर्वे लक्ष्मणस्याग्रजेन ते ।

[(l. 1) D4 T1.2 G1.2 M2.3 महासत्त्वा (for महावीर्या). G1.2 M2.3 रणदुर्जयाः (for रणमूर्धनि).]

24 $^{a}$) Dg1 D2 T3 G M1 तं (for तद्). Ś1 D1.2 भीमबलो (for भीमबलं). Ś1 D1.2 बलं रणे; D3 महारणे; M2 दुरासदं (for महाहवे). —$^{b}$) Dg1 T3 संप्रेक्ष्य (for समीक्ष्य). D1 बलं (sic) (for हतं). Ś1 D2 च लीलया (for बलीयसा). —For $24^{ab}$, Ñ V B1.3.4 D5.7 subst.:

492* स दूषणं प्रेक्ष्य रणे निपातितं
निशाचरांश्चाप्रतिमान्रणोत्कटान् ।

[(l. 1) B1 निपातितं रणे (by transp.). —(l. 2) B4 बलोत्कटान् (for रणो°).]

—$^{c}$) Ś1 D2 तथेति (for रथेन). Ś1 स वरः; D4 महतः (sic) (for महता). Ś1 D2 स्वयं; Ñ V B1.3.4 D5.7 T2 G1 तदा; D4 तथा (for ततः). D3 स्वयं खरः (for खरस्ततः). D1 खरो रथेनैव महाबलस्तदा. —$^{d}$) D1 [ए]वम् (for [इ]न्द्र). Ś1 D2.3 समाससादेंद्र (D3 °दु) मिवासुरेश्वरः; Ñ1 M3 °देंद्रमिवोद्यताशनिं; Ñ2 V B1.3.4 D5.7 समभ्यधावन्नमुचिर्यथा हरिं; M1 °द्यतायुधः; M2 ससार खद्योत इवोद्यतं शशिं.

# २६

खरं तु रामाभिमुखं प्रयान्तं वाहिनीपतिः ।
राक्षसस्त्रिशिरा नाम संनिपत्येदमब्रवीत् ॥ १
मां नियोजय विक्रान्त संनिवर्तस्व साहसात् ।
पश्य रामं महाबाहुं संयुगे विनिपातितम् ॥ २
प्रतिजानामि ते सत्यमायुधं चाहमालभे ।
यथा रामं वधिष्यामि वधार्हं सर्वरक्षसाम् ॥ ३
अहं वास्य रणे मृत्युरेष वा समरे मम ।
विनिवर्त्य रणोत्साहं मुहूर्तं प्राश्निको भव ॥ ४
प्रहृष्टो वा हते रामे जनस्थानं प्रयास्यसि ।
मयि वा निहते रामं संयुगायोपयास्यसि ॥ ५
खरस्त्रिशिरसा तेन मृत्युलोभात्प्रसादितः ।
गच्छ युध्येत्यनुज्ञातो राघवाभिमुखो ययौ ॥ ६  G. 3. 33. 7 B. 3. 27. 6 L. 3. 32. 8

---

Colophon. —*Sarga name* : Ś1 Ñ2 V B1.3.4 D1–3.5.7 दूषणवधः; Ñ1 दूषणो नाम; G1 सैन्यविध्वंसनं. —*Sarga no.* (figures, words or both) : Ś1 Ñ1 B1 D2 om.; Ñ2 V2 D7 32; V1 D5 31; B3 33; B4 34; Dg1 Dt1 Dm1 D4.6.8 T G M1 26; D1 30; D3 36; M2.3 27; L(ed.) 31. —After colophon, G concludes with श्रीरामाय नमः.

## 26

D8 begins with ॐ; M1 with श्रीरामाय नमः. —Before 1, Ś1 D1.2 ins. :

493* तं दृष्ट्वा राक्षसं सैन्यमनिग्राह्यं महाबलम् ।
हतमेकेन रामेण दूषणं च निपातितम् ।

[ Cf. 3.27.2. —(l. 1) Ś1 तद् ( for तं ). D1 अविपह्यं ( for अनिग्राह्यं ). ] ;
while Dg1 ins. :

494* त्रिशिरः शिरसां छेदं दृष्ट्वा तेन सुसेविनाम् ।
दुःखत्रयनिहन्तारं लक्ष्मणाग्रजमाश्रये ।

1 Dg1 reads $1^{ab}$ in marg. —$^{a}$) Ś1 D1.2 च ( for तु ). Ñ2 D5.7 तस्याभिमुखं ( for रामा° ). —$^{b}$) Ś1 Ñ2 V B1.3.4 Dm1 D1–3.5.7.8 M2 -पतिं ( for -पतिः ). —$^{c}$) D4 रामं; G2 तत्र ( for नाम ). —$^{d}$) Dt1 om. ( hapl. ? ) संनिपत्येदम. Ś1 स निरीक्ष्य; Ñ1 समुपेत्य; Ñ2 V B1.3.4 D5.7 समुत्पत्य; D1–4 G2 संनिवर्त्य; M2 विनिवर्त्य ( for संनिपत्य ).

2 $^{a}$) Ś1 Ñ V Dt1 D1–3.5–7 G1 M1.2 विक्रांतं ( D1 °ते ); Dg1 T3 विश्रांतः; Dm1 D8 G3 संग्रामे ( for विक्रान्त ). —$^{b}$) V2 Dt1 D6 M1 त्वं ( for सं- ). D1 निवर्तस्व महाहवात्. —$^{c}$) Ś1 Ñ2 D5–7 महावीर्यं; V1 महावीरं; V2 महावीर; B1.3.4 मया वीर ( B1 °रं ); D1–3 मया वीर्यात् ( for महाबाहुं ). Ñ1 मायिनं राघवं पश्य. —$^{d}$) Ñ1 समरे ( for संयुगे ).

3 $^{a}$) B1 प्रतिजानीहि ते; Dm1 ( before corr. as in text ) प्रतिजानासि मे. Ś1 D2 वीर्यात् ; Ñ V B1.3.4 D3.5.7 वीर; Dg1 T3 M1.3 सर्वम् ; M2 वीरः ( for सत्यम् ). —$^{b}$) Ś1 Ñ V B1.3.4 D2.3.5.7 M2 सत्ये ( V स ते )नायुधमालभे. —$^{c}$) Ś1 D2.3 हनिष्यामि; Ñ V B1.3.4 D5.7 रणे पापं ( for वधिष्यामि ). —$^{d}$) Ś1 D2.3 रिपुं वै; Cm वधार्थं ( for वधार्हं ). Ñ V B1.3.4 D5.7 पातयिष्यामि सायकैः; D1 समरे नात्र संशयः.

4 $^{a}$) Ś1 V1 B3.4 D1.2 च ( for वा ). Ct*p* समरे ( for [ अ ]स्य रणे ). —$^{b}$) V1 एष वै समयो मम; D1 एष वा मम संयुगे. —$^{c}$) Ñ1 D4 T G1.3 M1 विनिवृत्य; B3 विनिवृंत्य ( for °वर्त्य ). Dg1 Dm1 D8 T G M1 Ct*p* रणोत्साहान् ; D1 रणे सोहं; Cm महोत्साहात् ( for °हं ). —$^{d}$) Ś1 B3 D1–3 प्रेक्षको; V2 धार्मिको ( for प्राश्निको ). D2.4 [ ऽ ]भवत् ( for भव ).

5 $^{a}$) Dm1 ( after corr. as in text ) Cg प्रहृष्टे; G1 प्रविष्टो ( for प्रहृष्टो ). Ñ1 V1 B1.3.4 D5.7 [ ऽ ]द्य ( for वा ). V1 गते ( for हते ). D4 निहतो; T2 निहते ( for वा हते ). D7 राजन् ( for रामे ). —$^{b}$) D1 जनस्थाने ( for °नं ). Ś1 Ñ2 D1–3.5.7 गमिष्यसि; D4 M2 प्रयास्यति ( for प्रयास्यसि ). —$^{d}$) M2 ( after corr. as in text ) [ उ ]पयास्यति. Ñ V B1.3 D5.7 संयुगे पातयिष्यसि; B4 संयुगे निहनिष्यसि; Dt1 Dm1 D1.6.8 संयुगाय प्रयास्यसि; D3 युगायोपप्रयास्यसि.

6 $^{a}$) Ś1 D1–3 ह्येवं; Ñ2 V B1.3 D7 त्वेवं; B4 D5 [ अ ]प्येवं ( for तेन ). —$^{b}$) Ś1 D2.3 मृत्युकाले; D1 मृत्युलोकान् ( for मृत्युलोभात् ). Ñ1 प्रभावितः; B3.4 ( m. also ) प्रचोदितः; D1 निवर्तितः ( for प्रसादितः ). —After $6^{ab}$, Ś1 Ñ V B1.3.4 D1–3.5.7 M2 ins. :

495* एवमस्त्विति तद्वाक्यं प्रहृष्टो राक्षसोऽब्रवीत् ।
ततः प्रहृष्टस्त्रिशिराश्चापमुद्यम्य वीर्यवान् ।

[ ( l. 1 ) Ś1 स ( for [ इ ]ति ). Ñ B1.3.4 D5.7 प्रत्य ( B3 सन )पद्यत; V पार्श्विकोभवत् ; M2 समपूजयत् ( for राक्षसोऽब्रवीत् ). —( l. 2 ) D1 प्रहृष्टस्तत्र ( for ततः प्रहृष्ट ). —B3 reads from the post. half up to $6^{cd}$ in marg. Ñ1 सत्वरः; Ñ2 D5.7 भास्वरं; V1 वेगवान् ; V2 B1.3.4 M2 तु ( V2 B4 M2 स )त्वरं ( for वीर्यवान् ). ]

—Thereafter M2 ( *inf. lin. sec. m.* ) cont. :

496* खरेण मानितो वीरो युद्धाय त्रिशिरास्तदा ।

—M3 om. $6^{c}$–8. G3 illeg. for $6^{cd}$. —$^{c}$) Ś1 Dg1 D1 युद्धे ( for युध्य ). Ś1 D1 [ ऽ ]भ्यनुज्ञातो; Dg1 त्वनुज्ञातो; D8 [ इ ]त्यभिज्ञातो ( for [ इ ]त्यनुज्ञातो ). M1 स च तेनाभ्यनुज्ञातो. —$^{d}$) Ñ2 B3.4 D5.7 G2 -[ अ ]भिमुखं ( for °खो ). —After 6, Ś1 D1–3 ins. 497*.

G. 3. 33. 8 B. 3. 27. 7 L. 3. 32. 10

त्रिशिराश्च रथेनैव वाजियुक्तेन भास्वता ।
अभ्यद्रवद्रणे रामं त्रिशृङ्ग इव पर्वतः ॥ ७
शरधारासमूहान्स महामेघ इवोत्सृजन् ।
व्यसृजत्सदृशं नादं जलार्द्रस्येव दुन्दुभेः ॥ ८

आगच्छन्तं त्रिशिरसं राक्षसं प्रेक्ष्य राघवः ।
धनुषा प्रतिजग्राह विधुन्वन्सायकाञ्शितान् ॥ ९
स संप्रहारस्तुमुलो रामत्रिशिरसोर्महान् ।
बभूवातीवबलिनोः सिंहकुञ्जरयोरिव ॥ १०

7 M3 om. 7 (cf. v.l. 6). —$^a$) Dt1 D3.6 T1.2 तु (for च). D4 Cm त्रिशिरापि (metri causa). ꣸ Cm : त्रिशिरापीत्यत्राकारलोपश्छांदसः. ꣸ —$^c$) Ś1 D2.3 अभ्यधावद् (for °द्रवद्). Ś1 अथो; D1.2 रथी (for रणे). —$^d$) D1.3 त्रिशीर्षा(D3 °र्ष); T3 सशृंग (for त्रिशृङ्ग). Ś1 D1-3 M2 शैलराट् (for पर्वतः). — For 7, Ñ V B1.3.4 D5.7 subst.; while Ś1 D1-3 ins. after 6; M2 ins. after 7 :

497* एतस्मिन्नन्तरे सैन्यमपरं रक्षसां महत् ।
अभ्येत्य तं त्रिशिरसं हतशेषं न्यवर्तत ।

[ (l. 1) Ñ1 सौम्यम् (for सैन्यम्). Ś1 D3 समरे; B3 रक्षसां (for अपरं). B3 समरं; D1 राक्षसं (for रक्षसां). Ñ2 V2 D5.7 transp. अपरं and रक्षसां. Ñ1 अपरे राक्षसास्तदा (for the post. half). —(l. 2) Ś1 Ñ1 D2.3 अन्ये(Ś1 °न्ये)व तं; V1 अन्वधावत्; V2 illeg.; B1.3 अन्वेयंतं; B4 अन्वेतुं तं; D1 अन्वेवं तं; M2 अन्वपतत् (for अभ्येत्य तं). Ś1 हतसैन्यं (for °शेषं). Ñ1 हतशेषाः समागमन्; M2 खरशिष्टस्य वर्तत (sic) (for the post. half).]

8 M3 om. 8 (cf. v.l. 6). V2 illeg. up to महामेघ in $^b$. —$^a$) Ś1 D2.3 -सहस्राणि; Dg1 -समूहं स; D1 -समूहान्हि; G2 om. second स; G3 -समूहः सन् (for -समूहान्स). Ñ1 शरधारं सुविपुलं; Ñ2 V1 B1.3.4 D5.7 स तदा(B4 शतधा) ततसु(Ñ2 हि सु; V1 च [subm.]; D5.7 तं सु)विपुलं; M2 तत्रैकतवलं घोरं. —$^b$) Ś1 D2 इवासृजत्; Ñ1 -महास्वनं; Ñ2 V2 B3.4 D5.7 M2 -समस्वरं(B3.4 M2 °नं); V1 B1 -निभस्वनं (for इवोत्सृजन्). —$^c$) Dg1 D2 T1 विसृजत्; T2 विसृज्य (for व्यसृजत्). Ś1 B1 D2 सुभृशं; Dm1 D8 G1.3 भैरवं (for सदृशं). —$^d$) Ś1 Ñ V B1.3.4 D2.3.5.7 M2 जलक्लिन्नस्य (for जलार्द्रस्येव). ꣸ Cv : व्यसृजत् सदृशं नादं जलार्द्रस्येव दुंदुभेरिति पाठः (as in text). ꣸ —After 8, Ñ (Ñ1 l. 1-2 only) V B1.3.4 D2.3.5.7 M2 (l. 1-2 only) ins. :

498* तानापतत एवाशु संरब्धान्युद्धदुर्मदान् ।
राक्षसान्प्रतिजग्राह रामः सत्यपराक्रमः ।
सुसंप्रहारस्तुमुलः कटुकः शोणितोदकः ।
समपद्यत बीभत्सस्तयोः समरमूर्धनि ।
बाणवृष्टिभिराकीर्णः सहस्रांशुर्दिवाकरः । [5]
न प्रकाशत संरुद्धो ववौ न च सदागतिः ।
विततं व्योम सर्वत्र शरजालेन भास्वता ।

[ (l. 1) Ñ2 D5.7 संनद्धान् (for संरब्धान्). —(l. 2) Ñ1 प्रतिजग्राह रक्षांसि; M2 दृष्ट्वा स रोषताम्राक्षो (for the prior half). —After l. 2, Ñ1 ins. (followed by l. 5-25 of 504*) :
498(A)* तेषां बाणान्महाबाहुः शरैः संछिद्य राघवः ।
—(l. 3) B4 D5.7 स (for सु-). B3 सर्गप्रहारस्. —(l. 4) B1.3.4 बीभत्सं (for °त्सस्). —(l. 6) B3 प्राकाशत. B1.3 संक्रुद्धो (for संरुद्धो). B4 न प्रकाशति संरुद्धो (for the prior half). G(ed.) च न (by transp.). —(l. 7) Ñ2 विरतं (for विततं). —D7 om. from र्व in सर्वत्र up to भास्वता.]

9 Ñ2 V (V1 om. 10) B1.3.4 D5.7 read 9-10 (preceded by 504*) after 12$^{cd}$. G3 illeg. for 9-10$^c$. M2 repeats (var.) 9 and 10 after 504*. —$^a$) Ś1 Ñ V B1.3.4 D2.3.5.7 M2 (second time) आपतंतं; D1 अथायांतं (for आगच्छन्तं). —$^b$) Ś1 D2 रणे सं- (for राक्षसं). D1 दृश्य (archaic) (for प्रेक्ष्य). —$^{cd}$) Ś1 D2.3 चक्षुषा (for धनुषा). Ś1 चातिजग्राह (for प्रति°). D4 G1.2 M (M2 first time) Cg विधून्वन्; T2 विसृजन् (for विधुन्वन्). Dm1 निजान्; D1 बहून् (for शितान्). Ś1 D2 समरे शरान्; D3 सशरं धनुः (for सायकाञ्शितान्). Ñ V B1.3.4 D5.7 M2(second time) प्रतिजग्राह सशरं धनुरुद्यम्य वीर्यवान्.

10 Ñ2 V2 B1.3.4 D5.7 read 9-10 after 12$^{cd}$; G3 illeg. for 10$^{abc}$; M2 repeats (var.) 9-10 after 504* (for all, cf. v.l. 9). V1 om. 10. —$^a$) M2 (second time) तु महान् (for तुमुलो). G1 संप्रहारस्तु तुमुलो. —$^b$) Ś1 D1-3 तयोः; Ñ V2 B1.3.4 D5.7 M2 (second time) अभूत्; Dt1 D6 तदा (for महान्). —$^c$) Ś1 D2.3 बभूव हृदयायासी; Ñ V2 B1.3.4 D5.7 M2 (second time) बलगर्वितयोर्भीमः (Ñ1 illeg. for भीमः); Dt1 Dm1 D6.8 G1 संबभूवातिबलिनोः; D1 बभूवातिमहांस्तत्र. —After 10, D5 ins.; while D7 subst. for 11 :

499* ततस्त्रिशिरसं वीक्ष्य राघवो रिपुमर्दनः ।
अब्रवीत्परमक्रुद्धो वाक्यं राक्षसपुंगवम् ।

—D5.7 cont.; Ñ1 M2 ins. after l. 4 of 504*; V2 B1.3.4 ins. after 10 :

500* एष त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम् ।
[ Ñ1 illeg. for तीक्ष्णैर्. ]

—D5.7 further cont. :

501* शरान्प्रतिगृहाणेमान्ममापि त्वं धनुश्च्युतान् ।

—After 10, M2 ins. (followed by l. 5-7, 15, 11, 19-25 of 504*) :

502* मुमोच निशितान्बाणान्नामाय रजनीचराः ।
तेषां बाणान्महाबाहुः शरैः संछिद्य लाघवात् ।

ततस्त्रिशिरसा बाणैर्ललाटे ताडितस्त्रिभिः ।
अमर्षी कुपितो रामः संरब्धमिदमब्रवीत् ॥ ११

अहो विक्रमशूरस्य राक्षसस्येदृशं बलम् ।
पुष्पैरिव शरैर्यस्य ललाटेऽस्मि परिक्षतः ।
ममापि प्रतिगृह्णीष्व शरांश्चापगुणच्युतान् ॥ १२ G. 3. 33. 30 B. 3. 27. 13 L. 3. 32. 16

11 $^{a}$) G2 M2 त्रिशिरसो ( for °सा ). —$^{b}$) M2 पीडितस् ( for ता° ). —$^{c}$) Ñ2 B4 Dm1 D5 M1 अ( D5 आ )मर्षात् ; Dg1 अमर्ष- ( for अमर्षी ). Ś1 D2 रोषाद् ( for रामः ). —$^{d}$) Ñ1 illeg.; Dg1 Dt1 Dm1 D1.6.8 T3 G संरब्ध ( for संरब्धम् ). Ś1 D2 रामो वचनमब्रवीत् ; Ñ2 V B1.3.4 D5 इदं वचनम°; D3 रोषाद्वचनम°. —For 11, D7 subst. 499*.

12 $^{a}$) G1 राक्षस-; G2 विक्रांत- ( for विक्रम- ). Ñ1 M2 -युक्तस्य ( for -शूरस्य ). Ś1 D2.3 अहो संग्रामशौंडस्य. —$^{b}$) Ś1 Ñ1 D2.3 रक्षसो बलमीदृशं ( by transp. ); Ñ2 V2 B1.3.4 D5.7 नायकस्य महात्मनः; V1 राक्षसस्य महात्मनः. —After $12^{ab}$, Ñ2 V B1.3.4 D5.7 ins. :

503* रक्षसः सदृशं युद्धे बलविक्रमसाधनम् ।
महाधनुर्विनिःसृष्टैः संयुगे रोषनिःसृतैः ।

[ (l. 1) B1 सुभृशं ( for सदृशं ). Ñ2 V2 D5.7 युद्धं ( for युद्धे ). B3.4 बलं ( for बल- ). V1 B4 -सादनं ( for -साधनम् ). —(l. 2) V1 रामदर्पितैः ( for रोषनिःसृतैः ). ]
—$^{c}$) Ś1 D2 अस्त्रैर् ; Ñ1 येन; Dt1 Dm1 D6.8 योहं; D3 T2 अस्य ( for यस्य ). —$^{d}$) Ñ2 V B1.3.4 D5.7 विभूषितः; Dg1 D2 T2 M2 परिक्षितः; D3 परिक्रुतः ( for °क्षतः ). Ñ1 चास्मि रिक्षतः ( sic ). —After $12^{cd}$, Ñ2 V B1.3.4 D5.7 ins.; while Ñ1 ins. l. 1–4 ( followed by 500* ) after $12^{cd}$ and l. 5–25 after 498(A)*; whereas M2 ins. l. 2–4 ( followed by 500* ) after 12 and l. 5–7, 15, 11 and 19–25 after 502*; Ś1 D1–3 ins. l. 1 only after $12^{cd}$ :

504* मया प्रतिगृहीतास्ते शराश्चापगुणच्युताः ।
प्रीतोऽस्मि ते महाबाहो लाघवेन निशाचर ।
न खल्ववज्ञा कर्तव्या रिपावपि सुदुर्बले ।
वञ्चितोऽहमवज्ञानात्त्विदानीं ममाग्रतः ।
इत्युक्त्वा राघवोऽविध्यत्समरे मोहयन्बली ।
व्याकुलानथ संमूढान्पिण्डितान्वीक्ष्य राघवः ।
जहार समरे प्राणांश्छित्त्वा तेषां शिरांसि च ।
ते छिन्नशिरसः पेतुश्छिन्नवर्मायुधध्वजाः ।
सुपर्णवातविक्षिप्ता जगत्यां पादपा इव ।
हतशेषास्तु ये तत्र राक्षसा भयविह्वलाः ।
खरमेवाभ्यधावन्त शरणार्थं शरार्दिताः ।
तदभूदद्भुतं युद्धं तुमुलं लोमहर्षणम् ।
रामस्य च महाबाहोः पुनस्तेषां च रक्षसाम् ।
संरब्धास्त्राक्षसान्रामस्त्यक्तप्राणान्रणाजिरे ।
आदिश्यादिश्य बाणौघैः सोऽनयद्यमसादनम् ।
सर्वस्य तस्य सैन्यस्य खरः शेषो महाबलः ।
राक्षसस्त्रिशिराश्चैव रामश्च रिपुसूदनः ।
दृष्ट्वा तु निहतं सैन्यं रक्षसां पिशिताशिनाम् ।
त्रिशिराः परमक्रुद्धश्चोदयामास सारथिम् ।
भर्तुः पिण्डस्य निर्वेशं कर्तुमिच्छामि माचिरम् ।
प्रत्यक्षमस्य वीरस्य खरस्य सुमहात्मनः ।
प्रतिजानामि ते सूत सत्येनायुधमालभे ।
यथा रामं हनिष्यामि रामो वा मां हनिष्यति ।
एवं संचोदितः सूतश्चोदयामास वाजिनः ।
ततः प्रजवितोश्वेन राममभ्यद्रवद्रणे ।

[ (l. 1) D1 प्रतिगृहीता हि; D3 परिगृहीतास्ते. V1 चापि ( for चाप- ). Ś1 -गुणाच् ; Ñ2 D5.7 -गुणाच् ; D2.3 -मुख- ( for -गुण- ). V2 शराश्चापगुणान्विताः; D1 शरास्ते धनुषश्च्युताः ( for the post. half ). —(l. 2) Ñ2 D5.7 सुमहाबाहो ( for ते म° ). —(l. 3) Ñ1 हि दुर्बले; M2 ( after corr. *sec. m.* ) सुदुर्लभे ( for सुदुर्बले ). —(l. 4) V1 व्यथितो ( for वञ्चितो ). Ñ1 वंचितस्ते * वज्ञानात्; M2 संवंचितोप्यवज्ञानात् ( for the prior half ). —(l. 5) V2 इत्युक्तो. B3 तेषां ( for ऽविध्यत् ). Ñ1 विध्वा * * * * ( illeg. ) रामः; M2 विव्याध राक्षसान्रामः ( for the prior half ). —(l. 6) V1 अपि ( for अथ ). D5 M2 पीडितान् ( for पिण्डि° ). Ñ1 M2 दृष्ट्वा ( for वीक्ष्य ). —l. 7–11 = $3.24.24^{cd}$, 461*, 25. —(l. 7) B1.4 M2 जग्राह ( for जहार ). M2 हित्वा ( for छित्त्वा ). D5.7 चैषां ( for तेषां ). Ñ1 V1 B4 D5.7 सः ( for च ). —(l. 8) V1 सं- ( for ते ). B3 om. वर्मा. —(l. 9) Ñ1 सुपर्णपक्ष-; V1 °पाद- ( for °वात- ). B1 -निक्षिप्ता ( for -वि° ). B3 transp. पादपा and इव. —(l. 10) V2 illeg. after हतशेषास्तु. Ñ2 V1 D5.7 ते ( V1 ये ) शूरा; B1 ते **; B4 ते तत्र ( for ये तत्र ). G( ed. ) हतशेषास्ततः सर्वे ( for the prior half ). Ñ1 भयविह्वलाः; B1 °मोहिताः ( for °विह्वलाः ). —(l. 11) Ñ2 D5.7 शरणार्थे ( D5 °र्थी ) ( for °र्थं ). G( ed. ) व्यद्रवंत दिशस्त्रस्ता व्याघ्रात्क्षुद्रमृगा इव. —After l. 11, M2 ins. :

504(A)* तमभ्यधावन्त निरस्तमाहवे
त्वरान्वितं राक्षसतुल्यगं बलम् ।
जघान रामः स्थिरसत्यपौरुषे
धनुश्च्युतैर्दुष्प्रसहैः शिलीमुखैः ।

—V2 partially illeg. for l. 12. —(l. 12) B4 तदभूत्वाद्भुतं ( for तदभूदद्भुतं ). Ñ1 तदद्भुतं * शायुद्धं ( for the prior half ). V1 तुंबलं ( for तुमुलं ). —G( ed. ) om. l. 14 and 15. —(l. 14) Ñ1 संरब्धो ( for °ब्धान् ). —(l. 15) V2 illeg. for बाणौघैः सोऽनयद्. B3 नाराचैर् ( for बाणौघैः ). Ñ1 B3 अनयद्यमसादनं; M2 अनयत्प्रेतसंसदं ( for the post. half ). —After l. 15, Ñ1 ins. :

G. 3. 33. 31
B. 3. 27. 13
L. 3. 32. 17

एवमुक्त्वा तु संरब्धः शरानाशीविषोपमान् ।
त्रिशिरोवक्षसि क्रुद्धो निजघान चतुर्दश ॥ १३
चतुर्भिस्तुरगानस्य शरैः संनतपर्वभिः ।
न्यपातयत तेजस्वी चतुरस्तस्य वाजिनः ॥ १४
अष्टभिः सायकैः सूतं रथोपस्थे न्यपातयत् ।
रामश्चिच्छेद बाणेन ध्वजं चास्य समुच्छ्रितम् ॥ १५
ततो हतरथात्तस्मादुत्पतन्तं निशाचरम् ।
बिभेद रामस्तं बाणैर्हृदये सोऽभवज्जडः ॥ १६

---

504(B)* तगत्य**गहाहवे तदा
रिवनाधिकराक्षसमुल्व*बलम् ।
जघान रामः स्थिरधर्मपौरुषो
धनु******पौरुषः ।

Colophon.;

while V2 ( illeg. for l. 1 and 2 ) B4 ins. :

504(C)* ततोऽभ्यधावत्तुनिरस्तशस्त्रं
दुरासदं राक्षसमण्डलं रणे ।
जघान रामः स्थिरपौरुषो महान्
शितैः शरैर्दुष्प्रतिवीर्यपौरुषः ।

Colophon.

[ *Sarga name* : Ñ1 त्रिशिरःसैन्यवधः; V2 खरयुद्धं; B4 खरसैन्य-युद्धं. —*Sarga no.* : V2 33. ]

—(l. 16) V2 B4 transp. सर्वस्य and तस्य. Ñ1 om. (hapl. ?) सैन्यस्य. B4 खरशेषो. Ñ1 निशाचरः (for महाबलः). —(l. 17) G(ed.) खरश्च (for राक्षसस्). —(l. 18) B1.3 पिशिताशनां. —(l. 19) Ñ2 परमः क्रुद्धश्; B3 समभिक्रुद्धश् (for परमक्रु°). Ñ1 V B1.3.4 M2 सारथिं सम( G[ ed. ]प्रत्य )चोदयत्. —(l. 20) M2 भर्तृपिण्डस्य. Ñ1 निर्देशं (for निर्वेशं). —Ñ1 om. l. 21–24. —(l. 21) Ñ2 D5.7 चास्य (for अस्य). D5.7 तु (for सु-). Ñ2 खरस्य तु महात्मनः (for the post. half). —(l. 22) V1 M2 वीर (for सूत). —(l. 23) Ñ2 B3 D5.7 अद्य (for यथा). M2 transp. यथा and रामं. V2 मा (for मां). —(l. 24) M2 हयान्हृष्टो महाबलः (for the post. half). —(l. 25) Ñ1 प्रजविता तेन (for °ताश्वेन). ]

—After 504*, Ñ2 V( V1 om. 10 ) B1.3.4 D5.7 read 9–10; while M2 repeats (var.) 9 and 10.

—V1 om. 12$^{e}$–13$^{b}$. —$^{ef}$) T2 प्रत्यगृह्णीष्व (sic) (for प्रति°). Ñ1 प्रतिगृहाण विशिखान् (for $^{e}$). D6 चापि (for चाप-). Dt1 D4.6 T2 M1 -गुणाच्युतान्. Ś1 D2.3 सायकान्प्रहरामि ते; Ñ1 ममापि त्वं गुणाच्युतान्; D1 सायकात्समरे ततः (for $^{f}$). Ñ2 V2 B1.3.4 शरान्प्रतिगृहाणेमान्ममापि त्वं धनुश्च्युतान्; D5.7 मया प्रतिगृहीतास्ते शराश्चापगुणाच्युताः.

13 V1 om. 13$^{ab}$ (cf. v.l. 12). —$^{a}$) Ś1 Dt1 Dm1 D6.8 उक्तस् (for °क्त्वा). Ś1 Dm1 D2.3.8 सु( D8 तु )संक्रुद्धः; G3 [ अ ]तिसंक्रुद्धः (for तु संरब्धः). Ñ V2 B1.3.4 D5.7 M2 इत्युक्त्वा राघवः क्रुद्धः. —Dg1 reads 13$^{cd}$ in marg. —$^{c}$) Ś1 D3 त्रिशीर्षोरसि संक्रुद्धः; Ñ V B1.3.4 D5.7 नि( B4 वि )चखान त्रिशिरसो; D1 राक्षसस्योरसि क्रुद्धो; D2 त्रिशीर्षोपरि संक्रुद्धो. —$^{d}$) Ś1 D1.3.4 T1.2 G1.3 M1 निचखान; Ñ1 लीलयाथ; Ñ2 V रक्षस्यथ; B1.3( after corr. *inf. lin.* as in Ñ2 ).4 D5.7 वक्षस्यथ (for निजघान).

14 $^{a}$) B1.4 चतुरश् (for चतुर्भिस्). Ś1 Ñ2 V B1.4 D2.5.7 च चतुर्भिश्च; Ñ1 चतुरश्वास्य; B3 चतुरस्येव; M2 चतुरोभ्याशु (for तुरगानस्य). D3 स चतुर्भिश्चतुर्भिश्च. —$^{b}$) Ś1 D2.3 तुरगांस्तस्य मार्गणैः; Ñ1 M2 तुरगानथ मार्गणैः; Ñ2 V B1.3.4 D5.7 तुरगानस्य मार्गणैः( B4 सायकैः ). —$^{c}$) B1.3 न्यपातयत स (hypm.); D3 G3 निपात° (for न्यपातयत). —$^{d}$) Ś1 D2.3 रथ- (for तस्य). Ś1 D2 -योजितान् (for वाजिनः). Ñ V B1.3.4 D5.7 M2 रथं चि( D5 वि )च्छेद सप्तभिः ( Ñ1 illeg. for सप्त ). —For 14, D1 subst. :

505* चतुर्भिर्मार्गणैरेव निपात्य चतुरो हयान् ।

15 $^{a}$) B4 Dg1 Dt1 D4–7 T1.2 अष्टाभिः. Ñ1 V B1.3.4 M2 चान्यैः; Ñ2 D5.7 तीक्ष्णैः (for सूतं). Ś1 G2 M1 सायकैश्चाष्टभिः सूतं; D2 सायकैः साष्टभिः सूतं; D3 सायकैः पंचभिः सूतं. —$^{b}$) V B1.3.4 सूतमस्य; Dm1 D4.8 T1 Cg °स्थान् (for रथोपस्थे). Dg1 निपातयत् (for न्य°). Ś1 D1.2 रथोपस्थाद( D1 °व )पातयत्; Ñ D5.7 सूतमन्यैरपातयत्; M2 सूतमप्यस्य पातयत्. —$^{c}$) Ñ1 M2 चिच्छेद चैकबाणेन; Ñ2 V B1.3.4 D5.7 बाणेनै( V1 रामेणै [sic] )केन चिच्छेद. —$^{d}$) Ñ1 तस्य; V B1.3.4 D5.7 M2 अस्य (for चास्य). D1 समुत्थितं (for समुच्छ्रितम्). Ś1 D2.3 ध्वजं चामितविक्रमः. —After 15, Ñ V B1.3.4 D5.7 M2 ins. :

506* तद्दृष्ट्वा कर्म रामस्य मनसा प्रतिपूजयन् ।
असिमुद्यम्य वेगेन सहसा तमुपाद्रवत् ।

[ (l. 1) D7 तं (for तद्). Ñ1 M2 transp. दृष्ट्वा and कर्म. Ñ1 प्रत्यपूजयत्. —(l. 2) Ñ1 असि दुद्राव (sic) (for असिमुद्यम्य). V B1.3 M2 स( V2 B3 त )मभिद्रवत् (for तमुपा°). Ñ1 रामं प्रति महाहवे (for the post. half). ]

16 $^{a}$) Ś1 हतो हत-; Ñ V B1.3.4 D5.7 M2 अवप्लुत्य; G(ed.) अवप्लुतं (for ततो हत-). G2 -हयात् (for -रथात्). —$^{b}$) Ś1 D2.3 आपतंतं; D1 अपावृत्तं (for उत्पतन्तं). Ñ1 V B1.3.4 वेगेन महताथ( Ñ1 °ता च ) सः; Ñ2 D5.7 M2 वेगेन स महारथः. —After 16$^{ab}$, M2 ins. :

507* तान्दृष्ट्वा त्वरितं यान्तं राक्षसं पर्वतोपमम् ।

—$^{c}$) Dt1 Dm1 D3.4.6.8 चिच्छेद; M2 मुमोच (for बिभेद). Ś1 तरसा रामो; Ñ V B1.3.4 D1.5.7 M2 रामस्तद्रक्षो; D2.3 रामस्तरसा; T2 बाणसंबाणैर् (for रामस्तं बाणैर्). ꙮ Cvp : बिभेद रामस्तं बाणैरिति सम्यक् (as in text). ꙮ —$^{d}$) Ś1 Ñ V B1.3.4 D1–3.5.7 M2 दशभिः शरैः (for सोऽभवज्जडः).

सायकैश्चाप्रमेयात्मा सामर्षस्तस्य रक्षसः ।
शिरांस्यपातयत्त्रीणि वेगवद्भिस्त्रिभिः शितैः ॥ १७
स भूमौ शोणितोद्गारी रामबाणाभिपीडितः ।
न्यपतत्पतितैः पूर्वं स्वशिरोभिर्निशाचरः ॥ १८
हतशेषास्ततो भग्ना राक्षसाः खरसंश्रयाः ।
द्रवन्ति स्म न तिष्ठन्ति व्याघ्रत्रस्ता मृगा इव ॥ १९
तान्खरो द्रवतो दृष्ट्वा निवर्त्य रुषितः स्वयम् ।
राममेवाभिदुद्राव राहुश्चन्द्रमसं यथा ॥ २० G. 3. 33. 41 B. 3. 27. 20 L. 3. 32. 25

इति श्रीरामायणे अरण्यकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

17 [a]) D1 सायकैरप्रमेयात्मा.—[b]) Dt1 Dm1 D6.8 सामर्षात्; D1 रामस्तस्य् (for सामर्षस्). D1.6 G3 M2 (after corr. as in text) राक्षसः (for रक्षसः).—[c]) D1 कायात्; D4 T1 G1 रामो (for त्रीणि).—[d]) D1 त्रीणि रामस् (for वेगवद्भिस्). M3 शितैश् (for त्रिभिः). Dg1 Dt1 Dm1 D1.6.8 T1.2 G M3 शरैः; T3 तथा; M1 भृशं; Cv तदा (for शितैः). M2 रामो राजीवलोचनः.—For 17, Ś1 Ñ V B1.3.4 D2.3.5.7 subst.; while M2 ins. l. 2 only after 17:

508* शिरांसि चास्य संक्रुद्धो रामो राजीवलोचनः।
त्रिभिस्त्रिभिः शरैस्तीक्ष्णैर्न्यकृन्तत्प्रहसन्निव ।

[(l. 1) Ś1 D2.3 [ए]व; Ñ1 [अ]पि (for [अ]स्य).—(l. 2) Ś1 D2.3 त्रीणि त्रिभिः सुसंक्रुद्धो (for the prior half). V1 अकृंतत् (for न्य°).]

18 [a]) Dt1 D6 सधूम-; D4 भूमौ च (for स भूमौ). Dg1 शोणितोद्गारैः; D3.4 T1.2 रुधिरोद्गारी.—[b]) Ś1 D2 रामबाणेन (for °बाणाभि-). V2 -जीवितः; D6 -ताडितः (for -पीडितः). Ñ V1 B1.3.4 D1.3.5.7 रामबाणात्त (Ñ V1 °त्तु; B1.3 °तं)-जीवितः.—[c]) B4 D1 अपतत् (for न्य°). B1.3.4 D2.3 पातितैः (for प°).—[d]) Dt1 D1.6 समरस्थो (for स्वशिरोभिर्). Ś1 Ñ V B1.3.4 D2.3.5.7 M2 शृंगैरिव महागिरिः. ❀ Cvp : स्वशिरोभिर्निशाचर इति पाठः । त्रिभिः शरैरिति वा पाठः. ❀

19 D1 om. 19.—[a]) Ś1 D2 तथा (for ततो). V2 B1.2.4 सर्वे; G2 भिन्ना (for भग्ना).—[c]) D3 द्रवंतो (for द्रवन्ति). Ś1 D2.3 नैव (for स्म न). Ñ1 अन्वद्रवन्दिशस्त्रस्ता; B1.3.4 व्यद्रवंत दिशस्त्रस्ता.—[d]) Ś1 व्याघ्रध्वस्ता; Ñ1 B1.4 व्याघ्रात्क्षुद्र-; B3 व्याधक्षिप्ता; D6 व्याधत्रस्ता (for व्याघ्रत्रस्ता).—For 19, Ñ2 V1 D5.7 subst.; while V2 B1.3.4 ins. after 19:

509* ततो हतशिरस्तस्य कबन्धं रणमूर्धनि ।
पतितं ह्यचलेन्द्राभं प्राकम्पयत मेदिनीम् ।
तं खरः पतितं दृष्ट्वा वीरं त्रिशिरसं रणे ।
रोषसंतप्तहृदयो युद्धशौटीरतां गतः ।
हतं त्रिशिरसं दृष्ट्वा दूषणं च निपातितम् । [5]
चतुर्दशसहस्राणि राक्षसानां हतानि च ।

[(l. 1) V2 B4 कृत्त- (for हत-).—(l. 2) V1 ह्यचलेंद्रस्य (for °न्द्राभं). V1 प्रकंपयत; V2 B1.3.4 अकंपयत (for प्रा°).—(l. 3) D5 वीरस् (for °रं).—(l. 4) V B3.4 ययौ (for गतः).—(l. 6) B3 रक्षसां निहतानि च (for the post. half).]

—After 19, Ś1 Ñ1 D2.3 M2 ins.:

510* अनुयात्रानिमित्तं ये जनस्थानादुपागताः।
श्रुत्वा विपन्नं तत्सैन्यमन्तरा लघुविक्रमम् ।

[(l. 1) D3 युद्धाय ते (for अनुयात्रा-). Ñ1 M2 -निमित्ता (for °त्तं). D2 तज् (for ये). Ñ1 जनस्थानम् (for °नाद्).—(l. 2) D2.3 लघुविक्रमः (for °मम्). Ñ1 राक्षसा विद्रुता दिशः (for the post. half). M2 दृष्ट्वाभिपन्नांस्ते सैन्यात् सर्वा विप्रद्रुता दिशः.]

20 [a]) D1 तं; D5.7 तत् (for तान्). V1 पुनः; B4 खरान् (for खरो). Ś1 Ñ1 D2.3 द्रावितान्; Ñ2 V B1.3.4 D5.7 समरे; D1 निहतं; M2 रुषितो (for द्रवतो).—[b]) Ñ1 निवर्तुर्; D1 निर्वर्त्य (for निवर्त्य). Ś1 D2 च ततः; Ñ1 M2 द्रवतः; T2 कुपितः (for रुषितः). Dt1 D6 त्वरन्; D1 स्वयं (for स्वयम्). Ñ2 D5.7 रामेण निहतं बलं; V1 B1 रामबाणहतान्बली; B3.4 रामेण निहतान्बली.—[c]) Ñ2 V B1.3.4 D5.7 राघवं सोभिदुद्राव.—[d]) D5 तथा (for यथा).—After 20, Ñ1 M2 ins.:

511* निशाम्य तं रामशरैर्निपातितं
निशाचरं भीमपराक्रमः खरः।
रथेन रामं समरे ह्यभिद्रव-
न्महागजं सिंह इवाभिपातुरः।

[(l. 2) Ñ1 M2 त्रिशीर्षाणं (for निशाचरं).—(l. 3) M2 समाद्रवन् (for ह्यभि°).—(l. 4) M2 महागजः सिंहमिवाभिपातुरः.]

—After 20, Ñ2 V B1.3.4 D5.7 read 3.27.1 (preceded by 516*); while D1-3 ins.:

512* स तानि रक्षांसि समीक्ष्य सर्वा-
स्त्रिशीर्षमाजावनुजं च दूषणम् ।
रथेन दीप्तानलतुल्यवर्चसा
खरः प्रसह्याभिससार राघवम् ।

[(l. 1) D2 हतानि (for स तानि). D2 सर्वतस् (for सर्वास्).—(l. 4) D2 खरं (for खरः). D2 प्रगृह्याभिससार.]

न तत्समाचरेद्धीरो यत्परोऽस्य विगर्हयेत् ।
यथात्मनस्तथान्येषां दारा रक्ष्या विमर्शनात् ॥ ७
अर्थं वा यदि वा कामं शिष्टाः शास्त्रेष्वनागतम् ।
व्यवस्यन्त्यनु राजानं धर्मं पौलस्त्यनन्दन ॥ ८
राजा धर्मश्च कामश्च द्रव्याणां चोत्तमो निधिः ।
धर्मः शुभं वा पापं वा राजमूलं प्रवर्तते ॥ ९ G. 3. 56.*19 B. 3. 50.*10 L. 3. 55.*11

—c) D3 प्रयत्नेन (for विशेषेण). —d) Ś1 D1 पर-; G3 राम- (for राज-). G3 damaged from दारा up to नीचां in e. Ś1 D1.2 महायशः; Ñ1 D3 महात्मना; Ñ2 V1 B1.3.4 D5.7 मही( D5 °हा )भुजां( Ñ2 B1.3 °जा ); G(ed.) महीभृतां. —After $6^{cd}$, D1 ( MS. states that this is a Kṣepaka ) ins. :

943* कुले वा शौर्ये वा भुज *** समयेनसि वा
न भूतस्त्वत्तुल्यो क्षितितलतले वीर सुभगः ।
अहो धिग्मोहस्ते विरम विरमैतस्य वनितां
न वीराणां पन्था दशवदन येनासि चलितः ।

—e) G1 गतिं; M2 रतिं; Cg as in text ( for मतिं ). V1 B1.3.4 नीच ( for नीचां ). —f) Ś1 D2.3 -[ अ ]भिमर्षिणीं; Ñ2 V1 B1.3.4 D5.7 -[ अ ]भिमर्षणात्. —After 6, Ś1 D2 ins. :

944* मया साम्ना प्रोच्यमानो यदि सीतां न त्यक्ष्यसि ।

—After 6, Ś1 Ñ V1 B4 D1–3.5.7 read $27^{ef}$ ( Ś1 D2 preceded by 944* ).

7 a) Ñ2 V1 B1.3.4 D5.7 समाचरेन्न तत् ( by transp. ); D3 न तत्समाश्रयेद् ( for न तत्समाचरेद् ). Ś1 V1 Dg1 Dm1 D1–3.6 T2.3 G2 M वीरो( Ś1 D2 °र ); Cg as in text ( for धीरो ). —b) Ś1 D1–3 तु ( for ऽस्य ). Ñ2 V1 B1.3.4 D5.7 यत्परेषां( V1 परेषां यद् [ by transp. ] ) विगर्हितं; D4.8 G1.3 यत्परेण विगर्हितं; M3 यत्परैस्तु विगर्हितं. —c) D3 [ आ ]त्मनि ( for °नस् ). —d) Ñ2 V1 B1.3.4 D3–5.7 T3 G1.2 रक्ष्या दारा ( by transp. ). Ś1 D1.2 M3 विशेषतः; Ñ1 हिं नित्यदा; Ñ2 V1 B1.3 D3.5.7 विमृश्यतां; B4 Dg1 Cg विपश्चिता; D4 T1.2 G1.2 विमर्शता; M2 विदर्शता; Cm.k.t as in text ( for विमर्शनात् ). —After 7, Ś1 D1–3 ins. :

945* आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् ।;

while Dg1 ( m. ) ins. :

946* धीरो हि धीमान्तत्कर्म मनसा न समाचरेत् ।

—After 7, Ś1 Ñ V1 B1.3.4 D1–3( Ś1 D1–3 after 945* ) .5.7 T2 G2.3( missing partially for $11^{ab}$ ) M2.3 read 11.

8 a) Ñ1 D5 अथ; T3 अर्थो; Ct as in text ( for अर्थं ). T3 कामः ( for °मं ). Dg1 Dm1 D8 T1.2 Cmp धर्ममर्थं च कामं च. —G3 damaged from शिष्टाः in b up to व्यव in c. —b) Ś1 B1.3.4 D2.3.5.7 नष्टं; Ñ2 दिष्टं; D1 दृष्टं; T3 निष्टः; G( ed. ) नय- ( for शिष्टाः ). B4 Dg1 वा गतं; D1.8 [ अ ]नामतं; T3 [ अ ]नामयः; Cm.g.t as in text ( for [ अ ]नागतम् ). V1 नष्टं शास्त्रेषु गतः ( subm. ). —c) Dg1 व्यवस्यंति न; T3 निवसत्यनु ( for व्यवस्यन्त्यनु ). Ś1 व्यवस्यंति वरात्मानो; Ñ1 D2.3 व्यवस्यंति न( D2 °संति च ) राजानो; Ñ2 D5.7 न व्यवस्येन्नरः पाप; V1 B1.3.4 व्यवस्येन्न नरः पापं( B1 °प ); Dm1 D8 T2 G3 Cmp.g.t न व्य( G3 damaged for न व्य )वस्यंति राजानो; D1 G1 व्यवसंत्यनु ( G1 °ति न ) राजानो. —d) Ñ2 V1 B1.3.4 D5.7 धर्मा( Ñ2 B1 °र्म्या )न् ; Dm1 D1.3.8 G3 M1.3 धर्म्यं; T3 Cmp धर्मः; Cg.t as in text ( for धर्मं ). Ś1 D2 धर्मतः ( for -नन्दन ). T1.2 पौलस्त्यकुलनंदन. ❀ Cm : धर्ममर्थं च कामं चेति । शास्त्रेष्वनागतमनवगतं रहस्यरूपतया शास्त्रपर्यालोचनेऽपि असूक्ष्मदृष्टीनां दुर्बोधनमित्यर्थः । धर्ममर्थं च कामं च शिष्टा राज्ञोऽन्ये जनाः राजानमनु राजानमनुसृत्य व्यवस्यन्ति कुर्वन्ति । राज्ञः मोक्षधर्मादिज्ञानसंपत्त्या तादृशं राजानमनुसृत्य भूपोपदिष्टधर्मादिकं शास्त्रे सम्यगस्फुटमपि प्रजा आचरन्तीति भावः । तस्माद्धर्मोपदेशपरस्य राज्ञस्त्वधर्मप्रवृत्तिरनुचितेति तात्पर्यम् । उपसंहरति धर्म इति । हे पौलस्त्यनन्दन तस्माद्धर्मः समाश्रयणीय इत्यपेक्षितपदाध्याहारेण योजना । "धर्ममर्थं च कामं च शिष्टाः शास्त्रेष्वनागतम् । व्यवस्यन्त्यनु राजानं धर्मः पौलस्त्यनन्दन ॥" इति पाठः । "धर्ममर्थं च कामं च शिष्टाः शास्त्रेष्वनागतम् । न व्यवस्यन्ति राजानो धर्मः पौलस्त्यनन्दन ।" इति पाठे त्वयमर्थः—शिष्टाः सद्वृत्तयो राजानः शास्त्रेष्वनागतमप्रतिपादितमित्यर्थः । न व्यवस्यन्ति नेच्छन्तीत्यर्थः । तस्माद्धर्मः समाश्रयणीय इति योजना ।; Ct : 'न व्यवस्यन्ति राजानः' इति पाठे शास्त्रेष्वनागतं तत्राप्रतिपादितं धर्मं राजानो न व्यवस्यन्ति नेच्छन्तीत्यर्थः. ❀

9 a) G1 लोकश् ( for कामश् ). Ś1 Ñ2 V1 B1.3.4 Dg1 D1–3.5.7 T3 M2 Cm राजा( Ñ2 °ज ) धर्मस्य कामस्य. ❀ Cm : "राजा धर्मश्च कामश्च" इति पाठे अयमर्थः—राजैव द्रव्याणामर्थरूपपुरुषार्थस्य निधिः स्थानं यतः अतः राजा धर्मश्च कामश्च भवति । कुतः धर्म इति । धर्मादिकं हि राजमूलं प्रवर्तते अतो राजा धर्मश्च कामश्च भवतीति योजना ।; Ct : "तथा धर्मश्च कामश्च" इति पाठे प्रजानामिति राजेति च शेषः । द्रव्याणामिति प्राग्वदेव । यतो धनादिकं राजभूतमतो राजा प्रजानां धर्मादिरूप इत्यर्थः. ❀ —b) D2 धर्माणां ( for द्रव्याणां ). Ñ1 Dm1 D5 G3 उत्तमो ( for चो° ). Ñ1 V1 M1 विधिः ( for निधिः ). —c) Ś1 D2 G2 M1 धनं; Ñ1 लोके; D6 धर्मे; G3 damaged; Cm as in text ( for धर्मः ) Dm1 D8 कामो; G3 कामं ( for पापं ). B1 धर्मं शुभं वाप्यशुभं. —G3 missing from लं in $9^{d}$ up to कथं in $10^{b}$ on a damaged fol. —d) Ñ2 V1 B1.3.4 D4.5.7 T2.3 G2 M -मूलात् ( for -मूलं ).

G. 3. 56. 20
B. 3. 50. 11
L. 3. 55. 12

पापस्वभावश्चपलः कथं त्वं रक्षसां वर ।
ऐश्वर्यमभिसंप्राप्तो विमानमिव दुष्कृती ॥ १०
कामस्वभावो यो यस्य न स शक्यः प्रमार्जितुम् ।
न हि दुष्टात्मनामार्य मा वसत्यालये चिरम् ॥ ११
विषये वा पुरे वा ते यदा रामो महाबलः ।
नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ॥ १२
यदि शूर्पणखाहेतोर्जनस्थानगतः खरः ।
अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ॥ १३
अत्र ब्रूहि यथासत्यं को रामस्य व्यतिक्रमः ।
यस्य त्वं लोकनाथस्य हृत्वा भार्यां गमिष्यसि ॥ १४
क्षिप्रं विसृज वैदेहीं मा त्वा घोरेण चक्षुषा ।
दहेद्दहनभूतेन वृत्रमिन्द्राशनिर्यथा ॥ १५
सर्पमाशीविषं बद्ध्वा वस्त्रान्ते नावबुध्यसे ।
ग्रीवायां प्रतिमुक्तं च कालपाशं न पश्यसि ॥ १६
स भारः सौम्य भर्तव्यो यो नरं नावसादयेत् ।
तदन्नमुपभोक्तव्यं जीर्यते यदनामयम् ॥ १७

---

10 G3 missing up to कथं in 10[b] (cf. v.l. 9). —[a]) T2 रामश्च भावश्च (sic) (for पापस्वभा°). —[b]) V1 om. त्वं (subm.). Ś1 V1 B1.3.4 राक्षसाधम (V1 °मः); Ñ D5.7 राक्षसाधिप; Dg1 D3 G2 रक्षसां वरः. —[cd]) B1.3.4 D5.7 T2 अपि; T1 इह (for अभि-). V1 -संप्राप्ते. —G3 missing from व in 10[d] up to 11[b] on a damaged fol. V1 दुःकृती; Dg1 T3 G2 M3 Cm.g दुष्कृतिः; Cv.t as in text (for दुष्कृती). Ś1 D1–3 तस्मान्नार्हसि संप्राप्तुमिमां सीतां यशस्विनीं. ❀ Cv : कामं स्वभाव इत्यादिश्लोको विमानमिव दुष्कृती इत्यतः परं द्रष्टव्यः। पूर्वत्र तु प्रमादाल्लिखितः. ❀ —After 10, M2(*inf. lin. sec. m.*) ins. :

947* कथं दुष्टात्मनस्तेऽद्य निवसन्त्यालये जनाः ।

11 Ś1 Ñ V1 B1.3.4 D1–3(Ś1 D1–3 after 945*).5.7 T2 G2.3(missing partially for 11[ab]) M2.3 read 11 after 7. —[a]) Ś1 Ñ2 V1 B1.3.4 Dg1 D1.5.7 G1 M1 Cv.g कामं; Cm.t as in text (for काम-). Dt1 D4.6 यः(Dt1 om. subm.) सोऽसौ (for यो यस्य). —[b]) V1 om. स (subm.). Dg1 स न शक्यः(by transp.); Dt1 D6 Ck.t न शक्यस्तं(D6 °श्च) (for न स शक्यः). Dm1 D8 न शक्यं परिमार्जितुं; D3 T1.2 Cm न शक्यः परिमा(T1 °र्व)र्जितुं. —[c]) Ś1 Ñ B1.3.4 D1–3.5.7 T1 G1 M2 आर्या; Ct आर्यं; (for आर्य). T2 न हि दुष्टात्मना वीर्याद्. —[d]) Ś1 Ñ V1 B1.3.4 D1–3.5.7 M2 निवसं(Ñ1 V1 B4 D3 °स)ति; T2 आवसति (for मा वसति). M1 [आ]लयं भृशं.

12 G3 missing from विषये up to य in [b] on a damaged fol. —[a]) D3 सुपुरे (hypm.) (for पुरे). Ś1 Ñ V1 B1.3.4 D1–3.5.7 [अ]पि (for ते). —[b]) Ś1 D1.2 तव; V1 यथा; Dg1 D3 T2.3 G1.2 M Cr यदि; Ck.t as in text (for यदा). Ñ V1 B1.3.4 D5.7 तवा(B1.3 °दा)नघः (for महाबलः). —[d]) D5.7 त्वम् (for तस्य). B1 [अ]पराध्यसे.

13 G3 missing from तोर् in [a] up to ष्टक in [d] on a damaged fol. —[b]) D3 जनस्थानं. —[c]) Ś1 अनिवृत्तो; D3 सदुर्वृत्तो; D7 अतिवृत्ति- (for अतिवृत्तो). Ñ2 V1 D5 पाप; B1.3.4 D7 पापः (for पूर्वं). —[d]) M2 [अ]भ्रष्ट- (for [अ]क्लिष्ट-). Ñ2 V1 B1.3.4 D5.7 को दोषो राघवस्य तु. —After 13, Ñ2 V1 B1.3.4 D5.7 ins. :

948* चतुर्दश सहस्राणि राक्षसानां यदा ययुः ।
रामलक्ष्मणघाताय राघवेण च ते हताः ।

[(l. 2) B1 -नाशाय (for -घाताय). Ñ2 D5.7 तु (for च).]

14 [a]) B1.3 अनु-; Dm1 D8 G3 तत्र (for अत्र). B4 -सत्त्वं; Dt1 D6 T1.2 -तत्त्वं (for -सत्यं). —G3 damaged from रा in [b] up to हृ in [d]. —[b]) Ś1 नामास्य (for रामस्य). —[d]) T1.2 transp. हृत्वा and भार्यां. Ś1 Ñ1 D1–3 भार्यां हर्तुमिहेच्छसि; Ñ2 V1 B1.3.4 D5.7 भार्यां हर्तुमिहोद्यतः.

15 [b]) Ś1 Ñ2 V1 B1.3.4 D2.3.5.7.8 Cm मा(B4 या; D3 सा) त्वां; Dg1 Dm1(after corr. *sec. m.* मा त्वां) G1 मा त्वं; D1 महा-; D6 T3 मत्वा; Cr.k.t as in text (for मा त्वा). G3 damaged for ण चक्षुषा. —[c]) Dg1 दहे दहन- (sic); G1 दहेर्दाहन- (for दहेद्दहन-). Dt1 -भूतेनं; Dm1 D8 T2 M2.3 -कल्पेन; Cm as in text (for -भूतेन). —[d]) Ś1 Ñ1 D1–3 वृक्षम् (for वृत्रम्).

16 [a]) Ñ1 कथम्; T2 स त्वम् (for सर्पम्). Ś1 D2 बद्धं (for बद्ध्वा). —Ñ1 om. 16[cd]. G3 partially damaged for 16[cd]. —[c]) Ś1 D2 -संयुक्तं; D1.3 -संसक्तं; T1.2 -सक्तं च (for -मुक्तं च). Ñ2 B1.3.4 D5.7 ग्रीवायां च समास(B3.4 °यु)क्तं; V1 ग्रीवायां च यथा बद्धं. —[d]) V1 B1.3.4 D5.7 बुद्ध्यसे (for पश्यसि).

17 [a]) Ñ2 V1 B1.3.4 D5.7 स(B1.4 स्व) भारो(B1.3.4 °वो) मूढ(V1 यदि) हर्तव्यो. —G3 partially damaged for 17[bcd]. —[b]) Ñ1 नावपीडयेत् (for °सादयेत्). —For 17[ab], Ś1 D1–3 subst. :

949* भारः सम्यक्स वोढव्यो यो भारो न विषादयेत् ।

[Ś1 सस्यस्य; D1 सम्यग्यो; D2 स सम्यक् (by transp.) (for सम्यक्स). Ś1 D2 हर्तव्यो (for वोढव्यो). Ś1 भारो यो (by transp.).]

—After 17[ab], Ñ2 V1 B1.3.4 D5.7 ins. :

950* न रत्नं प्रतिवोढव्यं यद्रत्नं क्षयमावहेत् ।

यत्कृत्वा न भवेद्धर्मो न कीर्तिर्न यशो भुवि ।
शरीरस्य भवेत्खेदः कस्तत्कर्म समाचरेत् ॥ १८
षष्टिवर्षसहस्राणि मम जातस्य रावण ।
पितृपैतामहं राज्यं यथावदनुतिष्ठतः ॥ १९
वृद्धोऽहं त्वं युवा धन्वी सरथः कवची शरी ।
तथाप्यादाय वैदेहीं कुशली न गमिष्यसि ॥ २०
न शक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः ।
हेतुभिर्न्यायसंयुक्तैर्ध्रुवां वेदश्रुतीमिव ॥ २१
युद्धयस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण ।
शयिष्यसे हतो भूमौ यथा पूर्वं खरस्तथा ॥ २२
असकृत्संयुगे येन निहता दैत्यदानवाः ।
नचिराच्चीरवासास्त्वां रामो युधि वधिष्यति ॥ २३
किं नु शक्यं मया कर्तुं गतौ दूरं नृपात्मजौ ।
क्षिप्रं त्वं नश्यसे नीच तयोर्भीतो न संशयः ॥ २४ G. 3. 56. 0 B. 3. 50. 25 L. 3. 55. 25

[ Ñ2 D5.7 न च तद्; B4 नद्रत्नं ( for न रत्नं ). B1.3 यद्दर्श ( for यद्रत्नं ). B4 जयम् ( for क्षयम् ). B3 आचरेत् ( for आवहेत् ).]

—$^{c}$) Dt1 Dm1 D4.6.8 T G1 M अपि; Dg1 अभि- ( for उप- ).—$^{d}$) V1 B4 जीर्येत ( for जीर्यते ).

18 $^{a}$) Ñ1 न नूनं हि ( for यत्कृत्वा न ). B3 चरेद् ( for भवेद् ).—$^{b}$) Dt1 D6 ध्रुवं ( for भुवि ). Ñ2 V1 B1.3.4 D5.7 यत्कृत्वा न भवेद्यशः.—G3 damaged for $18^{cd}$.—$^{c}$) Ś1 D2 शरीरतो भवेद्धर्मः( L[ ed. ]°त्कर्म ); Ñ1 शरीरसादश्च भवेत् ; Ñ2 V1 B1.3.4 D1.3.5.7 शरीरदोष( D1.3 °रोध )श्च भवेन्.—$^{d}$) V1 B1.3.4 D5.7 न ( for कस् ). D3 प्राज्ञः ( for कर्म ). Ś1 D1.2 कथं प्राज्ञः स( Ś1 °ज्ञस्त )मा( L[ ed. ]°ज्ञस्तदा )-चरेत्.

19 $^{a}$) Ś1 Ñ2 V1 D5.7 षष्टिं ( sic ); Dm1 D2–4.6 T1.2 G1 M2.3 Cm षष्टिर् ; Ct as in text ( for षष्टि- ).—$^{b}$) Dt1 Dm1 D6.8 जातस्य मम ( by transp. ); M3 तव जातस्य ( for मम जातस्य ).—Ñ1 om. $19^{cd}$.—$^{c}$) Ś1 पितृपैतामहे राज्ये.—G3 missing from यथा in $^{d}$ up to युवा in $20^{a}$ on a damaged fol.—$^{d}$) Ñ2 V1 B1.4 D5.7 -शासतः; B3 -शास्याहं ( sic ); Cg as in text ( for -तिष्ठतः ). Dg1 T3 दंडकारण्यमेव नः.—After 19, Ś1 D1–3 ins. :

951* न श्रुतं न च मे दृष्टं परदाराभिमर्शनम् ।

[ D1 मया ( for च मे ).]

20 G3 missing up to युवा in $^{a}$ ( cf. v.l. 19 ).—$^{a}$) V1 B1 वीरो; B3.4 D5.7 वीर ( for धन्वी ).—$^{b}$) Ś1 Ñ V1 B1.3.4 D1–3.5.7 रथस्थः; T1 G2 सशरः ( for सरथः ). T1 G2 रथी ( for शरी ).—$^{c}$) Ñ2 Dt1 D4.6 T3 G1.2 M Ct न चापि; V1 B1.3.4 D5.7 न चाद्य( B3 °भि- ); Dg1 न च हि ( for तथापि ). Ś1 D1–3 अ( D3 ना )संत्यज्येह; Ñ1 नैवादाय च. Dt1 D6 Ct कुशली; M1 मे देवीं ( for वैदेहीं ).—G3 missing from मिष्यसि in $^{d}$ up to वै in $21^{b}$ on a damaged fol.—$^{d}$) B1 कुशलं; Dt1 D6 Ct वैदेहीं; M1 कुशलो ( for कुशली ). Ś1 Ñ V1 B1.3.4 D1–3.5.7 त्वं; Dg1 Dt1 D4.6 T3 G1.2 M Ct मे; Dm1 D8( after corr. as in text ) G3 मा ( for न ). Ś1 D2 न यास्यसि ( for गमिष्यसि ).

21 G3 missing up to वै in $^{b}$ ( cf. v.l. 20 ).—$^{a}$) Dg1 G3 Cr शक्यस् ; Cg as in text ( for शक्तस् ). Ñ1 न शक्या ते बलाद्धर्तुं.—$^{b}$) Ñ1 वैदेही; D1–3 मैथिलीं ( for वैदेहीं ). Ñ1 lacuna for पश्यतः.—$^{c}$) B1.3 नय- ( for न्याय- ). Ñ2 B1.3.4 D5.7 -संबद्धैः; V1 D4 M2 Cr.g.k -संसिद्धैः; Cm.t as in text ( for -संयुक्तैर् ). Ñ1 हेतुभिर्वान्यसंसिद्धैर्.—$^{d}$) Ś1 मूढो; Ñ1 ध्रुवं; Ñ2 V1 B1.3.4 D1–3.5.7 शूद्रो; D6 ध्रुवो ( for ध्रुवां ). G1 वेदश्रुतिं यथा. ❀ Cr : दीर्घ आर्षः ।; Cm : श्रुतीमित्यत्र दीर्घश्छान्दसः ।; Cg : वेदश्रुतीमिव वेदश्रुतिमिव । दीर्घ आर्षः ।; Ck.t वेदश्रुतिम् । छान्दसो दीर्घः. ❀ —After 21, Ñ2 V1 ins., while T2 ins. after 27 :

952* इत्युक्तस्य यथान्यायं रावणस्य जटायुषा ।
क्रुद्धस्याग्निनिभा घोरा विरेजुर्विंशतिर्दृशः ।

[ ( l. 2 ) T2 सर्वे ( for घोरा ). T2 रेजुर्विंशतिदृष्टयः ( for the post. half ).]

22 Ñ2 V1 B4 D5.7 om. ( hapl. ) $22–27^{b}$; B1.3 om. 22–27. Ñ1 reads 22 after $27^{cd}$.—$^{a}$) Ś1 Ñ1 D1–3 वीरोसि ( for शू° ).—$^{b}$) Ñ1 मुहूर्तं त्वं मया सह.—G3 damaged from मौ up to स्तथा in $^{d}$.—$^{c}$) Dg1 Dm1 D1–3.8 G3 शयिष्यसि( D2 °ते ); Cr.g.k शयिष्यसे ( as in text ).—$^{d}$) Ś1 D1–3 भ्राता; Ñ1 वासौ ( for पूर्वं ). Ś1 D3 तत्र ( for तथा ).

23 Ñ2 V1 B1.3.4 D5.7 om. 23 ( cf. v.l. 22 ). Ñ1 om. 23. D3 reads $23^{ab}$ after 4.—$^{b}$) M1 देव- ( for दैत्य- ).—$^{c}$) D4 M1.2 अचिराच्च ( for नचिराच्च ).—G3 missing from युधि in $23^{d}$ up to म in $24^{a}$ on a damaged fol.—$^{d}$) Ś1 यदि; Dg1 युद्धे ( for युधि ). M1 transp. रामो and युधि.

24 Ñ2 V1 B1.3.4 D5.7 om. 24 ( cf. v.l. 22 ). G3 missing up to म in $^{a}$ ( cf. v.l. 23 ).—$^{a}$) Ś1 D2.8 तु ( for नु ). M3 मृषा ( for मया ). T1.3 [ आ ]हर्तुं ( for कर्तुं ). D3 transp. शक्यं and कर्तुं.—$^{b}$) D1 दूरौ ( for दूरं ).—$^{c}$) Ñ1 D3 G1 च नश्यसे; D2 न पश्यसे ( for त्वं नश्यसे ). D1 क्षिप्रं नश्यसि नीचस्त्वं.—$^{d}$) Ś1 D2.4 भ्रात्रोर् ( for भीतो ).

G. 3. 56. 0 B. 3. 50. 26 L. 3. 55. 26

न हि मे जीवमानस्य नयिष्यसि शुभामिमाम् ।
सीतां कमलपत्राक्षीं रामस्य महिषीं प्रियाम् ॥ २५
अवश्यं तु मया कार्यं प्रियं तस्य महात्मनः ।
जीवितेनापि रामस्य तथा दशरथस्य च ॥ २६
तिष्ठ तिष्ठ दशग्रीव मुहूर्तं पश्य रावण ।
युद्धातिथ्यं प्रदास्यामि यथाप्राणं निशाचर ।
वृन्तादिव फलं त्वां तु पातयेयं रथोत्तमात् ॥ २७

इति श्रीरामायणे अरण्यकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

**25** Ñ2 V1 B1.3.4 D5.7 om. 25 ( cf. v.l. 22 ). Ñ1 om. 25–26. —a) Dm1 D8 G3 मे त्वं ( for हि मे ). —b) Ś1 D1–3 निशाचर; G2 शुभाननां ( for शुभामिमाम् ). —After 25, M3 ins. :

953* वृद्धो गतवयश्चाहं तरुणस्त्वं च रावण ।

**26** Ñ V1 B1.3.4 D5.7 om. 26 ( cf. v.l. 22 and 25 ). —a) G3 प्रियं तस्य ( for मया कार्यं ). —b) G3 करिष्यामि ( for प्रियं तस्य ). —c) D3 [ अ ]स्य ( for [ अ ]पि ).

**27** Ñ2 V1 B4 D5.7 om. $27^{ab}$; B1.3 om. 27 ( for all cf. v.l. 22 ). —b) Dg1 तिष्ठ ( for पश्य ). Ś1 D1–3 मे बलं; Ñ1 चैव मां ( for रावण ). —Dg1 Dt1 Dm1 D6.8 T3 G3 Cg transp. $^{cd}$ and $^{ef}$. —c) Ś1 यथातिथ्यं ( for युद्धा° ). —d) D1 -बलं ( for -प्राणं ). G1 M1 न संशयः ( for निशाचर ). Ñ1 तवाहं राक्षसाधम. —After $27^{cd}$, Ś1 D1–3 ins. :

954* सीतां संत्याजयिष्यामि स्थिरो भव सुदुर्मते ।

—After $27^{cd}$, Ñ1 reads 22; while M2 ( *inf. lin. sec. m.* ) ins. :

955* मम तीक्ष्णेन तुण्डेन ग्रीवास्ते शिरसां दश ।

—Ś1 Ñ V1 B4 D1–3.5.7 read $27^{ef}$ ( Ś1 D2 preceded by 944* ) after 6. —e) Ś1 D1.2 पक्वं; Ñ1 मा त्वां; D3 मालां ( sic ) ( for त्वां तु ). Ñ2 B4 D5.7 मा त्वां वृक्षादिव फलं; V1 स त्वां वृंतादिव फलं. —f) Ś1 D1.2 पातयामि; Ñ V1 B4 D5.7 °यिष्ये ( for °येयं ). Ñ1 D3 नभस्तलात् ( for रथोत्तमात् ). —After 27, T2 ins. 952*.

Colophon : Ñ2 V1 B1.4 D5.7 om. —*Sarga name*: Ś1 Ñ1 D3 जटायुवाक्यं; D1 गृध्रवाक्यं; D2 सीताप्रमाथे जटायुवाक्यं. —*Sarga no.* ( figures, words or both ) : Ś1 Ñ1 B3 D2 om.; Dg1 Dt1 Dm1 D6.8 T G M1.2 50; D1.4 52; D3 56; M3 51; L( ed. ) 55. —After colophon, G concludes with श्रीरामाय नमः.

# ४९

इत्युक्तस्य यथान्यायं रावणस्य जटायुषा ।
क्रुद्धस्याग्निनिभाः सर्वा रेजुर्विंशतिदृष्टयः ॥ १
संरक्तनयनः कोपात्तप्तकाञ्चनकुण्डलः ।
राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणः ॥ २
स संप्रहारस्तुमुलस्तयोस्तस्मिन्महावने ।
बभूव वातोद्धतयोर्मेघयोर्गगने यथा ॥ ३
तद्बभूवाद्भुतं युद्धं गृध्रराक्षसयोस्तदा ।
सपक्षयोर्माल्यवतोर्महापर्वतयोरिव ॥ ४
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ।
अभ्यवर्षन्महाघोरैर्गृध्रराजं महाबलः ॥ ५
स तानि शरजालानि गृध्रः पत्ररथेश्वरः ।
जटायुः प्रतिजग्राह रावणास्त्राणि संयुगे ॥ ६
तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः ।
चकार बहुधा गात्रे व्रणान्पतगसत्तमः ॥ ७
अथ क्रोधाद्दशग्रीवो जग्राह दश मार्गणान् ।
मृत्युदण्डनिभान्घोराञ्शत्रुमर्दनकाङ्क्षया ॥ ८ G. 3.56 o B. 3.51.7 L. 3.56 8

## 49

V2 illeg. for Sarga 49 (cf. v.l. 3.46.7). Ñ2 V1 B1.3.4 D5.7 continue the previous Sarga. M1 begins with श्रीरामाय नमः.

1 Ñ2 V1 Dg1 D6 T M om. 1.—[a]) D3 इत्युक्त्वास्य (for इत्युक्तस्य).—[b]) D3 गतायुषः (for जटायुषा).—[c]) S1 Ñ1 D1–3 G1.2 संख्ये; B1.3.4 D5.7 घोरा; D8 G3 सर्वे (for सर्वा).—[d]) D1 द्विर्दश- (for विंशति-). Ś1 D3 विरेजुः शरवृष्टयः; Ñ1 D2 विरेजुर्दश दृष्टयः; B1.3.4 D5.7 विरेजुर्विंशति-दृशः (B4 °शां).

2 Ś1 om. 2[ab].—[a]) Ñ V1 B1.3.4 D1–3.5.7 श्रीमांस्; Dm1 D8 G2.3 क्रोधात् (for कोपात्). Dg1 Dt1 D6 T M इत्युक्तः क्रोधताम्राक्षस्.—[b]) D1–4 -भूषणः (for -कुण्डलः).—[c]) V1 D3 विदुद्राव; B4 G2 [ऽ]पि दुद्राव (for ऽभिदुद्राव).—[d]) Ś1 Dm1 D1.2 क्षमर्षणं; G1 M1.2 अमर्षितः; Cg as in text (for अमर्षणः).

3 [a]) Dt1 सत्यं प्रहारस् (for स सं°).—[b]) Ś1 Dg1 Dt1 Dm1 D6.8 T3 G3 M3 महामृधे; Ñ2 D3.7 महाहवे; V1 B3 °बले; B1 °रणे (for महावने).—[c]) Ñ B1.3.4 Dt1 D1–3.6 G Ct वातोद्धुतयोर्; Cg as in text (for वातोद्धतयोर्). D5 बभूवातो युद्धं तयोर्.—[d]) G3 घोरयोर् (for मेघयोर्). Ñ2 V1 B1.3.4 D3.5.7 G1.2 गगने मेघयोरिव (D3 G1.2 °र्यथा).—After 3, Ñ2 V1 B1.3.4 D5.7 ins.:

956* तुण्डपक्षप्रहरणो जटायुश्चरणाङ्कुशः ।
रावणश्च महावीर्यौ युयुधाते परस्परम् ।

[ (l. 1) B1.4 -प्रहारेण (for -प्रहरणो). B3 चरणायुधः. ]

4 [a]) Ñ2 D5.7 महद्युद्धं (for [अ]द्भुतं युद्धं).—[b]) Ñ1 तयोः; Ñ2 D5.7 अथ; V1 B1.3.4 महत्; Dm1 तथा; D1–3 मृधे; G2 वने (for तदा). D6 om. (hapl.) from क्षस-योस्तदा in 4[b] up to गृध्ररा in 5[d]. M3 गृध्रराक्षसराजयोः.—[cd]) Ñ2 V1 B1.3.4 D5.7 भृशं तत्र (for माल्यवतोर्). V1 B1.3.4 मेव- (for महा-). G(ed.) शब्दस्तयोर्भृशं तत्र गगने मेघयोरिव.

5 D6 om. up to गृध्ररा in [d] (cf. v.l. 4).—[a]) Ñ2 नारीक-; V1 नाडीक- (for नालीक-).—[b]) B1 शूलाकर्ण-; B4 D5.7 तीक्ष्णैश्चापि (for तीक्ष्णाग्रैश्च).—[c]) V1 अभिवर्षन् (for अभ्य°). Ñ2 D5.7 महावेगैर्; G2 महाघोरं (for महाघोरैर्).—[d]) Ś1 Dm1 D2.3.6 महाबलं; Ñ2 V1 B1.3.4 D5.7 शरोर्मिभिः (for महाबलः). Dt1 गृध्रराजमहाबलं.

6 [a]) Ś1 शितानि; Ñ1 Dg1 G2 शतानि; Dm1 एतानि (for स तानि).—[b]) Ñ2 D7 गृध्र- (for गृध्रः).—[d]) Cr.g.k.t रावणास्त्राणि (as in text). D3 रावणस्यापि संयुगे. ⊛ Ct: 'रावणास्तानि' इति पाठस्तु सुगम एव. ⊛ —After 6, Ñ2 V1 B1.3.4 D5.7 ins.:

957* ततः स क्रोधसंरब्धो विकीर्ण इव पर्वतः ।
पृष्ठेऽस्य न्यपतद्गृध्रो नखैश्च विचकर्त सः ।

[ (l. 1) Ñ2 B1.4 क्रोधसंरक्तो; B3 °संवृद्धो (for °संरब्धो).—(l. 2) Ñ2 B1 D7 भूयो; D5 भूमौ (for गृध्रो). Ñ2 D7 विचकर्त तं (for विचकर्त सः). D5 नखैश्चापि चकर्त तं. ]

7 [a]) Ñ1 -नखाग्राभ्यां; T2.3 M1 -नखैर्घोरैश्च (for -नखाभ्यां तु). Dg1 M3 तस्य तीक्ष्णैर्नखैर्घोरैश्च.—[b]) D1 रावणस्य; M3 तुंडाभ्यां च (for चरणाभ्यां).—[c]) Ñ1 बहुशो (for बहुधा). Ñ2 D5.7 चक्रे सरुधिरं गात्रं; V1 B1.3.4 चक्रे सरुधिरान्गात्रे.—[d]) Ś1 पतगनायकः; Dm1 D8 G3 विहग-नायकः; T3 °पुंगवः (for पतगसत्तमः). Ñ2 V1 B3.4 D5.7 क्षणात्प(V1 B3.4 व्रणान्प)त्ररथेश्वरः; B1 व्रणांश्च पतगेश्वरः; D1 व्रणानि खगसत्तमः.—After 7, V1 ins. 962* (due to omission); B4 reads 959* for the first time after 7 and repeats it after 958*.

8 V1 om. 8–10. B1.3 om. 8. The sequence of St. from 8–14 including star passages in B4 is 10[cd], l. 1–2 of 965*, 9[cd], l. 3–4 of 958* (8 subst.), 959* (r.), 10[ab], l. 3–4 of 965*, 13, 14, 962*, 11, 12 and 968*.—[a]) Ñ1 क्रुद्धो (for क्रोधाद्).—[c]) Ś1

G. 3. 56. 41 B. 3. 51. 8 L. 3. 56. 9 स तैर्बाणैर्महावीर्यः पूर्णमुक्तैरजिह्मगैः ।
बिभेद निशितैस्तीक्ष्णैर्गृध्रं घोरैः शिलीमुखैः ॥ ९
स राक्षसरथे पश्यञ्जानकीं बाष्पलोचनाम् ।
अचिन्तयित्वा बाणांस्तान्राक्षसं समभिद्रवत् ॥ १०

ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् ।
चरणाभ्यां महातेजा बभञ्ज पतगेश्वरः ॥ ११
तच्चाग्निसदृशं दीप्तं रावणस्य शरावरम् ।
पक्षाभ्यां च महातेजा व्यधुनोत्पतगेश्वरः ॥ १२

D2.3 -दंडसमान् ; D1 -दंडोपमान् ( for -दण्डनिभान् ). —$^{d}$) Ś1 D1–3 शत्रुमर्माणि( D1.3 °र्मांव; D2 °र्मवि ) भेदिनः; Ñ1 शत्रुदर्पविमर्दवान् ; Dt1 Dm1 D6.8 शत्रोर्निधनकांक्षया. —For 8, Ñ2 D5.7 subst., while B4 subst. l. 3–4 only for 8 and reads after $9^{cd}$ :

958* ततः स रावणः क्रुद्धस्त्रिभिर्बाणैरजिह्मगैः ।
बिभेद समरे घोरैर्गृध्रराजानमाशुगैः ।
अथापरानजिह्माग्राञ्जग्राह रथमार्गणान् ।
मृत्युदण्डोपमान्घोराञ्शत्रुदर्पप्रणाशनान् ।

[ ( l. 3 ) B4 दशग्रीवो ( for अजिह्माग्राञ् ). B4 दश जग्राह ताञ्शरान् ( for the post. half ). —( l. 4 ) B4 कालपाशनिभाञ्शरान् ( for the post. half ). ]

9 V1 om. 9 ( cf. v.l. 8 ). For sequence in B4, cf. v.l. 8. —$^{a}$) Ñ2 शितैर् ; Dg1 Dt1 D7 शतैर् ; D3 सर्वैर् ( for स तैर् ). Dg1 महावीरः; D6 °वीर्यैः; T2 °वेगैः ( for महावीर्यः ). —$^{b}$) Ś1 D1–3 रुक्मपुंखैर् ; Ñ1 स्वर्णमुक्तैर् ; T1 पूर्णयुक्तैर् ( for पूर्णमुक्तैर् ). T2 अजिह्मकैः ( for अजिह्मगैः ). Ñ2 स्वर्णपुंखैर्महाबलः. —$^{c}$) Ñ1 जघान ( for बिभेद ). Ñ2 समरे ( for निशितैस् ). Ś1 Ñ D1–3 घोरैर् ; M2 बाणैर् ( for तीक्ष्णैर् ). B4 बाणैर्बिभेद तीक्ष्णाग्रैर्. —$^{d}$) Ś1 D1.2 गृध्रं तीक्ष्णैः शिलाशितैः; Ñ1 गृध्रराजं महाबलः; Ñ2 गृध्रराजं **शुगैः; B4 D3 गृध्रराजं शिलाशितैः. —For 9, B1.3 D5.7 subst.; Ñ2 ins. l. 2 after $9^{ab}$; B4 ins. first time after 7 and reads second time after 958* as subst. for $9^{ab}$ only :

959* स तैरशनिसंकाशैः स्वर्णपुङ्खैरजिह्मगैः ।
निर्बिभेद गृध्रपतिमतिक्रुद्धो दशाननः ।

[ ( l. 1 ) D5.7 स तैर्बाणैर्महावीर्यः ( for the prior half ). B4 ( second time ) तीक्ष्ण- ( for स्वर्ण- ). D5.7 महाबलः ( for अजिह्मगैः ). —( l. 2 ) Ñ2 D5.7 सुतीक्ष्णाग्रैः ( for गृध्रपतिम् ). Ñ2 D5.7 शरीरं तस्य पत्रिणः ( for the post. half ). ]

—B1.3.4 ( after first occurrence of 959* ) cont.; while Ñ2 D5.7 ins. ( followed by 965* ) after 12 :

960* स रावणविमुक्तांस्तु शरान्वै पतगेश्वरः ।

—Thereafter, B4 reads $10^{cd}$, while M3 ins. after 9 :

961* स रोषमकरोद्गृध्रो रावणेन शराहतः ।

10 Ś1 V1 D1–3 om. 10 ( for V1, cf. v.l. 8 ). For sequence in B4, cf. v.l. 8. Ñ2 B1.3 D5.7 om. $10^{ab}$. —$^{a}$) B4 रावण- ( for राक्षस- ). Ñ1 -पथे ( for -रथे ). —$^{b}$) Ñ1 B4 पतगेश्वरः ( for बाष्पलोचनाम् ). —$^{c}$) Ñ1 वंचयित्वा तु ( for अचिन्तयित्वा ). Ñ Dg1 D4.5.7 T G2 M तान् बाणान् ( by transp. ). B1.3.4 अचिंतयन्प्रहारांस्तान्. —$^{d}$) Ñ B1.3.4 D5.7 रावणं ( for राक्षसं ). Ñ B1.3.4 समुपाद्रवत् ( for समभि° ). —After 10, Ñ2 B1.3 D5.7 ins., while V1 ins. after 7 ( due to omission ) and B4 ins. after $14^{cd}$ :

962* उपेत्य स महाबाहुः पक्षावुद्यम्य मूर्धनि ।
पक्षाभ्यामभिसंरब्धस्ताडयामास रावणम् ।

[ ( l. 1 ) B1.3.4 उत्पत्य च ( for उपेत्य स ). Ñ2 D5.7 उत्पतन्निपतंश्चैव ( for the prior half ). —( l. 2 ) V1 B4 अतिसंरब्धस् ( for अभि° ). ]

11 For sequence in B4, cf. v.l. 8. —$^{b}$) G(ed.) मणिमुक्ता- ( by transp. ) ( for मुक्तामणि- ). —Ś1 D1.3 om. $11^{c}$–$12^{b}$. After $11^{ab}$, D2 reads 12. —$^{c}$) Ñ1 पक्षाभ्यां स ( for चरणाभ्यां ). —$^{d}$) Dt1 Dm1 D6.8 G2 पतगोत्तमः; D2 सुमहाबलः ( for पतगेश्वरः ). —After 11, D2 ins.; while Ś1 D1 ins. after 12 and D3 after 14 :

963* सारथिं च रथोपस्थात्स जघान नखाङ्कुशैः ।;

while Dg1 Dt1 Dm1 D4.6.8 S ins. after 11 :

964* ततोऽन्यद्धनुरादाय रावणः क्रोधमूर्छितः ।
ववर्ष शरवर्षाणि शतशोऽथ सहस्रशः ।
शरैरावारितस्तस्य संयुगे पतगेश्वरः ।
कुलायमभिसंप्राप्तः पक्षिवच्च बभौ तदा ।
स तानि शरजालानि पक्षाभ्यां तु विधूय ह । [5]
चरणाभ्यां महातेजा बभञ्जास्य महद्धनुः ।

[ ( l. 2 ) G2 राक्षसेश्वरः ( for क्रोधमूर्छितः ). —After l. 2, D8 reads राम श्री. —( l. 3 ) D6 आचरितस्; M1 आच्छादितस् ( for आवारितस् ). Dg1 T3 तत्र ( for तस्य ). —( l. 4 ) D4 T1.2 G1.2 M2.3 उपसंप्राप्तः; G3 अपि संप्राप्तः; M1 इव संप्राप्तः ( for अभिसंप्राप्तः ). Dm1 D8 T2 G M1 स ( for च ). Dg1 स तथा बभौ; D4 स बभौ रणे; T1 प्रबभौ तदा; T3 स सदा बभौ ( for च बभौ तदा ). —( l. 5 ) Dg1 Dm1 D8 T G2.3 M शरवर्षाणि ( for °जालानि ). Dg1 Dm1 D4.8 T G M1.2 च; M3 प्र- ( for तु ). T2 विधूयत; G1 [ अ ]वधूय ह ( for विधूय ह ). —( l. 6 ) G3 [ अ ]थ ( for [ अ ]स्य ). M2.3 पुनर् ( for महद् ). ]

12 For sequence in B4, cf. v.l. 8. Ś1 D1.3 om. $12^{ab}$ ( cf. v.l. 11 ). D2 transp. $^{ab}$ and $^{cd}$ and reads after $11^{ab}$. B3 reads $12^{ab}$ in marg. —$^{a}$) Ñ2 B3.4 D5 भं( B4 भुं )क्त्वा; D2 तथा; M3 तं च ( for तच्च ). Ñ V1 B1.3.4 D2.5 T2 दिव्यं ( for दीप्तं ). D7 खंडयित्वाभि-

काञ्चनोरश्छदान्दिव्यान्पिशाचवदनान्खरान् ।
तांश्चास्य जवसंपन्नाञ्जघान समरे बली ॥ १३

वरं त्रिवेणुसंपन्नं कामगं पावकार्चिषम् ।
मणिहेमविचित्राङ्गं बभञ्ज च महारथम् ।
पूर्णचन्द्रप्रतीकाशं छत्रं च व्यजनैः सह ॥ १४

G. 3. 56. 0
B. 3. 51. 17
L. 3. 56. 12

सदृशं दिव्यं ( hypm. ). —Ñ1 illeg. for 12$^{b}$. —$^{b}$ ) Ñ2 V1 B1.3.4 D5.7.8 T2 Ct*p* शरासनं; D2 महारथं; D4 शरं वरं; Cm.g.t as in text ( for शरावरम् ). —$^{c}$ ) V1 B1 D1–3.5.7 स ( for च ). Ñ1 चरणाभ्यां ( for पक्षाभ्यां च ). Ś1 B3 सुमहातेजा; Dg1 Dm1 D4.8 T G M1.2 च महावीर्यो ( for च महातेजा ). B4 पक्षाभ्यामभिसंरब्धो. —$^{d}$ ) Ñ2 V1 B1.3.4 D5.7 दुद्राव; Dg1 D4 G2 Cm.g.k व्याधुनोत् ; D2 बभंज; Cr.t as in text ( for व्यधुनोत् ). Ś1 D1 बभंज स ( Ś1 सु ) महाबलः; D3 बभंज पतगोत्तमः. —After 12, V1 B1.3 ins.; while Ñ2 D5.7 cont. after 960*; B4 ins. l. 3–4 after 10$^{ab}$ and l. 1–2 after 10$^{cd}$ :

965* ततो बहुश आविध्य तत्किरीटं महाबलः ।
जाम्बूनदमयं दिव्यं सर्वरत्नोपशोभितम् ।
व्यसर्जयत पक्षीन्द्रो रोषाविष्टो नभस्तले ।
अशोभत पतत्तत्तु सूर्यमण्डलसंनिभम् ।

[ ( l. 3 ) B4 विससर्ज स ( for व्यसर्जयत ). V1 नभस्तलं ( for °स्तले ). —( l. 4 ) B1 पतत्तच्च; B4 पतत्रस्य ( for पतत्तत्तु ). B3 अशोभदुत्पतच्चैव ( for the prior half ). ]

—After 12, Ś1 D1 ins. 963*; while B4 ins. 968*.

**13** For sequence in B4, cf. v.l. 8. Ñ1 om. 13$^{a}$–14$^{b}$. D7 om. 13. —$^{a}$ ) Ñ2 V1 B3.4 D1–3.5 हत्वा; Dg1 Dm1 D8 T3 G3 दीप्तान् ; D4 lacuna ( for दिव्यान् ). Ś1 रुक्मरथच्छदान्हत्वा; B1 कांचनावच्छदान्हत्वा. —Ś1 D1–3 om. 13$^{c}$–14$^{b}$. —$^{cd}$ ) Dm1 D8 T2 M1 स रणे ( for समरे ). Ñ2 V1 B1.3.4 D5 विकृष्य तरसा पक्षी क्षिप्रं प्राणैर्व्य( V1 °र्वि )-योजयत्.

**14** For sequence in B4, cf. v.l. 8. Ś1 Ñ1 D1–3 om. 14$^{ab}$ ( cf. v.l. 13 ). —$^{ab}$ ) Dt1 D6 अथ; Cg as in text ( for वरं ). T2 त्रिदंड-; M3 त्रिगुण- ( for त्रिवेणु- ). ❀ Cv : त्रिगुणसंपन्नमिति पाठः. ❀ Ñ2 V1 B1.3.4 D5.7 कामगं तु( B3 तं )महाघोरं चक्रकूबरभूषणं. —Ś1 Ñ1 D1.2 transp. $^{cd}$ and $^{ef}$. —$^{c}$ ) D3 -रत्न- ( for -हेम- ). Dt1 D6 मणिसोपानचित्रांगं. —$^{d}$ ) Ś1 बभंज स; Dm1 G3 बभंजाथ; D1.3 स बभंज ( for बभञ्ज च ). —After 14$^{cd}$, Ś1 D1–3 ins., Ñ2 V1 B1.3.4 D5.7 ins. after 16 :

966* ततस्तु तं परबलमानभञ्जनं
सुरासुरैः समरसुखेष्वनिर्जितम् ।
पराजितं पतगवरेण रावणं
विसिस्मिये सुरमुनिभिर्विलोक्य तम् ।
ततोऽस्तुवन्पतगवरं दिवौकसः
सुदुष्करं कृतमिह कर्म तेऽनघ ।
प्रशस्यते स विहगराजसत्तमो
व्यवस्थितः पुनरपि युद्धमर्षितः ।

Colophon

कृत्वा तु तन्महत्कर्म जटायुर्जरयान्वितः ।
परिश्रान्तो बभूवाथालक्षयत्तं च रावणः ।

[ ( l. 1 ) Ś1 D2 च ( for तु ). D5 om. तं ( subm. ). B1 -यानभंजनं ( for -मानभं° ). —( l. 2 ) B1 -सुखे सुपूजितं ( for -सुखेष्वनिर्जितम् ). —( l. 3 ) D1 वीक्ष्य तं ( for रावणं ). —( l. 4 ) B1.3.4 विसिस्मिरे; D5 विसिस्मिये ( for विसिस्मिये ). Ś1 D2 विसिस्मियुः सुरमुनयोव( Ś1 वि )लोक्य तं; D1.3 विसिस्मियुः खगचर-भूतवर्तिकाः ( sic ). —( l. 5 ) Ś1 अभिष्टुवं; D1–3 अभिष्टुवन् ( for ततोऽस्तुवन् ). D1–3 शुभा गिरा( D1.3 °रः ) ( for दिवौकसः ). —( l. 6 ) B4 इति ( for इह ). B1 तेन तत्; B4 तेन यत् ( for तेऽनघ ). Ś1 D1.2 कर्म कृतं त्वयाद्भुतं; D3 कर्म इदं त्वया कृतं ( for कृतमिह कर्म तेऽनघ ). —( l. 7 ) Ñ2 D5.7 प्रशंसितः स ( for प्रशस्यते स ). Ś1 D1–3 प्रशं( Ś1 °भा )सितो द्विजवरराजसत्तमैर्( Ś1 D2 °मो ). —( l. 8 ) Ś1 D1.2 युद्धनिश्चयः( Ś1 D2 °ये ); B1.3 युद्धदर्पितः; B4 °हर्षितः; D3 °निर्भयः ( for युद्धमर्षितः ).

Colophon. —*Sarga name* : Ś1 Ñ2 V1 B1.3.4 D1.2.5.7 जटायुरावणयुद्धं; D3 रावणविरथीकरणं. —*Sarga no.* : Ñ2 B4 D3 57; V1 55; D1 53; D5.7 56.

—Ś1 D1–3 om. l. 9–10. —( l. 9 ) B1.3 सुमहत् ( for तन्महत् ). —( l. 10 ) V1 परिभ्रांतो ( for परिश्रांतो ). Ñ2 D5.7 तु ( for च ). ];

while Ñ1 ins. after 14$^{cd}$ :

967* पश्यतः सारथिवाभ्य * * * * * * * * ( illeg. )
ततो जघ्नि * * * * * * * * * * * * * ( illeg. );

whereas after 14$^{cd}$, Ñ2 V1 B1.3 D5.7 ins., while B4 ins. after 12 :

968* समाक्षिप्य रथात्तस्मात्सारथिं पतगेश्वरः ।
गजाङ्कुशनिभेनाशु दारयित्वा पदासृजत् ।

[ ( l. 2 ) V1 परामृशत् ; B1 पदाहनत् ( for पदासृजत् ). ]

—Ñ2 V1 B1.3.4 D5.7 om. 14$^{ef}$. —$^{f}$ ) Dg1 T2.3 G2 M1.3 व्यजनकैः ( for च व्यजनैः ). Ś1 Ñ1 D1–3 छत्रं तस्य न्यपातयत् . —After 14, Dg1 Dt1 Dm1 D4.6.8 S ins. :

969* पातयामास वेगेन ग्राहिभी राक्षसैः सह ।
सारथेश्चास्य वेगेन तुण्डेनैव महच्छिरः ।
पुनर्व्यपाहरच्छ्रीमान्पक्षिराजो महाबलः ।

[ ( l. 2 ) Dt1 D6 च; T2 [ अ ]स्य ( for [ ए ]व ). —( l. 3 ) Dt1 D6 व्यपहनच्; T3 व्यपोहद्च् ( for व्यपाहरच् ). ]

—After 14, D3 ins. 963*.

G. 3. 56. 51 B. 3. 51. 19 L. 3. 57. 1 स भग्नधन्वा विरथो हताश्वो हतसारथिः ।
अङ्केनादाय वैदेहीं पपात भुवि रावणः ॥ १५
दृष्ट्वा निपतितं भूमौ रावणं भग्नवाहनम् ।
साधु साध्विति भूतानि गृध्रराजमपूजयन् ॥ १६
परिश्रान्तं तु तं दृष्ट्वा जरया पक्षियूथपम् ।
उत्पपात पुनर्हृष्टो मैथिलीं गृह्य रावणः ॥ १७
तं प्रहृष्टं निधायाङ्के गच्छन्तं जनकात्मजाम् ।
गृध्रराजः समुत्पत्य जटायुरिदमब्रवीत् ॥ १८
वज्रसंस्पर्शबाणस्य भार्यां रामस्य रावण ।
अल्पबुद्धे हरस्येनां वधाय खलु रक्षसाम् ॥ १९
समित्रबन्धुः सामात्यः सबलः सपरिच्छदः ।
विषपानं पिबस्येतत्पिपासित इवोदकम् ॥ २०
अनुबन्धमजानन्तः कर्मणामविचक्षणाः ।
शीघ्रमेव विनश्यन्ति यथा त्वं विनशिष्यसि ॥ २१
बद्धस्त्वं कालपाशेन क्व गतस्तस्य मोक्ष्यसे ।
वधाय बडिशं गृह्य सामिषं जलजो यथा ॥ २२

---

15 $^{a}$) T2 छिन्न- ( for भग्न- ). T1 transp. स and भग्नधन्वा. —$^{c}$) D2 अंकमादाय ( for अङ्केना° ). —$^{d}$) Ś1 D2.3 उत्पपाताशु( D2.3 °थ ); D1 उत्पपात स ( for पपात भुवि ). M1 राक्षसः ( for रावणः ).

16 Ś1 D1-3 om. ( hapl. ) 16–17. —$^{a}$) Dt1 D6.8 G1 निपातितं; M1 तं पतितं ( for निपतितं ). —$^{b}$) T2 छिन्नवाहनं. —$^{d}$) T2 पक्षिराजम् ( for गृध्र° ). —After 16, Ñ2 V1 B1.3.4 D5.7 ins. 966*.

17 Ś1 D1–3.5 om. 17 ( for all except D5, cf. v.l. 16 ). —$^{a}$) V1 परिश्रांतं ( for °श्रान्तं ). Ñ2 V1 B1.3 D7 स तं ( for तु तं ). —$^{b}$) V1 जरसा ( for जरया ). Ñ2 V1 B1.3.4 D7 पक्षिपुंगवं ( for °यूथपम् ). —V1 om. $17^{cd}$. —$^{c}$) Ñ2 D7 ततो ( for पुनर् ). —$^{d}$) Ñ2 B1.3.4 D7 सीतामादाय ( for मैथिलीं गृह्य ).

18 $^{a}$) Ñ2 V1 B1.3 D7 तां ( for तं ). Ñ2 V1 B1.3.4 D5.7 प्रगृह्य; D1.2 त्वरंतं ( for प्रहृष्टं ). B1.3 Dt1 D2 विधायांके; G( ed. ) निजे चांके ( for निधायाङ्के ). —$^{b}$) Ñ V1 B1.3.4 D1–3.5.7 हरंतं; Dt1 D6 रावणं ( for गच्छन्तं ). Ñ1 मैथिलीं बलात्. —After $18^{ab}$, Dt1 D6 ins. :

970* गच्छन्तं खड्गशेषं च प्रनष्टहतसाधनम् ।

—$^{c}$) V1 B1.4 खमुत्पत्य. —After $18^{c}$, Dg1 Dt1 Dm1 D4.6.8 S ins. :

971* समभिद्रुत्य रावणम् ।
समावार्य महातेजा.

[ ( l. 1 ) D4 M3 तमभिद्रुत्य; T2 समनु°; Cg as above ( for समभिद्रुत्य ). Dt1 Dm1 D6.8 रावणं समभिद्रवत्; M2 रावणं राक्षसेश्वरं. —( l. 2 ) Dm1 D8 G3 Ck तमा( Ck तदा )वार्यं; D4 समादाय; Cm.g.t as above ( for समावार्य ). ]

—For 18, Ś1 subst. :

972* अथ तां नेतुकामस्य रावणस्यातिकोपितः ।
जटायुरब्रवीद्वाक्यमिदं न्याय्यार्थसंयुतम् ।

—After 18, M2.3 ins. :

973* तिष्ठ तिष्ठ दशग्रीव न मे जीवन्विमोक्ष्यसे ।

19 Ś1 om. $19^{ab}$. —$^{c}$) M2 ( before corr. ) हत- ( for अल्प- ). D1.3 रहसि ( meta. ) ( for हरसि ). V1 B1.3.4 [ए]तां ( for [ए]नां ). M3 अल्प*द्धे *रस्ये* ( damaged ). —$^{d}$) M3 damaged for वधाय. M1 किल ( for खलु ). Ñ1 B1 वधार्थं सर्वरक्षसां.

20 $^{ab}$) Dt1 सामात्य- ( for °मात्यः ). Ś1 D1.2 यदा ( Ś1 याता ) समित्रबंधुस्त्वं; Ñ1 सामात्यमित्रबंधुस्त्वं; D3 यथा सबंधुमित्रश्च. D2 सबलं ( for °लः ). V1 B1.3.4 D5.7 transp. सामात्यः and सबलः. —After $20^{ab}$, Ś1 D2 ins. :

974* यमस्य लोकं बाणार्तो रामस्य शरपीडितः ।
[ L( ed. ) -खंडितः ( for -पीडितः ). ]

—$^{c}$) D1 विषं पानं ( for विष° ). T1.2 G3 करोष्येतत् ( for पिबस्येतत् ). —$^{d}$) V1 पिपासार्तं ( for पिपासित ). Dt1 reads सित इवोदकम् in marg.

21 Ś1 D1-3 read 21 after 27. —$^{a}$) Ñ1 येनुबंधम् ( for अनु° ). —$^{b}$) Dg1 ह्यविचक्षणाः. Ñ2 कर्म *****णाः. —After $21^{ab}$, Ś1 D1–3 ins. :

975* समित्रबान्धवजनाः सामात्याः सपरिच्छदाः ।
[ Ś1 D2 -बांधवा जाताः ( for -बान्धवजनाः ). ]

—$^{c}$) Ś1 Dg1 D1–3 T3 क्षिप्रम् ( for शीघ्रम् ). Dg1 च नश्यंति; D5 [ अ ]त्रनंक्ष्यंति; D7 विनंक्ष्यंति; G3 नशिष्यंति ( for विनश्यन्ति ). —$^{d}$) Ś1 तथा त्वं न विनश्यसि; Ñ2 V1 B1.3.4 D5.7 यथा हि त्वं( B1 त्वं हि ) विनंक्ष्यसि; G3 यथा स त्वं नशिष्यसि.

22 $^{b}$) Ñ1 B4 Dg1 D1.2.4.5.7.8 मोक्षसे; Cm.g as in text ( for मोक्ष्यसे ). Ś1 D3 त्वं विमोक्ष( D3 °क्ष्य )से; V1 त्वं हि मोक्षसे; M1.2 शर्म लप्स्यसे ( for तस्य मोक्ष्यसे ). —$^{cd}$) Ś1 बंधाय ( for वधाय ). D3 बलिसं; M1 शबलं; Ck बळिशं; Ct as in text ( for बडिशं ). Ñ2 V1 B1.3.4 D5.7 बडिषा ( V1 बालिशा )मिषमादाय वधाय मकरो यथा. —After 22, Ñ2 V1 B1.3.4 D5.7 ins. :

976* सिंहो वा धर्षणां प्राप्य पादस्पर्शमिवोरगः ।
मैथिल्याः स परामर्षं राघवो न सहिष्यति ।
[ ( l. 2 ) B4 हि मृष्यति ( for सहिष्यति ). ]

न हि जातु दुराधर्षौ काकुत्स्थौ तव रावण ।
धर्षणं चाश्रमस्यास्य क्षमिष्येते तु राघवौ ॥ २३
यथा त्वया कृतं कर्म भीरुणा लोकगर्हितम् ।
तस्कराचरितो मार्गो नैष वीरनिषेवितः ॥ २४
युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण ।
शयिष्यसे हतो भूमौ यथा भ्राता खरस्तथा ॥ २५

परेतकाले पुरुषो यत्कर्म प्रतिपद्यते ।
विनाशायात्मनोऽधर्म्यं प्रतिपन्नोऽसि कर्म तत् ॥ २६
पापानुबन्धो वै यस्य कर्मणः को नु तत्पुमान् ।
कुर्वीत लोकाधिपतिः स्वयंभूर्भगवानपि ॥ २७
एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः ।
निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ॥ २८ G. 3. 57. 21 B. 3. 51. 33 L. 3. 57. 13

23 $^{a}$) D3 G2 तु ( for हि ). Ñ1 राजन् ; Dt1 D4 जातौ ( for जातु ). Ś1 D1.2 °र्षौ; V1 परा°; B1.3.4 °धर्षौ ( for दुराधर्षौ ). —$^{b}$) Ś1 Ñ1 D1–3 धर्मसेतुः( Ñ1 °हेतोः; D1.2 °सेतु ) प्रधर्षणां( D1 °***; D2 °धर्षणात् ); Ñ2 V1 B1.3.4 D5.7 धर्मदारप्रधर्षणां( V1 °णात् ); G( ed. ) धर्मदारपराभवं. —$^{c}$) Ś1 सीतायाश् ; V1 धर्माणां; B1.3.4 D2.5.7 धर्षणां ( for धर्षणं ). B1 D2.5 वा ( for च ). —$^{d}$) Ś1 D2 राघवो मर्षयिष्यति; Ñ1 राघवः प्रसहिष्यति; Ñ2 V1 B1.3.4 D5.7 सहेते रामलक्ष्मणौ; D1 राघवो न सहिष्यति; D3 राघवौ मर्षयिष्यतः.

24 Ñ1 om. $24^{ab}$. —For $24^{ab}$, Ñ2 V1 B1.3.4 D5.7 subst., while Ś1 D1–3 subst. l. 3 only for $24^{ab}$ :

977* इमां तस्करभावेन क्रूर पाप नृशंसकृत् ।
यथोपनयसे सीतां प्रोक्षितस्त्वं यथा पशुः ।
हत्वा वा हरते शूरः शेते वा निहतः परैः ।

[ (l. 3) Ñ2 B1.3( also ).4 D5.7 शरैः ( for परैः ). ]
—Ś1 om. $24^{c}$–25. —$^{d}$) D2 [ ए ]व ( for [ ए ]ष ). Ñ2 V1 B1.3.4 D5.7 शूर- ( for वीर- ). —After 24, D1 ins. l. 1 of 979* and cont.; while Ś1 cont. after 977*; D2.3 ins. after 24 :

978* नचिराद्रघुशार्दूलः स त्वां पाप हनिष्यति ।

[ D1 अचिराद्युद्ध- ( for नचिराद्रघु- ). ]

25 Ś1 D2 om. 25( for Ś1, cf. v.l. 24). —$^{a}$) T1 वीरोसि ( for शूरोऽसि ). —$^{c}$) Dg1 Dt1 D1.3.6.8 G2.3 M3 शयिष्यसि ( for °से ). —$^{d}$) Ñ B1.3.4 D3.5.7 G1 तव ( for तथा ). —After 25, Ñ2 V1 B1.3.4 D5.7 ins.; Ñ1 D3 ins. l. 1–2 only; while D1 ins. l. 1 only after 24 :

979* असकृत्संयुगे येन निहता दैत्यदानवाः ।
नचिराच्चीरवासास्त्वां राघवो निहनिष्यति ।
रामो दाशरथिः श्रीमान्क्षत्रधर्मपथे स्थितः ।
एवमुक्तो राक्षसेन्द्रः पक्षीन्द्रेण स गर्वितः ।
रोषसंरक्तनयन इदं वचनमब्रवीत् ।
सौहृदं दर्शितं राज्ञस्त्वया दशरथस्य हि ।
रामस्य च तथानृण्यं गच्छ त्वं मा कृथाः श्रमम् ।
एवमुक्तोऽब्रवीद्वाक्यमविश्रान्तः खगोत्तमः ।
यत्ते तेजो बलं शक्तिः पौरुषं यच्च ते महत् ।
तद्दर्शय न मे क्रूर जीवन्प्रतिगमिष्यसि ।

[ (l. 1) V1 तेन ( for येन ). —(l. 2) D3 अचिराच् ( for नचिरात् ). D3 स रामो ( for राघवो ). Ñ1 स रावण वधिष्यति ( for the post. half ). —(l. 3) B4 क्षत्रधर्मे व्यवस्थितः; G( ed. ) क्षत्रधर्मेव्यवस्थितः ( for the post. half ). —(l. 4) V1 B1 ( also ) तु रक्षेंद्रः ( for राक्षसेन्द्रः ). B3.4 सगर्वितं ( for स गर्वितः ). —(l. 6) D5 सौहार्दं ( for °र्दं ). Ñ2 D5.7 च ( for हि ). —(l. 7) V1 om. च ( subm. ); B1 रामस्य हि; B4 राघवस्य ( for रामस्य च ). V1 B4 यथा ( for तथा ). B3 नूनं ( for [ अ ]नृण्यं ). V1 गम्यते; B1 गतस्त्वं; B3.4 गम्यतां ( for गच्छ त्वं ). —(l. 8) Ñ2 B3 D5.7 अविश्रांतः; B1 स विश्रांतः ( for अविश्रान्तः ). —(l. 10) Ñ2 क्रुद्ध ( for क्रूर ). B3 अद्य गमिष्यसि ( for प्रतिगमिष्यसि ). ]

26 $^{a}$) Ñ V1 B1.3.4 D1–3.5.7 परीतकालः ( for परेतकाले ). Ś1 परीतकालो हि रुषा. —$^{b}$) D6 प्रतिपद्यसे ( for °पद्यते ). Ś1 यः कर्म प्रतिपद्यते. —$^{c}$) Ś1 D2 G2 [ ऽ ]धर्मं; Ñ2 V1 B1.3.4 तस्मात् ; D1.3 [ ऽ ]धर्मात् ; D5.7 तत्स्यात् ; T3 [ ऽ ]नित्यं ( for ऽधर्म्यं ). Ñ1 विनाशमात्मनोधर्मात् . —$^{d}$) Ś1 [ ऽ ]स्मि; B3 हि ( for ऽसि ). Ś1 D2 कर्मकृत् ; Ñ1 धर्मतः; V1 रावण; B1.3.4 तच्च हि ( for कर्म तत् ). Ñ2 D5.7 प्रपन्नो गर्हितं च तत् .

27 D1 om. $27^{ab}$. —$^{a}$) Ś1 यस्यास्य; Ñ1 Dg1 T3 M3 यो यस्य; Ñ2 V1 B1.3.4 D2.3.5.7 यस्य स्यात् ; D4 T1 वैरस्य ( for वै यस्य ). T2 पापानुबद्धितैर्यस्य ( sic ). —$^{b}$) Ś1 D2.3 को नु कर्मकृत् ; Ñ1 कर्मकोविदः; Ñ2 V1 B1.3.4 D5.7 पाप को नु तत् ; D4 T1 G1.2 Cr.g.k कर्म को नु तत् ; M2 कर्मगो नु तत् ; Ct as in text ( for को नु तत्पुमान् ). T2 कर्म न स्यात्तु को नु तत् ( sic ). —$^{d}$) D2 इति ( for अपि ). —After 27, Ś1 D1–3 read 21, while Ñ2 V1 B1.3.4 D5.7 ins. :

980* अक्षमोऽसत्यसंधश्च परदारी नृशंसकृत् ।
पच्यते नरकेष्वेव दह्यमानः स्वकर्मणा ।

[ (l. 1) B1.4 अः क्रूरो ( for अक्षमो ). V1 D5 परदार- ( for °दारी ). —(l. 2) B1 नरके चैव; B3 नरके घोरे ( for नरकेष्वेव ). B1 दशग्रीव ( for दह्यमानः ). ]

28 $^{a}$) G2 भृशं ( for शुभं ). —$^{b}$) Ñ1 राक्षसेश्वरं ( for तस्य रक्षसः ). —$^{c}$) D4 स पपात ( for नि° ). —$^{d}$) D3 पृष्ठतः ( for वीर्यवान् ). —After 28, Ñ2 V1 B1.3.4 D5.7 ins. :

981* गजाङ्कुशनिभैस्तीक्ष्णैरर्पयित्वा भुजान्तरे ।
नखतुण्डप्रहारैस्तु राक्षसो विह्वलीकृतः ।

G. 3. 57. 23 B. 3. 51. 34 L. 3. 57. 14 तं गृहीत्वा नखैस्तीक्ष्णैर्विरराद समन्ततः ।
अधिरूढो गजारोहो यथा स्याद्दुष्टवारणम् ॥ २९
विरराद नखैरस्य तुण्डं पृष्ठे समर्पयन् ।
केशांश्चोत्पाटयामास नखपक्षमुखायुधः ॥ ३०
स तथा गृध्रराजेन क्लिश्यमानो मुहुर्मुहुः ।
अमर्षस्फुरितोष्ठः सन्प्राकम्पत स राक्षसः ॥ ३१
संपरिष्वज्य वैदेहीं वामेनाङ्केन रावणः ।
तलेनाभिजघानार्तो जटायुं क्रोधमूर्छितः ॥ ३२
जटायुस्तमतिक्रम्य तुण्डेनास्य खगाधिपः ।
वामबाहून्दश तदा व्यपाहरदरिंदमः ॥ ३३
ततः क्रुद्धो दशग्रीवः सीतामुत्सृज्य वीर्यवान् ।
मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत् ॥ ३४
ततो मुहूर्तं संग्रामो बभूवातुलवीर्ययोः ।
राक्षसानां च मुख्यस्य पक्षिणां प्रवरस्य च ॥ ३५

---

[ (l. 1) V1 वज्रांकुश-. V1 तीव्रैर् ( for तीक्ष्णैर् ). V1 B4 अर्दयित्वा; B1 दारयित्वा ( for अर्पयित्वा ). V1 स्तनांतरे; B3 D5 भुजांतरं ( for भुजान्तरे ). —(l. 2) B4 च ( for तु ). V1 विकलीकृतः; B3 व्याकुली°; D5.7 विदली° ( for विह्वलीकृतः ). ]

29 B3 reads 29a in marg. —a) Ś1 D2 स वितुंडो ( D2 °डं ); Ñ1 D3 स गृहीत्वा; Ñ2 V1 B1.4 D5.7 स गृहीतो; D1 स विनुन्नो ( for तं गृहीत्वा ). —b) Ś1 D1 तस्य पृष्ठं; Ñ1 Dg1 Dt1 D2–4.6.8 T2.3 विददार; Ñ2 V1 विचचार; B1.3.4 D5.7 विचचाल; Cg.k as in text ( for विरराद ). ❁ Ct : 'विरराद' इति पाठेऽपि क्षतानि चकारेत्येवार्थः. ❁ Ñ1 महाबलः; G2 [ क्षा ]समंततः ( for समन्ततः ). —Ś1 D1 om. 29c–30b. —c) Ñ2 B4 D5.7 अधिरूढे; V1 आवरोहे; D2 अधिक्षेपो; M2 °रूपो; L( ed. ) अवरूढो ( for अधिरूढो ). Ñ2 V1 B4 D5–7 गजारोहे; B1 गजावाहे; Dt1 गतारोहो; D2.3 वरारोहैर् ; T2 गजारूढो; Ct as in text ( for गजारोहो ). B1.3 अधिरूढगजारो( B3 °वा )हे. —d) V1 यदा ( for यथा ). Ñ2 V1 B1.3.4 D5.7 चलितो गजः; D2.3 दुष्टवारणः ( for दुष्टवारणम् ).

30 Ś1 D1 om. 30ab ( cf. v.l. 29 ). —a) Ñ V1 B1.3.4 Dg1 Dt1 D4–8 T2.3 Ct विददार; D2.3 स विदार्य; Cg.k as in text ( for विरराद ). Ñ1 तथा ( for नखैर् ). Ñ V1 B1.3.4 Dg1 D5.7 तस्य; Dm1 D8 G3 तुंडं; D2.3 तीक्ष्णैः; G2 यस्य; Cg.t as in text ( for अस्य ). —b) Ñ1 नखैः; Dm1 D2.3.8 G3 तस्य ( for तुण्डं ). D2.3 पृष्ठं ( for पृष्ठे ). Ñ1 D2.3 समंततः; T1.2 °र्पयत् ( for समर्पयन् ). Ñ2 V1 B1.3.4 D5.7 पृष्ठं स पतगेश्वरः. —After 30ab, Ñ2 V1 B1.3.4 D5.7 ins. :

982* तीक्ष्णतुण्डार्पणैर्ग्रीवां नखैः सर्वां व्यदारयत् ।
वेदनापीडिताक्षीणि वदनानि चकार सः ।

[ (l. 1) D7 तीक्ष्णं ( for तीक्ष्ण- ). V1 नखतुंडार्पितग्रीवां ( for the prior half ). Ñ2 D5.7 चैव ( for सर्वां ). V1 सर्वान्विदारयन्. ] —V1 om. 30c–31b. —d) M1 -मुखायुधैः. Ñ1 तुंडपक्षनखायुधः; Ñ2 B1.3.4 D5.7 पक्षतुंडनखायुधः.

31 V1 om. 31ab ( cf. v.l. 30 ). —a) Dg1 तदा तु; Dt1 D4.6 G1.2 M2 स तदा; D2 स यथा; T3 तथा तु ( for स तथा ). —b) B1 D3 कृष्यमाणो; D2 क्लिष्टमानो ( for क्लिश्यमानो ). —c) Dm1 अमर्षः ( for अमर्ष- ). D1 तु; D2.3 च ( for सन् ). M2 अमर्षस्फुटितोरस्कस् . —d) Dt1 D6 M3 च ( for स ). M2 transp. प्राकंपत and स. Dm1 D4.8 T1.2 G3 रावणः ( for राक्षसः ). —For 31cd, Ś1 Ñ V1 B1.3.4 D1–3.5.7 subst. :

983* अमर्षात्स्फुरमाणोष्ठः समकम्पत राक्षसः ।

[ Ś1 D1–3 स्फुरितोष्ठश्च( D1 °स्तु ); D5 स्फुरमाणौष्ठः ( for स्फुरमाणोष्ठः ). D7 अमर्षस्फुरमाणौष्ठः ( for the prior half ). Ś1 Ñ1 D1–3 स प्राकंपत ( for सम° ). ]

32 Ñ1 om. 32–33. D5.7 om. 32. —a) Ś1 D1–3 तां परिष्वज्य; Ñ2 V1 B1.3.4 परिगृह्य च; T2 M1.3 स परिष्वज्य ( for संपरिष्वज्य ). —c) Ś1 D1–3 [ अ ]थ जघान ( for [ अ ]भिजघान ). —d) Ś1 D1–3 जटायुपममर्पणं; Ñ2 सुसंक्रुद्धो जटायुषं; V1 B1.3.4 संक्रुद्धस्तं( B4 °स्तु ) जटायुषं. ❁ Cg : जटायुरित्युकारान्तोऽप्यस्ति. ❁

33 Ś1 Ñ1 V1 D1–3 om. 33( for Ñ1, cf. v.l. 32 ). —a) D4 T1 G1.2 M2 अभिक्रम्य; M3 अभिद्रुत्य ( for अतिक्रम्य ). —c) T2 ततो; T3 तथा ( for तदा ). —d) Dg1 Dm1 D6 व्यापाहरद् ( for व्य° ). —For 33, Ñ2 B1.3.4 D5.7 subst. :

984* जटायुरपि संक्रुद्धः पक्षतुण्डनखैर्मुहुः ।
चकार रावणं संख्ये फुल्लाशोकसमप्रभम् ।

[ (l. 2) B3 पक्षी ( for संख्ये ). ]

—After 33, Dg1 Dt1 Dm1 D4.6.8 S ins. :

985* संछिन्नबाहोः सद्यो वै बाहवः सहसाभवन् ।
विषज्वालावलीयुक्ता वल्मीकादिव पन्नगाः ।

[ (l. 1) Dg1 Dm1 D4.8 T2 G2 Cg सद्यैव; G1 सदैवं; M1.3 तस्यैव; Ck as above ( for सद्यो वै ). ❁ Cg : सद्यैवेत्यार्षं सन्धेः वृद्धिः. ❁ G2 सदृशा ( for सहसा ). —(l. 2) D6 पन्नगा इव ( by transp. ). ]

34 a) Ś1 D1–3 तस्य; Ñ2 V1 B1.3.4 D5.7 पुनः ( for ततः ). Dg1 Dt1 Dm1 D4.6.8 T G M2.3 क्रोधाद् ( for क्रुद्धो ). —b) M1 उद्दिश्य ( for उत्सृज्य ). K( ed. ) रावणः ( for वीर्यवान् ). —c) D3 मुष्टिभिश्च ( for मुष्टिभ्यां ). —d) Ś1 D1–3 जटायुषम् ; M2 पक्षिराजम् ( for गृध्रराजम् ). Dg1 T2.3 अताडयत्; Cg as in text ( for अपोथयत् ).

35 a) Ś1 Ñ B1.3.4 D1–3.5.7 तयोर् ( for ततो ). —b)

तस्य व्यायच्छमानस्य रामस्यार्थेऽथ रावणः ।
पक्षौ पादौ च पार्श्वौ च खड्गमुद्धृत्य सोऽच्छिनत् ॥ ३६

स छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा ।
निपपात हतो गृध्रो धरण्यामल्पजीवितः ॥ ३७

तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषम् ।
अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ॥ ३८

तं नीलजीमूतनिकाशकल्पं
सुपाण्डुरोरस्कमुदारवीर्यम् ।
ददर्श लङ्काधिपतिः पृथिव्यां
जटायुषं शान्तमिवाग्निदावम् ॥ ३९

ततस्तु तं पत्ररथं महीतले
निपातितं रावणवेगमर्दितम् ।
पुनः परिष्वज्य शशिप्रभानना
रुरोद सीता जनकात्मजा तदा ॥ ४० G. 3. 57. 35 B. 3. 51. 40 L. 3. 57. 24

इति श्रीरामायणे अरण्यकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

B1 [ अ ]तुल-; Dg1 D3 G1 M3 [ अ ]तुल्य- ( for [ अ ]तुल- ). D2 M1 -वीर्यवान् ( for -वीर्ययोः ).—c ) Ś1 तु; D4 om. (subm.) ( for च ).—d ) D1 पक्षिणः; D5 पत्रिणां ( for पक्षिणां ).—After 35, Ñ1 ins.:

986* तस्य तुण्डप्रहारेण राक्षसो बलिनां वरः ।
निहतो निपपातो * * * * * * * * * ।

36 a ) Ñ1 * * * मानस्य ( illeg. ); Ñ2 V1 B1.3.4 D5.7 प्रयतमानस्य ( for व्यायच्छमानस्य ).—b ) Ś1 D1.2 राघवार्थे( D1 °र्थं ) ( for रामस्यार्थे ). Ś1 Ñ V1 B1.3.4 Dt1 D1–3.5–7 G1 स; D4 तु ( for ऽथ ).—Ñ1 illeg. from first च up to ऽच्छिनत् in d.—c ) Ñ1 पद्दौ ( for पक्षौ ). Ś1 D1–3 तुंडं; Ñ1 पक्षौ; B1 पादं; Dg1 G2 M2 पार्श्वं; Dm1 D4.8 T2.3 G3 Cg पार्श्वौ; D6 om. ( for पादौ ). G1 च पार्श्वं ( for पादौ च ). Ś1 Dg1 Dm1 D1–4.8 T G M2 पादौ च; Ñ2 D5.7 सहसा; V1 B1.3.4 पार्श्वं च ( for पार्श्वौ च ). M3 क्रुद्धः पक्षौ च पार्श्वं च.—d ) Dg1 उद्यम्य ( for उद्धृत्य ). M3 चाच्छिनत् ( for सोऽच्छि° ). Ś1 D1–3 खड्गमुद्यम्य चिच्छिदे; Ñ2 V1 B3.4 D5.7 चिच्छेदोद्यम्य सायकं; B1 चिच्छेदायतकार्मुकः.

37 a ) D4 T1.2 G1.3 M संछिन्न-; Cg as in text ( for स छिन्न- ). Ñ1 illeg. for सहसा.—b ) D4 G1 तरसा; D7 om. ( hapl. ) ( for रक्षसा ). Dm1 D4.8 G1.3 घोर-; D3 M2 क्रूर- ( for रौद्र- ). G2 -रूपिणा ( for -कर्मणा ).—c ) Ś1 Ñ V1 B3 Dg1 Dm1 D1.2.4.5.7.8 M2.3 ततो; B4 Dt1 D6 G1.3 महा- ( for हतो ).

38 ab ) Ś1 Ñ1 D1–4 दृष्ट्वा निपतितं ( for तं दृष्ट्वा पतितं ). Ñ1 illeg. from भूमौ up to ज in जटा° in b. V1 क्षतार्द्रगतजीवितम्.—c ) Ñ1 अभ्यवर्तत ( for °धावत ).—d ) V1 सुबंधुम्.

39 a ) Ñ2 V1 B1.3.4 D5.7 कृष्ण- ( for नील- ). Ś1 D1–3 नि( D1 स )काशवर्णं; Ñ2 V1 B1.3.4 D5.7 °कायं; G1 °रूपं; M3 °गात्रं ( for -निकाशकल्पं ).—b ) Ñ1 Dt1 D6 स पांडुरोरस्कम्; Ñ2 B1.3.4 स( Ñ2 सु )पांडरोवक्षम् ( sic ) ( B4 °रोरस्कम् ). Ñ2 V1 B3.4 D5.7 -सत्त्वं; B1 -कायं ( for -वीर्यम् ).—c ) Ñ1 शयानं; Ñ2 V1 B1.3.4 D5.7 जटायुषं ( for पृथिव्यां ).—d ) Ñ1 illeg. after शा in शान्तम्. Ñ2 V1 B1.3.4 D5.7 हतं पृथिव्यां कृपणं स्फुरंतं. ❀ Cv : अत्र निकाशकल्पशब्दाभ्यामपि तुल्यत्वोच्यते। अवमन्यताप्येकस्मिन्नर्थे पर्यायद्वयप्रयोगः कविमुनिना शैली । अथवा जीमूतप्रकाशतुल्यमिति यावत् । .... अग्निदावं दावाग्निं । अथवा अग्निश्चासौ दावश्चेति अग्निदावः। दावशब्दो वनवाचकोऽप्यस्तीत्यग्निविशेषणप्रयोगः ।; Ck : अग्निदावमिति विशेषणस्य पूर्वनिपात आर्षः दावाग्निमिति यावत् ।; Ct : अग्निदावं दावाग्निं परनिपात आर्षः. ❀

40 a ) G2 महाबलं ( for महीतले ).—b ) Ś1 Ñ1 D1–3 -वेगनिर्जितं; Ñ2 V1 B1.3.4 D5.7 -खड्गनिर्जितं ( for -वेगमर्दितम् ).—c ) Ñ2 V1 B3.4 D5.7 ततः; B1 भृशं ( for पुनः ). G3 damaged for रिष्वज्य श.—d ) Ñ2 D5.7 सती; B3 भृशं ( for तदा ).

Colophon.—*Sarga name* : Ś1 D2 सीताप्रमाथे जटायुवधो; Ñ V1 B1.3.4 D3.5.7 जटायुर्वधः; D1 जटायुषो वधो. —*Sarga no.* ( figures, words or both ) : Ś1 Ñ1 B1.2 D2 om.; Ñ2 D5.7 57; V1 56; B4 D3 58; Dg1 Dt1 Dm1 D6.8 T G M1.2 51; D1 54; D4 53; M3 52. G concludes with श्रीरामाय नमः.

# ५०

G. 3. 58. 1
B. 3. 52. 1
L. 3. 58. 1

तमल्पजीवितं भूमौ स्फुरन्तं राक्षसाधिपः ।
ददर्श गृध्रं पतितं समीपे राघवाश्रमात् ॥ १
सा तु ताराधिपमुखी रावणेन समीक्ष्य तम् ।
गृध्रराजं विनिहतं विललाप सुदुःखिता ॥ २
निमित्तं लक्षणज्ञानं शकुनिस्वरदर्शनम् ।
अवश्यं सुखदुःखेषु नराणां प्रतिदृश्यते ॥ ३
न नूनं राम जानासि महद्व्यसनमात्मनः ।
धावन्ति नूनं काकुत्स्थ मदर्थं मृगपक्षिणः ॥ ४

## 50

V2 illeg. for Sarga 50 (cf. v.l. 3.46.7). M1 begins with श्रीरामाय नमः.

**1** Dg1 Dt1 D6 T1.3 G1 M1.3 om. 1.—ᵃ) D3 ततो (for तम्). D8 अस्य (for अल्प-). K(ed.) गृध्रं (for भूमौ).—ᵇ) D3 रक्षसा हतं (for राक्षसाधिपः). Ś1 D1.2 क्षतजार्द्रं जटायुषं.—ᶜᵈ) Ś1 Ñ1 D1–4 गृध्राधिपतिं (for गृध्रं पतितं). Ñ1 राघवाश्रमे (for °श्रमात्). Ñ2 V1 B1.3.4 D5.7 दृष्ट्वा निपतितं तत्र (B1.3.4 भूमौ) शोणितार्द्रं विचेतनं (B4 °सं).—After 1, Ñ2 V1 B1.3.4 D5.7 ins.:

987* न्यस्य भूमौ च वैदेहीं सारथिं चावलोकयन् ।
पिशाचवदनांस्तांश्च रथं मायामयं च तम् ।
रावणश्छत्रधारं च बालव्यजनधारिणौ ।
निहतान्गृध्रराजेन सोऽपश्यद्धरणीतले ।

[(l. 1) V1 om. first च (subm.).—(l. 2) B1 तु (for first च).—(l. 3) Ñ2 तं (for च). B4 राज- (for बाल-).]

**2** G3 partly damaged for ᵃ.—ᵃ) Ś1 D2.3 सीता; B1 सापि (for सा तु). G2 -सुखं (for -सुखी). D1 निहतं पक्षिराजं च.—ᵇ) Ñ2 Dt1 D4.6 G1.3 M1 निरीक्ष्य तं; V1 B1.3.4 D5.7 परिक्षतं; D1 च वीक्ष्य तं (for समीक्ष्य तम्).—ᶜ) Ñ2 V1 B1.3.4 D5.7 निपतितं (for विनिहतं).—ᵈ) D6 सुदुःखितं (for °ता).—After 2, D8 (marg.) T1.2 G3 ins.:

988* आलिङ्ग्य गृध्रं निहतं रावणेन बलीयसा ।
विललाप सुदुःखार्ता सीता शशिनिभानना ।

[T2 G3 transp. the post. halves of l. 1 and 2.]

**3** ᵃ) Ñ2 B1 D7 G1 निमित्त- (for °त्तं). B3 D3.4 T1.2 लक्षणं ज्ञानं; Dt1 D6 Ck.t लक्षणं स्वप्नं; D2 लक्षणं ज्ञातं; G1 M3 लक्षणज्ञानां; Cv.r.m.g as in text (for लक्षणज्ञानं). Ś1 निमित्तलक्षणं ज्ञानं; Ñ1 निमित्तज्ञेन ***. ❀ Cv: अन्ये पुनर्निमित्तं लक्षणं ज्ञानं शकुनिस्वरदर्शनमिति पाठमङ्गीकृत्य एवं व्याचक्षते। निमित्तं गोमाय्वादिकं लक्षणमङ्गस्पन्दनादिकं ज्ञानं यदृच्छया तथा प्रतिभासः। अयं च नियमो गोबलीवर्दन्यायेनेति।; Ct: "लक्षणज्ञानम्" इति पाठेऽङ्गस्फुरणादिज्ञानमित्यर्थः. ❀—ᵇ) Ś1 ज्ञानिनां; Ñ2 V1 B1.3.4 D1–3.5.7 शा(V1 D1.7 श)कुनं; D4 शकुनिं (for शकुनि-). G3 damaged from दर्शनम् up to दुःखेषु in ᶜ. Ñ1 -स्वप्नदर्शिना; V1 D5.7 शुभदर्शनं; B1.3.4 D3 स्वप्नदर्शनं; Dg1 T3 G2 M1 -स्वनदर्शनं (for -स्वरदर्शनम्).—ᵈ) Ñ1 इह दृश्यते; Ñ2 Dt1 D6 Ct परिदृश्यते; V1 B1.3.4 Dm1 D5.7.8 T2 G3 M1.3 संप्र(B1 प्रत्य)दृश्यते; Cg.k as in text (for प्रतिदृश्यते).—After 3, Ñ2 V1 B1.3.4 D5.7 ins.:

989* त्वं हि तातो नरेन्द्रस्य राघवस्य महात्मनः ।
निधनं तव पक्षीन्द्र मत्कृते जातमीदृशम् ।
त्वं हि राजा दशरथो मिथिलाधिपतिः पिता ।
त्वं हि नाथो नरेन्द्रस्य राघवस्य महात्मनः ।
भवता पक्षपातेन राघवस्य महात्मना । [5]
कृतं युद्धं महाप्राज्ञ प्राप्तश्चान्तः सुदारुणः ।
जीवन्तीं योऽपि मां रामे ब्रूयाद्देवगतां सतीम् ।
स शेते निहतो भूमौ कालोऽयं मरणस्य मे ।

[(l. 1) Ñ2 V1 B4 D5.7 तात (for तातो). Ñ2 D5.7 यथा पिता (for महात्मनः). V1 B4 महद्व्यसनमागतः (for the post. half).—(l. 3) B3 च (for हि).—B3 reads l. 5 in marg.—(l. 5) Ñ2 D5.7 महात्मनः; B3 महामते (for महात्मना).—(l. 6) Ñ2 B4 D7 [अं]तं; D5 [अं]ते (for [अ]न्तः). Ñ2 D5.7 सुदारुणं (for °णः).—(l. 7) Ñ2 D5.7 मां च यो (for योऽपि मां).]

**4** ᵃ) B3 T1 नूनं राम न (by transp.); M1 राम राम न (for न नूनं राम). D8 जानीहि (for जानासि). Ñ2 B1.4 D5.7 T2 G2 M3 नूनं रामो न जानाति.—ᵇ) G2 महाव्यसनम्. Ñ2 V1 B1.3.4 D5.7 आगतं (for आत्मनः).—B1 om. 4ᶜᵈ.—ᶜ) Ś1 D3 तथैव; D1.2 तवैव (for धावन्ति). D4 T1.2 G M1.3 काकुत्स्थं (for °त्स्थ).—ᵈ) T2 मदर्थे (for मदर्थं). Ś1 D1–3 अनर्थाः सह(D1.2 संग [sic])चारिणः.—For 4ᶜᵈ, Ñ(Ñ1 partly illeg.) V1 B3.4 D5.7 subst.:

990* न चासौ तत्र काकुत्स्थो ह्यनर्थसहचारिणः ।

[V1 ह्यनर्थानिसंचारिणः; G(ed.) सञ्चयत्यत्र चारिणं (for the post. half).]

—After 4, Dg1 Dt1 Dm1 D4.6.8 S ins.:

991* अयं हि पापचारेण मां त्रातुमभिसंगतः ।
शेते विनिहतो भूमौ ममाभाग्याद्विहंगमः ।

[(l. 1) G1 तु (for हि). Dg1 D4 G1.3 M3 पापाचारेण; Dt1 D6 कृपया राम; Cm.g as above (for पापचारेण). Dg1 Dt1 D6 T3 इह संगतः; T3 अभिगच्छति (for अभिसंगतः).

G. 3. 62. 27
B. 3. 56. 22
L. 3. 62. 22

एवमुक्त्वा तु वैदेही क्रोधात्सुपरुषं वचः ।
रावणं मैथिली तत्र पुनर्नोवाच किंचन ॥ २०
सीताया वचनं श्रुत्वा परुषं रोमहर्षणम् ।
प्रत्युवाच ततः सीतां भयसंदर्शनं वचः ॥ २१
शृणु मैथिलि मद्वाक्यं मासान्द्वादश भामिनि ।
कालेनानेन नाभ्येषि यदि मां चारुहासिनि ।
ततस्त्वां प्रातराशार्थं सूदाश्छेत्स्यन्ति लेशशः ॥ २२
इत्युक्त्वा परुषं वाक्यं रावणः शत्रुरावणः ।
राक्षसीश्च ततः क्रुद्ध इदं वचनमब्रवीत् ॥ २३
शीघ्रमेव हि राक्षस्यो विकृता घोरदर्शनाः ।
दर्पमस्या विनेष्यन्तु मांसशोणितभोजनाः ॥ २४
वचनादेव तास्तस्य विकृता घोरदर्शनाः ।
कृतप्राञ्जलयो भूत्वा मैथिलीं पर्यवारयन् ॥ २५

---

Ś1 Dg1 नि:शंकं ( for नि:संज्ञं ). Ñ1 निसर्गवचनं ( for शरीरं नि:संज्ञं ). —$^{b}$ ) Ś1 T3 बद्धा ( for बन्ध ). G3 बद्धस्व; M2 बंधीय ( sic ) ( for बन्ध वा ). Ś1 D1–3 पाटयस्व; Dg1 T Cg खाद( T3 °त )यस्व; G3 M2 [ आ ]घातयस्व ( for घात° ). D6 च ( for वा ). Ñ2 B1.3.4 D5.7 भक्ष्यतां पीड्यतामपि( B1 पीयतामिति; B4 पाट्यतामिति ). —After $19^{ab}$, D3 ins. :

1075* तिलशः क्रियतां वापि वह्निं तर्पय वायस ।
राक्षसाणां कुलं शीलं धर्मं धैर्यं यशस्तथा ।

—D3 cont.; while Ś1 Ñ B1 D1.2.4.5.7 ins. after $19^{ab}$ :

1076* वर्तामि विषये तेऽहमिह क्रोधो विधीयताम् ।

[ Ś1 D1.2 वर्तेहं( D2 °यं ); D4 वर्तते ( for वर्तामि ). Ś1 D1.2 तेद्य; D3 [ s ]हं ते ( by transp. ); D4 तस्मिन् ( for तेऽहम् ). Ś1 D1–3 मयि क्रोधो विनीयतां ( for the post. half ). Ñ1 तिष्ठामि वचने तेहमिति कोपो विनीयतां. ]

—$^{c}$ ) B1 D3 रक्षामि; T1.2 रक्षिष्ये ( for रक्ष्यं मे ). —$^{d}$ ) B1.4 Dg1 Dm1 D1.3.7.8 चापि ( for वापि ). Ś1 Ñ B1.4 D1–3.5.7 रावण ( for राक्षस ). —Dg1 reads $19^{ef}$ in marg. —$^{e}$ ) B1 न च; B4 Dt1 D3.4.6.8 G1 M2 न तु; Dm1 ननु ( for न हि ). Ñ2 B1.3.4 D5.7 शक्नोमि ( for शक्ष्यामि ). G3 तमशक्ष्यामि ( sic ). M3 reads *inf. lin. sec. m.* न तु श in न तु शक्ष्यामि. Ś1 [ अ ]हं क्रोशं; Ñ1 D7 [ उ ]पाक्रोशं; B3.4 Dt1 Dm1 D6.8 G3 Cv.t [ अ ]पक्रोशं; D2 [ अ ]वक्रोशं; M1 [ अ ]पाक्रोशं ( for [ उ ]पक्रोशं ). —$^{f}$ ) Ś1 इह चात्मना; D2 इदमात्मनः; D3 कर्तुमात्मनः; L( ed. ) अहमात्मना ( for दातुमात्मनः ). D1 तं निदेशान्महात्मनः.

20 V1 om. 20 ( cf. v.l. 10 ). —$^{a}$ ) Ñ1 partly illeg. —$^{b}$ ) Ś1 तत्परुषं; Ñ2 D5.7 सा परुषं; D1.2 तं प( D2 °पु )रुषं. —$^{c}$ ) Dt1 D6 जानकी ( for मैथिली ). Ñ1 प्रोच्य ( for तत्र ). Ś1 D1.2 राक्षसश्रेष्ठं ( for मैथिली तत्र ). —$^{d}$ ) Ś1 Ñ2 B1.3.4 D1–3.5.7 ततो ( for पुनर् ). ❀ Cg : एवमुक्त्वेति । तत्र तद्विषये । क्रियाभेदात् पुनर्मैथिलीशब्दप्रयोगः. ❀

21 V1 om. 21 ( cf. v.l. 10 ). Ś1 D1.2 om. $21^{ab}$. D3 reads $21^{ab}$ after 22. —$^{a}$ ) Ñ1 सीतायास्तु वचः; Ñ2 B1.3.4 D3.5.7 स सीताया वचः ( for सीताया वचनं ). —$^{b}$ ) Ñ2 B3.4 D3.5.7 लोमहर्षणं. —Ñ1 M3 om. $21^{c}$–$23^{b}$. —$^{cd}$ ) Ś1 D1–3 सभयं दर्शयन्वचः ( for $^{d}$ ). Ñ2 B1.3.4 D5.7 रावणः क्रोधरक्ताक्ष इदं वचनमब्रवीत्. —After 21, B1.3.4 read $24^{ab}$.

22 Ñ1 V1 M3 om. 22 ( cf. v.l. 10 and 21 ). Ñ2 B1 D5.7 om.( hapl. ) 22–23. B4 om. $22^{a-d}$. —$^{a}$ ) Dg1 D4 G1 मे ( for मद्- ). —$^{b}$ ) Ś1 D2 मासद्वादशकेन वै. —$^{c}$ ) Ś1 D2 [ अ ]न्येन ( for [ अ ]नेन ). —$^{d}$ ) G1 त्वं ( for मां ). Dg1 चारुभाषिणि ( for °हासिनि ). —$^{e}$ ) Ś1 D2 सत्वराः सर्वे; D1 °शार्थे; D3 प्राशनार्थं मे ( for प्रातराशार्थं ). —$^{f}$ ) D4 छेद्यंति ( for छेत्स्यन्ति ). Dg1 लेशतः. Ś1 D1.2 तदा छेत्स्यंति खंडशः; D3 तदा भक्ष्यं भविष्यति. —After 22, D3 reads $21^{ab}$.

23 Ñ2 V1 B1.4 D2.5.7 om. 23 ( for Ñ2 B1 D5.7 and V1, cf. v.l. 22 and 10 respy. ). Ñ1 D3 M3 om. $23^{ab}$ ( for Ñ1 M3, cf. v.l. 21 ). —$^{c}$ ) Ñ1 M3 रावणः परमक्रोधाद्( M3 °क्रुद्ध ). —$^{d}$ ) Ñ1 प्रतिहारीमथाब्रवीत् . —For 23, Ś1 D1 subst.; D3 subst. l. 2 only for $23^{cd}$ :

1077* स राक्षसान्समीपस्थान्क्रूरकर्मा निशाचरः ।
रावणः परमक्रोधादिदं वचनमब्रवीत् ।

24 V1 om. $24^{ab}$ ( cf. v.l. 10 ). B1.3.4 read $24^{ab}$ after 21. —$^{a}$ ) D6 एवं ( for एव ). M1 तु ( for हि ). Ñ2 B1.3.4 D5.7 आयांतु ( for एव हि ). Ś1 D1.2 आनयत क्षुद्रा ( Ś1 क्रुद्धा ) ( for एव हि राक्षस्यो ). Ñ1 राक्षसीरानय क्षिप्रं. —$^{b}$ ) Ś1 D1.2 राक्षसीर्( D1 °स्यो ); Ñ1 विक्रांता; Ñ2 Dg1 Dt1 Dm1 D6.8 T3 विरूपा ( for विकृता ). —D6 reads $24^{c}$–$25^{b}$ after $26^{ab}$. —$^{c}$ ) Ñ2 B3.4 D5 Cv विनेष्यंति; Dg1 D4 G2 M3 Cm.g विनेष्यध्वं; Dt1 Dm1 D6.8 T1.2 G1 Ck.t [ अ ]पनेष्यंतु ( for विनेष्यन्तु ). Ś1 D1.2 अस्या दर्पं विनेष्यंति; D3 अस्या दर्पमपास्यंतु.

25 D6 reads $24^{c}$–$25^{ab}$ after $26^{ab}$ ( cf. v.l. 24 ). —$^{ab}$ ) Ś1 D1–3 तस्यैव ( for तास्तस्य ). Dt1 D6 सुघोरा( D6 reads °घोरा in marg. ) ( for विकृता ). Ś1 D1–3 सुघोरो राक्षसीगणः; T1.2 M3 सुघोरा राक्षसीगणाः ( for $^{b}$ ). Ñ1 प्रतिहारी समाज्ञप्ता समानिन्ये च राक्षसीः. —For $25^{ab}$, Ñ3 V1 B1.3.4 D5.7 subst. :

1078* आगतो वचनादेव तस्यासौ राक्षसीगणः ।

[ B3 एवं ( for एव ). B1 तस्यार्थे ( for °सौ ). ]

स ताः प्रोवाच राजा तु रावणो घोरदर्शनः ।
प्रचाल्य चरणोत्कर्षैर्दारयन्निव मेदिनीम् ॥ २६
अशोकवनिकामध्ये मैथिली नीयतामिति ।
तत्रेयं रक्ष्यतां गूढं युष्माभिः परिवारिता ॥ २७
तत्रैनां तर्जनैर्घोरैः पुनः सान्त्वैश्च मैथिलीम् ।
आनयध्वं वशं सर्वा वन्यां गजवधूमिव ॥ २८

इति प्रतिसमादिष्टा राक्षस्यो रावणेन ताः ।
अशोकवनिकां जग्मुर्मैथिलीं परिगृह्य ताम् ॥ २९
सर्वकामफलैर्वृक्षैर्नानापुष्पफलैर्वृताम् ।
सर्वकालमदैश्चापि द्विजैः समुपसेविताम् ॥ ३०
सा तु शोकपरीताङ्गी मैथिली जनकात्मजा ।
राक्षसीवशमापन्ना व्याघ्रीणां हरिणी यथा ॥ ३१

G. 3. 62. 37
B. 3. 56. 34
L. 3. 62. 34

—$^{c}$) Ś1 Ñ1 D5.7 प्रांजलिर्वं( Ñ1 °ल्यो व )र्धयित्वा तु; Ñ2 D1-3 प्रांजलिर्बद्ध( D1 °बंध; D2 °वेंष्ट )यित्वा तु( D3 तं ); V1 B1.3.4 प्रांजलिर्बद्( B4 °लिं बद्ध )यित्वा तु( V1 B1 च ); L( ed.) अंजलिं बंधयित्वा तु. —$^{d}$) Dm1 D8 G1.3 जानकीं ( for मैथिलीं ). —After 25, Ñ2 V1 B1.3.4 D5.7 ins. :

1079* घोरबीभत्सरूपाणां राक्षसीनां महागणः ।
समन्ततो रक्ष्यमाणस्तां सीतां पर्यवारयत् ।
निःश्वासा राक्षसीनां तु कम्पयन्ति नभस्तलम् ।
भीषणाश्चरणाकम्पैः कम्पयन्तीव मेदिनीम् ।

[ B1 om. l. 1-2. —( l. 2 ) Ñ2 V1 D7 रक्षमाणः ( for रक्ष्यमाणस् ). Ñ2 D5.7 सीतां तां ( by transp. ). —( l. 4 ) Ñ2 D5.7 भीषणैश् ( for भीषणाश् ). B1 -[ आ ]घातैः ( for -[ आ ] कम्पैः ). ]

26 $^{a}$) Dm1 D8 तां ( for ताः ). D4 G1 M2 चोवाच ( for प्रोवाच ). Dg1 Dt1 D6 T1.3 G2 [ अ ]सौ ( for तु ). —$^{b}$) Dg1 Dt1 Dm1 D4 T2.3 G1.2 M1.3 घोरदर्शना: ( for °नः ). —For $26^{ab}$, Ś1 D1-3 subst. :

1080* ताश्चोवाच स दुष्टात्मा राक्षसी राक्षसाधिपः ।

[ Ś1 ( before corr. as above ) सुदुष्टात्मा; D3 स राक्षस्यो ( for स दुष्टात्मा ). D1.3 रावणो ( for राक्षसी ). ]

—After $26^{ab}$, D6 reads $24^{c}$–$25^{b}$.

—$^{c}$) Dt1 D6 Ct प्रचल्य; D8 प्रचार्य ( for प्रचाल्य ). Ś1 D1.2 संरब्धश्चरणोत्कंपैर् ( Ś1 °त्क्षेपैर् ); D3 प्रकोपाच्चरणोत्क्षेपैर्. —$^{d}$) Ś1 पूरयन् ( for दारयन् ). —For 26, Ñ V1 B1.3.4 D5.7 subst. :

1081* उवाच राक्षसीस्ताश्च स्फुरमाणाधराननाः ।

[ Ñ1 तास्तु; V1 तत्र ( for ताश्च ). Ñ1 रावणो राक्षसाधिपः ( for the post. half ). ]

27 $^{a}$) Ś1 Ñ V1 B1.3.4 D1-3.5.7 -वनिकामेव( Ñ1 °कामेषा; D3 °कां चैव ). —$^{b}$) Dg1 Dm1 D8 T G3 M1.3 इयं ( for इति ). Ś1 D1.2 नयित्वा मैथिलीमिमां; D5 मैथिलीं यत्यतामिति. —Ñ2 V1 B1.3.4 D5.7 transp. $27^{cd}$ and $28^{ab}$. —$^{c}$) M1 [ इ ]दं ( for [ इ ]यं ). Dt1 रक्ष्यसा ( corrupt ) ( for रक्ष्यतां ). Ś1 D1.2 गुप्तां ( for गूढं ). Ñ2 V1 B1.3.4 D5.7 तत्रैव( B1 °त्रेयं ) वसतां( B4 °तीं ) चापि ( V1 चैव ). —$^{d}$) Ñ2 V1 B1.3.4 Dg1 D5.7 G1 परिपालिता.

28 Ñ2 V1 B1.3.4 D5.7 transp. $27^{cd}$ and $28^{ab}$. —$^{a}$) Ś1 D2 तथा च; Ñ2 V1 B3.4 D5.7 तत्रेमां; Cmp as in text ( for तत्रैनां ). D1 तथा संतर्जनैर्घोरैः. —$^{b}$) D3 सांत्वेन ( for सान्त्वैश्च ). Ñ2 V1 B1.3.4 D5.7 योक्ष्यथ( B4 °से ) ( for मैथिलीम् ). —B3 reads $28^{cd}$ in marg. —$^{c}$) G2 वनं ( sic ) ( for वशं ). B1 D4 सीतां ( for सर्वा ). Ś1 D1.2 मम वशे; Dm1 D8 हि विवशां ( for वशं सर्वा ).

29 $^{a}$) V1 प्रतिसमादष्टा; D1 प्रविसमादिष्टा. —$^{b}$) D1 रावणे कृतं ( sic ) ( for रावणेन ताः ). —D6 erroneously reads $31^{b}$ in place of $29^{d}$ and after corr. reads $29^{d}$ to 31 ( followed by 1084* ) in marg. —$^{d}$) Ñ1 B4 T1.2 G2 M1 Cg प्रतिगृह्य ( for परि° ). Dt1 D4.6 T1.2 G1.3 M1 तु; Dm1 D8 ताः; G2 वै ( for ताम् ). M3 जनकात्मजां ( for परिगृह्य ताम् ) M2 परिगृह्य तु मैथिलीं. —After 29, D6 reads l. 2 of 1084* for the first time, repeating it in its proper place.

30 D6 reads 30 in marg. ( cf. v.l. 29 ). —$^{a}$) B1 -कामप्रदैर् ; Dg1 -कामदुघैर् ; D6 G2 -कालफलैर् ; Cmp as in text ( for -कामफलैर् ). —$^{b}$) G3 नित्य- ( for नाना- ). Dg1 युतैः ( for वृताम् ). Ś1 Ñ1 D1.2 नानापुष्पैः( Ñ1 °मृग ) समायुतां( D1.2 °वृतां ); D3 नानापुष्पघै*तां. —After $30^{ab}$, Ñ2 V1 B1.3.4 D5.7 ins. :

1082* दिव्यगन्धैः सुगन्धैश्च कुसुमैः सर्वतो वृताम् ।

[ V1 B3 च कुसुमैः सुगंधैः ( by transp ). B3 युताम्. ]

—Ś1 om. $30^{cd}$. —$^{c}$) Ñ1 illeg. for सर्वकालमदै. Ñ B1.4 D5 [ ए ]व ( for [ अ ]पि ). V1 D7 -कालनदै( D7 °मयै )श्चैव; B3 -कामप्रदैश्चैव ( for -कालमदैश्चापि ). —$^{d}$) D1-3 समुपनादि( D3 °शोभि )तां ( for °सेविताम् ). Ñ1 नानापक्षि* * * * ( illeg. ); Ñ2 V1 B1.3.4 D5.7 नानापक्षिभिरावृतां. —After 30, Ñ2 V1 B1.3.4 D5.7 ins. :

1083* महारससुसंवीतैः सलिलैश्च ततस्ततः ।

[ B3 सुसमावृतां; D5 च समंततः ( for च ततस्ततः ). ]

31 D6 reads 31 in marg. ( cf. v.l. 29 ). —$^{a}$) M1 [ अ ]पि ( for तु ). —G3 om. ( hapl. ) from $31^{c}$ up to l. 1 of 1084*. Ñ V1 B1.3.4 D5.7 राक्षसीनां वशं प्राप्ता. —$^{d}$) D1.5 व्याघ्राणां ( for व्याघ्रीणां ). ॐ Cg : राक्षसील्यविभक्तिकनिर्देशः राक्षसीनामित्यर्थः. ॐ —After 31, Dg1 Dt1 Dm1 D4.6.8 S ins. :

G. 3. 62. 38
B. 3. 56. 36
L. 3. 62. 33

न विन्दते तत्र तु शर्म मैथिली
विरूपनेत्राभिरतीव तर्जिता ।
पतिं स्मरन्ती दयितं च देवरं
विचेतनाभूद्भयशोकपीडिता ॥ ३२

इति श्रीरामायणे अरण्यकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

## ५५

राक्षसं मृगरूपेण चरन्तं कामरूपिणम् ।
निहत्य रामो मारीचं तूर्णं पथि न्यवर्तत ॥ १
तस्य संत्वरमाणस्य द्रष्टुकामस्य मैथिलीम् ।
क्रूरस्वरोऽथ गोमायुर्विननादास्य पृष्ठतः ॥ २
स तस्य स्वरमाज्ञाय दारुणं रोमहर्षणम् ।
चिन्तयामास गोमायोः स्वरेण परिशङ्कितः ॥ ३
अशुभं बत मन्येऽहं गोमायुर्वाश्यते यथा ।
स्वस्ति स्यादपि वैदेह्या राक्षसैर्भक्षणं विना ॥ ४

1084* शोकेन महता ग्रस्ता मैथिली जनकात्मजा ।
न शर्म लभते भीरुः पाशबद्धा मृगी यथा ।

[ D4 G1.3 M1.2 om. l. 1. —(l. 1) Dt1 Dm1 D6.8 त्रस्ता; M3 [ आ ]विष्टा ( for ग्रस्ता ). —D6 reads l. 2 for the first time after 29. —(l. 2) M2 लेभे सा ( for लभते ). ] —After 31, D1 ins. :

1085* एका सा देवताभर्ता राम रामेति भाषया ।

32 [a]) Ñ1 बिभेति सा ( for न विन्दते ). Ñ1 illeg. for त्र तु शर्म मैथिली. D3 G2 M1 च ( for तु ). B1 D1 शर्म तु तत्र ( by transp. ). —[b]) Ñ1 illeg. from तर्जिता up to स्मर in [c]. Ś1 D1-3 रक्षिता; L( ed. ) वीक्षिता ( for तर्जिता ). Ñ2 V1 B1.3.4 D5.7 विरूपनेत्राभिरुपेत्य रक्षिता( B3 दुःखिता ); G( ed. ) विरूपरूपाभिरुपेत्य तर्जिता. —[c]) D3 यदि तं ( for दयितं ). Dg1 T2.3 च( T3 हि ) दैवतं; Dm1 D8 सलक्ष्मणं; G2.3 M1.2 च राघवं ( for च देवरं ). —[d]) Ñ1 हृदि ( for भय- ). Ś1 D1.2 विचेतना क्षुद्भय-; Ñ2 V1 B1.3.4 D5.7 विनिश्वसंती भय-.

Colophon. —*Sarga name* : Ś1 D1.2 सीतातर्जनं; Ñ1 रावणप्रतिषेधः; Ñ2 D5.7 सीतारक्षणं; V1 सीताहरणं; B1 सीताविवृत्तिदर्शनं; B3.4 अशोकवनिकाप्रवेशः; D3 रावणप्रत्यागमनं. —*Sarga no.* ( figures, words or both ) : Ś1 Ñ1 B1.3 D2 om.; Ñ2 V1 D5.7 62; B4 D3 63; Dg1 Dt1 Dm1 D6.8T G M1.2 56; D1.4 59; M3 57. —After colophon, G1.2 conclude with श्रीरामाय नमः.

### 55

☞ Before Sarga 55, Ś1 Ñ2 B1.3.4 Dt1 D1-3.5-7 ins. a passage which is relegated to App. I ( No. 12 ). V2 illeg. for 55 ( cf. v.l. 3.53.1 ). D8 begins with ॐ; T2 with श्रीरामचन्द्राय नमः; M1 with श्रीरामाय नमः.

1 [c]) V1 निवर्त्य ( for निहत्य ). —[d]) Ś1 D1.2 तूर्णमेव; Ñ2 V1 B1.3.4 D5.7 अथारण्यान् ; Dg1 T3 पथि तूर्णं ( by transp. ); D3 G3 M3 तूर्णं प्रति- ( for तूर्णं पथि ). Dt1 D3.6.8 M2.3 निवर्तत; Dm1 T1.2 G Cg.k निवर्तते ( for न्यवर्तत ). —After 1, Ñ1 ( partly illeg. ) ins. :

1086* * * * * * * * न शङ्कमानोऽथ तत्स्वरम् ।
* * * * * * * * * * रामो प्रति * * ।

2 [a]) M3 हि ( for सं- ). —[b]) M3 द्रष्टुं रामस्य ( for द्रष्टुकामस्य. —[cd]) Ś1 Ñ1 D6 T1.2 -स्वनो ( for -स्वरो ). Ś1 D2 [ आ ]शु; D1 [ अ ]थ; T3 स ( for [ अ ]स्य ). Ñ2 V1 B1.3.4 D5.7 क्रूरस्वरो( Ñ2 °नो ) भय( G[ ed. ]°यं )करो गोमायुः पृष्ठतोनदत् .

3 [a]) Ñ1 आकर्ण्य ( for आज्ञाय ). Ś1 D1-3 स तं( D3 तत् ) स्वरं समाज्ञाय; B3 तस्याः स्वरं समाज्ञाय; Dm1 D8 तस्य स्वरमथालक्ष्य; G3 M3 तस्य स स्वरमालक्ष्य( M3 °ज्ञाय ). —[b]) Ñ2 V1 B1.3.4 व्याहृतं; D5.7 विकृतं; M3 करुणं ( for दारुणं ). Ś1 Ñ2 V1 B4 D1-3.5.7 लोम- ( for रोम- ). —[c]) Ś1 Ñ1 D1-3 G2.3 M( M1 also as in text ) Cvp एकः प्रोवाच; Ñ2 V1 B1.3.4 Dm1 D5.7.8 रामः प्रोवाच; Dt1 D6 शंकयामास ( for चिन्तयामास ). Ś1 D1 M3 गोमायु- ( for गोमायोः ). ❀ Cv : चिन्तयामास गोमायोरिति सम्यक् । एकः प्रोवाचेति पाठे स्वगतमिति बोध्यम् . ❀ —B4 om. from परि in 3[d] up to 5[c]. —[d]) Dt1 G1 -शंकितं.

4 B4 om. 4 ( cf. v.l. 3 ). —[a]) Ś1 D1-3 घोरोयं; Ñ2 V1 B1.3 D5.7 रूक्षोयं ( for मन्येऽहं ). Ñ1 अशुभं बहुदुःखोयं. —[b]) Ś1 Ñ B1.3 Dt1 D2.5-7 Cm.t वाशते; D1 वसिते ( sic ); D3 वासतो ( sic ) ( for वाश्यते ). Ñ2 तथा ( for यथा ). —After 4[ab], B3 ins. :

1087* शङ्कितो राघवस्तत्र वचनं त्विदमब्रवीत् ।

—Ñ1 partially illeg. for [c]. —[c]) B1 Dg1 Dm1 D3 T3 G2 M3 अथ ( for अपि ). B3 D5.7 वैदेहै. —[d]) D1 लक्ष्मणं;

मारीचेन तु विज्ञाय स्वरमालक्ष्य मामकम् ।
विक्रुष्टं मृगरूपेण लक्ष्मणः शृणुयाद्यदि ॥ ५
स सौमित्रिः स्वरं श्रुत्वा तां च हित्वाथ मैथिलीम् ।
तयैव प्रहितः क्षिप्रं मत्सकाशमिहैष्यति ॥ ६
राक्षसैः सहितैर्नूनं सीताया ईप्सितो वधः ।
काञ्चनश्च मृगो भूत्वा व्यपनीयाश्रमात्तु माम् ॥ ७
दूरं नीत्वा तु मारीचो राक्षसोऽभूच्छराहतः ।
हा लक्ष्मण हतोऽस्मीति यद्वाक्यं व्याजहार ह ॥ ८
अपि स्वस्ति भवेद्वाभ्यां रहिताभ्यां मया वने ।
जनस्थाननिमित्तं हि कृतवैरोऽस्मि राक्षसैः ।
निमित्तानि च घोराणि दृश्यन्तेऽद्य बहूनि च ॥ ९ G. 3. 64. o B. 3. 57. 10 L. 3. 64. o

D6 भक्षणैर्; T2 भक्षितं; G2 हरणं (for भक्षणं). Ś1 Ñ2 V1 B1.3 D2.3.5.7 रक्षोभ्यो लक्ष्मणं (B1 रक्षणं) विना (D5 यथा).

5 B4 om. $5^{abc}$ (cf. v.l. 3). —$^{a}$) Ś1 D1.2 राक्षसेन (for मारीचेन). Ś1 Ñ V1 B1.3 D1-3.5.7 हि (for तु). —$^{b}$) Ś1 Ñ2 V1 B1.3 D1-5.7 G3 M2 Cg आलंब्य (for आलक्ष्य). —$^{c}$) Ś1 विक्रुष्टे; Ñ B1.3 D5.7 प्र (Ñ1 प्रा) क्रुष्टं; Dg1 T3 आक्रुष्टं; D1.3 आघुष्टं (for विक्रुष्टं). —$^{d}$) Ś1 Ñ V1 B1.3.4 D1.2.5.7 इति (for यदि).

6 $^{a}$) Ñ2 V1 B1.3.4 D5.7 तं (for स). D7 स्वयं (for स्वरं). B4 G2 ज्ञात्वा (for श्रुत्वा). —$^{b}$) Ś1 D1-3 तत्र; Ñ1 तस्मिन् (for तां च). Ś1 D1-3 T3 च; T1.2 तु; M3 [अ]पि (for [अ]थ). Ñ2 V1 B1.3.4 D5.7 व्यक्तं हित्वैव मैथिलीं. —After $6^{ab}$, Ñ2 V1 B1.3.4 D5.7 ins.:

1088* स्वरमाकर्ण्य संतप्तो भविष्यति विचेतनः ।
असहन्ती च विक्रुष्टं स्नेहात्पिहितमानसा ।
विवशं लक्ष्मणं सीता प्रेषयिष्यति विक्लवा ।

[(l. 2) D5.7 [इ]व (for च). B1 संक्रुष्टं (for वि°). Ñ2 B4 स्नेहापिहित-; D5.7 स्नेहोपहित-. —(l. 3) B3 अवशं (for विवशं). B4 विक्लवात्; G(ed.) विह्वला.]

—$^{c}$) Ś1 वा सहितः; Ñ1 वा प्रेषितः; D1 प्रवाहितः; D2.3 वा प्रहितः; L(ed.) [अ]पवाहितः; Cg [ए]व प्रेषितः (for [ए]व प्रहितः). —$^{d}$) Ñ1 -समीपम् (for -सकाशम्). —For $6^{cd}$, Ñ2 V1 B1.3.4 D5.7 subst.:

1089* तया च प्रेषितः क्षिप्रं मत्समीपं प्रतापवान् ।
नूनमेष्यति सौमित्रिः सीतावाक्यप्रचोदितः ।

[(l. 1) Ñ2 D5.7 प्रेरितः (for प्रेषितः). —(l. 2) V1 सीतया च प्रदेशितः (for the post. half).]

7 $^{ab}$) D1 स हतो; D3 सहितो (for सहितैर्). Ś1 D2 राक्षसेन हतो नूनम् (for $^{a}$). —Ñ1 illeg. from या in $^{b}$ up to स्वर in 1090*. M3 सीतायाम् (for °या). D4 वध ईप्सितः (by transp.). Ś1 D1-3 आख्यातः सीतया तदा (D3 सह) (for $^{b}$). Ñ2 V1 B1.3.4 D5.7 नूनं रहसि रक्षोभिर्मैथिल्याश्रितितो वधः. —After $7^{ab}$, Ś1 Ñ1 D1-3 ins.:

1090* राक्षसेन मम क्रोधात्स्वरमावेदितं मया ।

[Ñ1 illeg. up to स्वर. Ñ1 D1 आविदितं यथा (D1 तयोः). L(ed.) स्वर आवेदितस्तयोः (for the post. half).]; while Ñ2 V1 B1.3.4 D5.7 ins.:

1091* मारीचेन तथोत्क्रुष्टं स्वरमालक्ष्य मामकम् ।

[V1 स्वरमार्गं च (for °लक्ष्य).]

—After $7^{ab}$, the sequence up to st. 10 in Ñ1 is 1090*, $10^{ab}$, $9^{cd}$, $10^{cd}$, $7^{c}$, $8^{bcd}$, $10^{ef}$ (illeg. for $10^{e}$) 1097*, $9^{ab}$.

—Before $7^{c}$, Ś1 Ñ2 V1 B1.3.4 D1-3.5.7 read 10. —$^{c}$) Ś1 रावणस्य; Ñ1 कांचनोयं; D1-3 राजतश्च; G(ed.) कांचनः स (for काञ्चनश्च). —Ś1 Ñ V1 B1.3.4 D1-3.5.7 om. $7^{d}$-$8^{a}$.

8 For sequence in Ñ1, cf. v.l. 7. Ś1 Ñ V1 B1.3.4 D1-3.5.7 om. $8^{a}$ (cf. v.l. 7). —$^{a}$) Dt1 D4.6 T1 [अ]थ; M1 च (for तु). —$^{b}$) Ś1 D2 यच्च; L(ed.) मच्च (for ऽभूच्च). —Ñ2 illeg. for र ह in $^{d}$ up to रक्षो in the prior half of l. 1 of 1092*. —$^{d}$) G2 हा; M1 सः (for ह). Ś1 D1-3 चेदमब्रवीत्; Ñ1 illeg. (for व्याजहार ह). —After 8, Ś1 Ñ2 V1 B1.3.4 D1-3.5.7 ins.:

1092* तेन शब्देन रक्षोभिर्लब्धं हि ध्रुवमन्तरम् ।
एतद्दृष्ट्वा महाघोरं निमित्तं लोमहर्षणम् ।
सीतामेव जनस्थाने जगाम मनसा प्रियाम् ।

[Ñ2 illeg. up to रक्षो in the prior half. Ś1 D1-3 om. l. 1. —(l. 1) D5 लब्ध्वा (for लब्धं). B3 च (for हि). —G(ed.) om. l. 2-3. —(l. 2) D1 स तद् (for एतद्). Ś1 D1-3 महदद्भुतं (for लोमहर्षणम्). —(l. 3) D2 -स्थानं (for -स्थाने).]

—while G2 ins.:

1093* लक्ष्मणस्तद्वचः श्रुत्वा मत्सकाशमिहैष्यति ।

[The post half = $6^{d}$.]

9 For sequence in Ñ1, cf. v.l. 7. —$^{a}$) Ś1 Ñ1 Dm1 D1-3.8 T1.2 ताभ्यां; Ñ2 V1 B1.3.4 D5.7 तस्यैः Dt1 वतयं (sic) (for द्वाभ्यां). —$^{b}$) Ñ2 V1 B1.3.4 D5.7 रहितायै (for °ताभ्यां). Ś1 Ñ2 B1.3.4 Dg1 D5.7 T G2 महावने; Ñ1 मया विना; D1-3 वने मया (by transp.) (for मया वने). —$^{c}$) Dt1 D6 जनस्थानं (for °स्थान-). G3 वै; Ct च (for हि). —$^{d}$) D3 हि (for ऽस्मि). —After $9^{cd}$, Ś1 Ñ2 V1 B1.3.4 D1-3.5.7 ins.; while Ñ1 ins. after $9^{ab}$; whereas Dg1 T ins. after $12^{ab}$:

1094* इति सीतां वरारोहां लक्ष्मणं च महाबलम् ।
आजगाम जनस्थानं चिंतयन्नेव राघवः ।

G. 3. 64. 10
B. 3. 57. 10
L. 3. 64. 8

इत्येवं चिन्तयन्रामः श्रुत्वा गोमायुनिःस्वनम् ।
आत्मनश्चापनयनं मृगरूपेण रक्षसा ।
आजगाम जनस्थानं राघवः परिशङ्कितः ॥ १०
तं दीनमानसं दीनमासेदुर्मृगपक्षिणः ।
सव्यं कृत्वा महात्मानं घोरांश्च ससृजुः स्वरान् ॥ ११
तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः ।
ततो लक्ष्मणमायान्तं ददर्श विगतप्रभम् ॥ १२
ततोऽविदूरे रामेण समीयाय स लक्ष्मणः ।
विषण्णः स विषण्णेन दुःखितो दुःखभागिना ॥ १३
संजगर्हेऽथ तं भ्राता ज्येष्ठो लक्ष्मणमागतम् ।
विहाय सीतां विजने वने राक्षससेविते ॥ १४
गृहीत्वा च करं सव्यं लक्ष्मणं रघुनन्दनः ।
उवाच मधुरोदर्कमिदं परुषमार्तवत् ॥ १५

[ Dg1 T transp. l. 1 and 2 ( Dg1 T3 l. 2 followed by 1095* ). —( l. 1 ) Ñ1 सैवं सीतां; Dg1 सीतां न तु; T सीतां स तु ( for इति सीतां ). D2 स ( for च ). —G( ed. ) om. l. 2. —( l. 2 ) Ś1 आजगामाश्रमं तत्र; Ñ1 निवर्तस्व नस्त्वरितश् ( for the prior half ). Ñ1 चिंतयामास ( for °यन्नेव ). ]

—Threafter T1.2 repeat 1095*.

Ś1 Ñ V1 B1.3.4 D1–3.5.7 om. $9^{ef}$. —$^{f}$ ) Dm1 D8 G1.3 M1 [ अ ]त्र; M2 सु- ( for ऽद्य ).

10 For sequence in Ñ1, cf. v.l. 7. Ś1 Ñ2 V1 B1.3.4 D1–3.5.7 read 10 before $7^{c}$. —$^{a}$ ) Ś1 इत्येव; Ñ1 तथा हि; Ñ2 V1 B1.3.4 D5.7 इतीव ( for इत्येवं ). Ñ1 B1 D5 [ अ ]-चिंतयन् ( for चिन्तयन् ). —$^{b}$ ) Ś1 B4 D1–3 -भाषितं; Ñ V1 B1.3 D5.7 -वाशितं; Dm1 D4.6.8 G M -निस्वनं ( for -निःस्वनम् ). —After $10^{ab}$, Ś1 Dt1 Dm1 D1–3.6.8 ins.; while Dg1 T3 ins. after l. 2 of 1094*; T1.2 ( both repeat [ var. ] after 1094* ) M1 ins. after $10^{cd}$; whereas G3 ins. after $12^{ab}$ :

1095* निवर्तमानस्त्वरितो जवेनाश्रममात्मनः ।

[ Dg1 T ( T1.2 second time )न्यवर्तताथ ( for निवर्तमानस् ). T1.2 ( both first time ) G3 त्वरया ( for त्वरितो ). K( ed. ) जगाम ( for जवेन ). Dt1 Dm1 D6.8 आत्मवान् . ]

—After $10^{ab}$, Ñ2 V1 B1.3.4 D5.7 ins. :

1096* न्यवर्तत तदा रामो जवेनाश्रममण्डलम् ।

[ V1 ततो ( for तदा ). Ñ2 [ आ ]श्रममात्मवान् . ]

—$^{c}$ ) Ñ1 illeg.; B1 [ ए ]व नयनं; Dg1 D4 T M2 Cvp.m.g [ अ ]पनयनान् ; D1 [ अ ]प्यपनयं; M1 [ अ ]पि नयनान् ( for [ अ ]पनयनं ). —Ñ1 illeg. for $10^{e}$. —$^{f}$ ) Ś1 D1–3 राक्षसैः; V1 B1.3.4 D5.7 चिंतयन् ( for राघवः ). Ñ1 स विशंकितः ( for परि° ). —After 10, Ñ1 ins. :

1097* सीतां जगाम मनसा लक्ष्मणं च महारथम् ।

11 Ś1 V1 om. $11–12^{b}$. —$^{a}$ ) Ñ2 B1.4 D5.7 -मनसं शून्यम् ; B3 -मानसं शून्यम् ; Dm1 -मनसं दीनम्. D1–3 राघवं तु तथा शून्यम् . —$^{b}$ ) Ñ B1.3.4 D1.3.5.7 आसाद्य; D2 °गत्य ( for आसेदुर् ). D5 lacuna for मृगपक्षिणः and wrongly repeats from मा in $12^{c}$ up to ततो ( for -तरो ) in 1099*. —$^{c}$ ) Ñ2 B1.3.4 D5.7 चक्रुर् ( for कृत्वा ). —$^{d}$ ) D3 वि- ( for च ). Dt1 Dm1 D6.8 स्वनान् ( for स्वरान् ). Ñ1 विस्वराः ससृजुर्गिरः. ❀ Ck : दीनमनसेति । उपलक्षिता इति शेषः । जनस्थानमाजगामेति । जनस्थानवर्त्तिस्वाश्रममित्यर्थः. ❀

12 Ś1 V1 om. $12^{ab}$ (cf. v.l. 11 ). —$^{a}$ ) Ñ2 D5.7 पश्यन् ( for दृष्ट्वा ). —After $12^{ab}$, Dg1 T ins. 1094*; G3 ins. 1095*, while D2 ins. :

1098* स्वस्ति स्यादिति सर्वेषामितो गन्तुं प्रचक्रमे ।

—Dg1 om. ( hapl. ) $12^{cd}$. —$^{c}$ ) Ś1 D1–3 अथ; Ñ1 illeg. ( for ततो ). —After 12, Ñ2 V1 B1.3.4 D5.7 ins. :

1099* स्वयं दीनतरो दीनं मुखेन परिशुष्यता ।

[ D5.7 दीनस्ततो ( for °तरो ). ];

while D3 ins. :

1100* मुमोह रामः सहसा पपात भुवि शालवत् ।
हा हा दैवं ब्रुवन्नेवं क्षणात्संज्ञामवाप्य च ।
गता सीतेति विलपन्प्रचचाल सुदुःखितः ।

13 Ñ2 V1 B1.3.4 D5.7 om. $13^{ab}$. —$^{a}$ ) Ś1 अविदूरेथ; D1 कतिदूरेथ; D2 नातिदूरेथ; D3 ततोदूरेथ; G1.3 M1 ततोविदूराद् ; M2 ततोतिदूराद् . —$^{cd}$ ) Dg1 Dm1 D1–4.8 T G1.2 M2 सुविपण्णेन ( for स वि° ). Dt1 D6 M3 विषण्णः स ( M3 °*** )न्विषण्णेन ( for ° ). Ś1 D1.2.4 दुःखितेन सः ( D1.2 च ); G2 दुःखभाजिना. Ñ2 V1 B1.3.4 D5.7 विपण्णं ( B4 °वर्णं ) तं विपण्णो( B4 °वर्णो ) वै( D5 °ण्णोसौ ) दुःखितं दुःखितोब्रवीत् . —After 13, Ñ2 V1 B1.3.4 D5.7 read $16^{ab}$.

14 Ñ2 V1 B1.3.4 D5.7 om. $14^{ab}$. —$^{a}$ ) Ś1 D1–3 विजगर्हे; D6 M3 Cr.k.t स जगर्हे ( for संजगर्हे ). Dm1 D8 स ( for तं ). —$^{b}$ ) Dg1 Dt1 Dm1 D4.6.8 T1.3 G1.3 M2 दृष्ट्वा ( for ज्येष्ठो ). D1 भ्रातरम् ( for लक्ष्मणम् ). G1 आगतः. —Ś1 Ñ1 D1–3 om. $14^{cd}$. —$^{c}$ ) Ñ2 V1 B1.3.4 D5.7 सीतां विहाय तां शून्ये. —M3 partially damaged for $14^{d}$. ❀ Cv : जगर्हे इत्यस्यैव विस्तरः गृहीत्वा च करमित्यादि. ❀

15 Ñ2 V1 B1.3.4 D5.7 om. 15. —$^{ab}$ ) Dg1 तु ( for च ). Ś1 Ñ1 D1–3 करे सव्ये. M3 damaged for सव्यं लक्ष्म. Ś1 D1–3 लक्ष्मणाग्रजः ( for रघुनन्दनः ). ❀ Ct : समगुणकः सन्मिलित्वा स रामो लक्ष्मणस्य भ्राता सीतां विहायागतं लक्ष्मणं दृष्ट्वा । लक्ष्मणं षष्ठ्यर्थे द्वितीया । लक्ष्मणस्य सव्यं करं गृहीत्वा

अहो लक्ष्मण गर्ह्यं ते कृतं यत्त्वं विहाय ताम् ।
सीतामिहागतः सौम्य कच्चित्स्वस्ति भवेदिति ॥ १६
न मेऽस्ति संशयो वीर सर्वथा जनकात्मजा ।
विनष्टा भक्षिता वापि राक्षसैर्वनचारिभिः ॥ १७
अशुभान्येव भूयिष्ठं यथा प्रादुर्भवन्ति मे ।
अपि लक्ष्मण सीतायाः सामग्र्यं प्राप्नुयावहे ॥ १८
इदं हि रक्षो मृगसंनिकाशं
प्रलोभ्य मां दूरमनुप्रयातम् ।
हतं कथंचिन्महता श्रमेण
स राक्षसोऽभून्म्रियमाण एव ॥ १९
मनश्च मे दीनमिहाप्रहृष्टं
चक्षुश्च सव्यं कुरुते विकारम् ।
असंशयं लक्ष्मण नास्ति सीता
हृता मृता वा पथि वर्तते वा ॥ २० G. 3. 64. 0 B. 3. 57. 23 L. 3. 64. 20

इति श्रीरामायणे अरण्यकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

जगर्हे. ❀ —c) Ś1 D1–3 रामो वचनम् ( for मधुरोदर्कम् ). —d) Ñ1 ऋद्धिमान् ; D4 T3 M2 Cg आर्तिमत् ; M3 आर्तिवत् ( for आर्तवत् ). Ś1 D1–3 इदं तर्केण बुद्धिमान् ; G2 इदं वचनमार्तिमत् . ❀ Cm : मधुरोदर्कं सान्त्वोत्तरभागं परुषमार्तिमदादौ परुषं अहो लक्ष्मणेत्यादि परुषमपि लक्ष्मणेत्यादि मधुरम् । यद्वा शब्दतो माधुर्योत्तरं अर्थतः परुषम् । इदं वक्ष्यमाणम् । आर्तवदार्तार्हमुवाच. ❀

16 Ñ2 V1 B1.3.4 D5.7 read $16^{ab}$ after 13. —a) Ś1 L( ed.) पापं त्वं; Ñ1 पापं ते; Ñ2 V1 B1.3.4 D5.7 वाच्याः स्म; D1 निकृष्टं; D2 शाठ्यं ते; D3 जाड्यं ते ( for गर्ह्यं ते ). —b) D1–3 G1 यस् ( for यत् ). Dm1 D8 G3 तु ( for त्वं ). Ñ1 इहागतः ( for विहाय ताम् ). Ñ2 V1 B1.3.4 D5.7 त्वयेहागच्छता कृताः; L( ed.) कृतवान्यद्विहाय तां. —Ñ2 V1 B1.3.4 D5.7 om. $16^{cd}$. —c) Ñ1 सीतां विना महाबाहो. —d) Ś1 D1–3 अपि; Dt1 Dm1 D7 क्वचित् ( for कच्चित् ). Ñ1 Dg1 D4 T G M1.2 ( *int. lin.* also as in text ) Cv इह ( for इति ).

17 a) Ñ2 V1 B1.3.4 D5.7 नास्ति मे ( by transp. ). —d) Ñ2 V1 B1.3.4 D5.7 वनवासिभिः; G( ed. )वनसेविभिः. ( for °चारिभिः ).

18 a) Ś1 अभावान्येव; Ñ2 V1 B1.3.4 D5.7 अशुभाश्चैव. Ś1 D1.2 पापानि; Ñ2 B1 D5.7 भूयिष्ठा ( for भूयिष्ठं ). D3 अशुभान्येवमेतानि. —b) D4 भूयः ( for यथा ). Ñ2 V1 B1.3.4 D5.7 नः ( for मे ). —Ś1 D1–3 om. $18^{cd}$. —c) Ñ1 जीवंत्याः ( for सीतायाः ). —d) Ñ1 सीतायाः; G2 सकाशं ( for सामग्र्यं ). Dt1 Dm1 D6.8 G3 प्राप्नयामहे ( for °वहे ). —For $18^{cd}$, Ñ2 V1 B1.3.4 D5.7 subst. :

1101* उत्पाता अपि वैदेहीं समग्रां प्राप्नुयामहे ।

[ Ñ2 V1 D7 चापि; D5 चैव ( for अपि ). Ñ2 B3 D5.7 प्राप्नुयां न हि; G( ed. ) प्राप्नुयामहि. ]

—After 18, Dg1 Dt1 Dm1 D6.8 S ins. :

1102* जीवन्त्याः पुरुषव्याघ्र सुताया जनकस्य वै ।
यथा वै मृगसंघाश्च गोमायुश्चापि भैरवम् ।
वाश्यन्ते शकुनाश्चापि प्रदीप्तामभितो दिशम् ।
अपि स्वस्ति भवेत्तस्या राजपुत्र्या महाबल ।

[ ( l. 1 ) M3 जीवत्याः. G2 च ( for वै ). —Dt1 om. l. 2–4. —( l. 2 ) T3 -संघाता ( for -संघाश्च ). Dm1 D8 G3 [ अ ]थ; T [ प ]व ( for [ अ ]पि ). —( l. 3 ) D8 Ct वाशंते ( for वाश्यन्ते ). M3 भैरवाश् ( for शकुनाश् ). M2 अभिशो ( for °तो ). —G1 M om. l. 4. —( l. 4 ) Dm1 D8 अस्या ( for तस्या ). ]

19 Ñ1 om. 19. —a) T3 ह्यरण्यं ( for हि रक्षो ). Ś1 D1–3 -रूपधारि ( for -संनिकाशं ). —b) Dt1 M3 मा ( for मां ). T2 G1 M1 अनुप्रयांतं; G3 अभिप्रयातं ( for अनुप्रयातम् ). Ś1 D1–3 प्रलोभ्य मां घोरमपो( D2 °मृगो )ह्य रूपं. —For $19^{c}$–$20^{b}$, Ś1 D1–3 ( D3 reads after 20 ) subst. 1104*. —For 19, Ñ2 V1 B1.3.4 D5.7 subst. :

1103* अयं हि सत्त्वो मृगसंनिकाशः
प्रलोभयन्मामपकृष्य दूरम् ।
हतः कथंचिन्महता श्रमेण
मृगत्वमुत्सृज्य बभूव राक्षसः ।

[ ( l. 1 ) B3 स ( for हि ). —( l. 2 ) V1 अपहृत्य ( for °कृष्य ). B3 दूरतः ( for दूरम् ). —( l. 4 ) B4 रक्षः ( for राक्षसः ). ]

20 G2 om. 20. —a) Ñ1 दीप्तमेव; Ñ2 B1.3.4 D5.7 दीनमिव; M2 दीन इव ( for दीनमिह ). B4 [ अ ]पहृष्टं; M3 प्रनष्टं ( for [ अ ]प्रहृष्टं ). —b) G3 विहारं ( for °कारम् ). —For $19^{c}$–$20^{b}$, Ś1 D1–3 ( D3 reads after 20 ) subst. :

1104* बलादिवोत्पत्य विकृष्य दूरं
चकार यस्मात्स्वयमात्मघातम् ।
तथापि जाता विपिने भयार्ता
त्वया मया रहिता राजपुत्री ।

# ५६

G. 3. 65. 1
B. 3. 58. 1
L. 3. 65. 1

स दृष्ट्वा लक्ष्मणं दीनं शून्ये दशरथात्मजः ।
पर्यपृच्छत धर्मात्मा वैदेहीमागतं विना ॥ १
प्रस्थितं दण्डकारण्यं या मामनुजगाम ह ।
क्व सा लक्ष्मण वैदेही यां हित्वा त्वमिहागतः ॥ २
राज्यभ्रष्टस्य दीनस्य दण्डकान्परिधावतः ।
क्व सा दुःखसहाया मे वैदेही तनुमध्यमा ॥ ३
यां विना नोत्सहे वीर मुहूर्तमपि जीवितुम् ।
क्व सा प्राणसहाया मे सीता सुरसुतोपमा ॥ ४
पतित्वममराणां वा पृथिव्याश्चापि लक्ष्मण ।
विना तां तपनीयाभां नेच्छेयं जनकात्मजाम् ॥ ५
कच्चिज्जीवति वैदेही प्राणैः प्रियतरा मम ।
कच्चित्प्रव्राजनं सौम्य न मे मिथ्या भविष्यति ॥ ६
सीतानिमित्तं सौमित्रे मृते मयि गते त्वयि ।
कच्चित्सकामा सुखिता कैकेयी सा भविष्यति ॥ ७
सपुत्रराज्यां सिद्धार्थां मृतपुत्रा तपस्विनी ।
उपस्थास्यति कौसल्या कच्चित्सौम्य न कैकयीम् ॥ ८

---

[ (l. 2) D3 -रूपं (for -घातम्). —(l. 3) D1.3 विजाने (for [अ]पि जाता). D3 हृतार्ता (for भयार्ता). ]

—[d]) Ñ2 V1 B1.3.4 D5.7 ध्रुवं; D6 हृता (for हृता). Ñ1 transp. हृता and मृता. Ñ2 om. first. वा (subm.). Ś1 D1.2 [अ]थ भक्षिता; Ñ1 D3 परिभ(D3 °र)क्षिता; Ñ2 V1 B3.4 D5.7 यदि वर्तते (for पथि वर्तते).

Colophon.—*Sarga name*: Ś1 Ñ V1 B1.4 D1.3.5 लक्ष्मणदर्शनं; B3 रामलक्ष्मणदर्शनं; D2.7 लक्ष्मणसंदर्शनं. —*Sarga no.* (figures, words or both): Ś1 Ñ1 B1.3 D2 om.; Ñ2 D5.7 64; V1 63; B4 D3 65; Dg1 Dt1 Dm1 D8 T G M1.2 57; D1 61; D4 60; D6 M3 58.—After colophon, G1.2 conclude with श्रीरामाय नमः.

## 56

V2 illeg. for Sarga 56 (cf. v.l. 3.53). D8 begins with ॐ; T2 with श्रीरामचन्द्राय नमः; M1 with श्रीरामाय नमः.

1 [ab]) D3 तं (for स). Ś1 D2.3 शून्ये दीनं (by transp.); Ñ1 Dt1 D6 G1 Cr.k.t दीनं शून्यं(G1 °न्यो); Ñ2 V1 B1.3.4 D5.7 शून्यं रामो; D1 शून्यं दीनं (for दीनं शून्ये). G(ed.) तथोक्त्वा लक्ष्मणं सोथ रामो दीनो भयाकुलः. —[c]) B1 वैदेह्या (for धर्मात्मा). G(ed.) पर्यपृच्छत्ततः शून्यं. —[d]) Ñ2 V1 B1.3.4 D5.7 वैदेह्या(B1 धर्मात्मा) तं विनागतं.

2 [a]) Ñ1 अथ तां (sic) (for प्रस्थितं). Ś1 D7 -[अ]रण्ये (for -[अ]रण्यं).—[b]) Ś1 सा (for या). Ñ1 ह्यनुजगाम ह; G2 अनुगता सती (for अनुजगाम ह).—[c]) Ś1 न (for क्व). —[d]) Ś1 हित्वा तां; V1 तां हित्वा; D1 यां मुक्त्वा (for यां हित्वा).

3 [b]) Ś1 दंडके; B1 दंडकं. Ñ2 B1 D5.7 प्रति धावतः (for परिधा°). D3 दंडकारण्यवासिनः. —[c]) Ñ2 D5.7 दुःखसहा मेद्य (for °सहाया मे).—[d]) Ś1 D1–3 सीता सुरसुतोपमा (= 4[d]).

4 [a]) Ñ1 नेच्छसि(sic) (for नोत्सहे). Ś1 Ñ2 B1.3 D1–3.5.7 सौम्य; G2 (before corr. as in text) तन्वीं (for वीर).—Ś1 D1–3 om. 4[cd].—[c]) M3 दुःखसहाया (for प्राण°). Ñ2 V1 B1.3.4 क्व सा प्राणसमा मेद्य.

5 [a]) Dg1 Dt1 D6 T1.3 हि; Dm1 D8 G3 च; T2 वै (for वा). Ś1 Ñ V1 B1.3.4 D1–3.5.7 यक्षत्वमम(D3 °प)रत्वं च(Ś1 B1 D1.2 वा); G(ed.) सिद्धत्वममरत्वं वा.—[b]) Ś1 Ñ V1 B1.3.4 D1–3.5.7 पृथिवीं; Dg1 पृथिव्याम् (for पृथिव्याश्). Ś1 B1.3.4 D1.2 वापि; Dg1 अपि (for चापि). —[c]) T1.2 G3 M1 तां विना (by transp.). Ś1 Ñ V1 B1.3.4 D1–3.5.7 नव(V1 वर)हेमाभां; G1 तपनीयांगीं (for °याभां).—[d]) M2 नेच्छेहं (for नेच्छेयं).—After 5, D8 ins. राम सीता लक्ष्मण श्री.

6 [a]) Dm1 क्वचिज् (for कच्चिज्).—[b]) B4 प्रियतमा (for °तरा).—[c]) Dg1 D1 क्वचित्. Ś1 B1 D4 प्रव्रजनं; D5 °जने (for प्रव्राजनं). Ñ1 तात; Dg1 Dt1 D6 T3 G2 M2 वीर (for सौम्य).—[d]) D2 ते (for मे).

7 Ś1 Ñ V1 B1.3.4 D1–3.5.7 transp. [ab] and [cd]. —[b]) D4 [आ]गते (for गते). Ñ2 V1 B1.3.4 D5.7 मृते वनगते मयि.—[c]) Ñ1 वैदेही; Ñ2 V1 B1.3.4 D5.7 सुखिनी; Dg1 Dt1 Dm1 D6.8 T3 कैकेयी (for सुखिता).—[d]) Ś1 B4 कैकयी न; Ñ1 Dg1 Dt1 Dm1 D6.8 T3 सुखिता सा(Ñ1 न; Dm1 D8 °द्य); Ñ2 V1 B1.3 D1–3.5.7 G2 कैकेयी न (for कैकेयी सा). ❀ Cg: सकामेत्यनेन रामस्य हृदये कैकेयी स्वविनाशार्थमेव वनं प्रेषितवतीति सदा वर्तते। तदिदानीं सुप्तप्रमत्तकुपितानां भावज्ञानं दृष्टमिति न्यायेन व्यक्तीकृतम्. ❀

8 G(ed.) om. 8. Ñ1 illeg. up to मृतपुत्रा in [b]. —[a]) Ś1 Dm1 D2.8 G2.3 तां पुत्रराज्य-(G2 °ज-); Ñ2 V1 B1.3.4 D1.3.5.7 तां पुत्रराज्ये (for सपुत्रराज्यां). T3 सपुत्रराज्या सिद्धार्था.—After 8[a], T3 ins.:

1105* अयोध्यां पालयिष्यति ।
मम माता तु शोकार्ता.

—[c]) Ñ1 कुत्र स्थास्यति. Ñ2 V1 B1.3.4 D5.7 मे माता (for

यदि जीवति वैदेही गमिष्याम्याश्रमं पुनः ।
सुवृत्ता यदि वृत्ता सा प्राणांस्त्यक्ष्यामि लक्ष्मण ॥ ९
यदि मामाश्रमगतं वैदेही नाभिभाषते ।
पुनः प्रहसिता सीता विनशिष्यामि लक्ष्मण ॥ १०
ब्रूहि लक्ष्मण वैदेही यदि जीवति वा न वा ।
त्वयि प्रमत्ते रक्षोभिर्भक्षिता वा तपस्विनी ॥ ११
सुकुमारी च बाला च नित्यं चादुःखदर्शिनी ।
मद्वियोगेन वैदेही व्यक्तं शोचति दुर्मनाः ॥ १२
सर्वथा रक्षसा तेन जिह्मेन सुदुरात्मना ।
वदता लक्ष्मणेत्युच्चैस्तवापि जनितं भयम् ॥ १३
श्रुतश्च शङ्के वैदेह्या स स्वरः सदृशो मम ।
त्रस्तया प्रेषितस्त्वं च द्रष्टुं मां शीघ्रमागतः ॥ १४
सर्वथा तु कृतं कष्टं सीतामुत्सृजता वने ।
प्रतिकर्तुं नृशंसानां रक्षसां दत्तमन्तरम् ॥ १५
दुःखिताः खरघातेन राक्षसाः पिशिताशनाः ।
तैः सीता निहता घोरैर्भविष्यति न संशयः ॥ १६
अहोऽस्मि व्यसने मग्नः सर्वथा रिपुनाशन ।
किं त्विदानीं करिष्यामि शङ्के प्राप्तव्यमीदृशम् ॥ १७ G. 3. 65. 16 B. 3. 58. 17 L. 3. 65. 15

---

कौसल्या ). —$^{d}$ ) Dt1 क्वचित् . Ś1 Ñ2 V1 B1 Dg1 Dt1 D6 T3 M3 Cm.k.t सौम्येन; Ñ1 वत्स न ( for सौम्य न ).

9 The sequence of st. from 9–13 in Ś1 is 9$^{a}$, 11$^{b}$ ( reads also here repeating it in its proper place ), 13$^{ab}$, 11$^{c}$–12$^{d}$, 13$^{cd}$, 1107*, 9$^{bcd}$ ( om. 10. ) and 11$^{ab}$ ( $^{b}$ repeated ). —$^{b}$ ) Ñ1 गमिष्याम्याहृताश्रमं; Ñ2 V1 B1.3.4 D5.7 गमिष्यामि पुरीं ततः( B1.4 पुनः ); D3 मा गमिष्याश्रमं पुनः ( sic ); M3 गमिष्ये चाहमाश्रमं. —$^{c}$ ) Ñ1 Ct संवृत्ता; B1 स्ववृत्ता; Dt1 D6 सवृत्ता; Dm1 सुव्रता; D5 सुद्वता ( sic ) ( for सुवृत्ता ). Ñ2 B1 D5.7 वा वृत्ता; G3 वृत्ता वा; M2 वृत्ता या ( for वृत्ता सा ). Ś1 D1-3 सुवृत्तया तया हीनः; V1 अवृत्ता परिवृत्ता सा; D4 सा सुवृत्ता यदि हृता. —$^{d}$ ) D3 जीवितं ( for लक्ष्मण ).

10 Ś1 ( cf. v.l. 9 ) Dt1 D1-3 om. ( hapl. ) 10. —$^{b}$ ) Ñ2 V1 B1.3.4 D5.7 अ( V1 ना )भिभाषेत मैथिली ( B1 जानकी ).—$^{c}$ ) Ñ1 D4 पुरः; D6 पुरं ( sic ); G3 प्रायः ( for पुनः ). Ñ1 प्रहसती ( for °सिता ). Ñ2 V1 B1.3.4 D5.7 बाला ( for सीता ). —$^{d}$ ) Ñ2 V1 B1.3.4 D5.7 न विनंक्ष्यामि; Dg1 विनश्यामि हि; T3 विनश्यामीह ( for विनशिष्यामि ). Ñ1 * * * मि तदा त्वहं.

11 For sequence in Ś1, cf. v.l. 9. Ñ1 illeg. up to यदि in $^{b}$. Dg1 reads 11$^{ab}$ in marg. —$^{b}$ ) G2 अपि ( for यदि ). D1 वानघ ( for वा न वा ). —$^{c}$ ) Dm1 D5 व्याघ्रैः प्रमत्तैः; D1 वनेथवा सा ( for त्वयि प्रमत्ते ). —$^{d}$ ) Ñ1 D2 सा ( for वा ). —For 11$^{cd}$, Ñ2 V1 B1.3.4 D5.7 subst. :

1106* सीता त्वया विमुक्ता सा भक्षिता वा निशाचरैः ।

[ V1 B1.3 प्रमुक्ता ( for विमुक्ता ). V1 वा ( for सा ). V1 D5 सा ( for वा ). ]

12 For sequence in Ś1, cf. v.l. 9. —$^{a}$ ) D1.3 M2 सुकुमारा. Ś1 बाला सा; D1-3 सा बाला ( for बाला च ). —$^{b}$ ) Ś1 Ñ1 Dt1 D6 नित्यं चा( Ś1 Ñ1 च )दुःखभागिनी; Ñ2 B1.3 नित्यं च( B1 तु ) दुःखदर्शिनी; V1 D4 नित्यं वा( D4 चा )दुःखदर्शिनी; B4 Dm1 D5 नित्यं वा सुखदर्शिनी; D1.3 नित्यं च सुखभागिनी; D2 नित्यं सुखदुःखभागिनी ( hypm. ). —$^{c}$ ) Ñ2 B3.4 D5.7 त्वद्वियोगेन. —$^{d}$ ) Ñ D1.2.5.7 नित्यं; V1 B1.3.4 दुःखं; M2 नूनं ( for व्यक्तं ). Ñ2 V1 B1.3.4 D5.7 दुःखिता ( for दुर्मनाः ).

13 For sequence in Ś1, cf. v.l. 9. —$^{a}$ ) Ś1 D2 येन ( for तेन ). —$^{a}$ ) Dg1 T3 पापेन ( for जिह्मेन ). Ś1 D1.2 [ इ ]ह दुरात्मना; D3 च दुरा° ( for सुदुरा° ). —$^{c}$ ) Ś1 रुदता; D2 नदता. —$^{d}$ ) T3 तदानीं ( for तवापि ). —After 13, Ś1 ins. :

1107* त्वरितं चिन्तयाधीनो.

14 $^{a}$ ) Ś1 D1-3 श्रुत्वा ( for श्रुतश्च ). T1.2 तु ( for च ). B3 Dt1 D6 मन्ये; G2 सह ( for शङ्के ). D4.5 T G3 वैदेह्याः ( sic ) ( for °ह्या ). —$^{b}$ ) Cr.k स्वरस्तु; Cm स्वरश्च; Ct as in text ( for स स्वरः ). Ñ1 illeg. for सदृशो मम. Ś1 D1-3 तं स्वरं सदृशं मम. —$^{c}$ ) V1 ग्रस्तया ( for त्र° ). Ś1 V1 B1 D1-3.5.7 हि ( for च ). M1 अतस्त्वया प्रेषितस्त्वं. —$^{d}$ ) Dm1 D5 G3 त्रातुं ( for द्रष्टुं ). V1 द्रष्टुं शीघ्रमिहागतः; B4 मां शीघ्रं द्रष्टुमागतः.

15 $^{a}$ ) Ś1 D1.2 न; Ñ V1 B1.3.4 D5.7 ते; Dg1 मे ( for तु ). Ś1 D2 युक्तं; Ñ1 B3.4 पापं; Ñ2 V1 B1( marg. also पापं ) D5.7 वाच्यं; D1 त्याज्यं; D3 जाड्यं ( for कष्टं ). —$^{b}$ ) Ś1 Dg1 उत्सृज्य तां; D3 उत्सृजवान् ( sic ); D4 M3 उत्सृजतो ( for °जता ). —$^{c}$ ) B3 प्रतिकुर्वन्. D3 नृशंसेन ( for नृशंसानां ). —$^{d}$ ) B3 D3 T2 रक्षसा ( for रक्षसां ). D3 तदनंतरं ( for दत्तमन्तरम् ).

16 $^{a}$ ) Ś1 Ñ2 V1 B1.3.4 D1.2.5.7 निश्चिताः; Ñ1 D3 रुषिताः ( for दुःखिताः ). Ś1 G2 M2 खरपातेन. —$^{b}$ ) Ś1 पिशिताशिनः. —$^{cd}$ ) Ñ V1 B1.3.4 D5.7 भक्षिता ( for निहता ). M3 भक्षिता वा ( for भविष्यति ). Ś1 D1-3 तैः सीता पिशिताहारैर्भक्षिता सा( Ś1 °च ) दुरात्मभिः.

17 $^{a}$ ) M3 Cg [ ऽ ]स्मिन् ( for ऽस्मि ). Ś1 D2 अपरेस्मिन्भये मग्नः; Ñ2 V1 B1.3.4 D5.7 अपारेस्मिन्त्रयं मग्नाः; D1.3 अपारेस्मिन्भये मग्नः. ❀ Cg : अहोस्मिन्निति संधिरार्षः. ❀

G. 3. 65. 17
B. 3. 58. 18
L. 3. 65. 16

इति सीतां वरारोहां चिन्तयन्नेव राघवः ।
आजगाम जनस्थानं त्वरया सहलक्ष्मणः ॥ १८

विगर्हमाणोऽनुजमार्तरूपं
क्षुधा श्रमाच्चैव पिपासया च ।
विनिःश्वसञ्शुष्कमुखो विषण्णः
प्रतिश्रयं प्राप्य समीक्ष्य शून्यम् ॥ १९

स्वमाश्रमं संप्रविगाह्य वीरो
विहारदेशाननुसृत्य कांश्चित् ।
एतत्तदित्येव निवासभूमौ
प्रहृष्टरोमा व्यथितो बभूव ॥ २०

इति श्रीरामायणे अरण्यकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

—b) Ś1 D3 [अ]त्र न संशयः; Ñ2 V1 B1.3.4 D5.7 शोकसागरे; D1.2 नात्र संशयः; D4 G1 रिपुकर्षण; T1.2 M1 शत्रु (M1 रिपु)सूदन (for रिपुनाशन). —c) G1.2 किं न्विदानीं; G3 किं चेदानीं. Ñ2 V1 B1.3.4 D5.7 करिष्यामः (for °ष्यामि). —d) Ś1 D1–3 ध्रुवं; Ñ1 कथं; Ñ2 V1 B1.3.4 D5.7 प्राप्ताः (V1 °प्तः) (for शङ्के). V1 प्राप्तस्त्वम् (sic); B1.3 व्यसनम् (for प्राप्तव्यम्). —After 17, Ñ1 reads 3.57.23–25.

18 Ñ1 om. 18–19. Dt1 transp. 18 and 19. —b) B1.3 D4 चिंतयन्निव; D3 चिंतयामास (for °यन्नेव). —d) G3 त्वरावान् (for त्वरया). G2 लक्ष्मणेन तु. G(ed.) त्वरमाणः सलक्ष्मणः. —After 18, Ś1 D1–3 ins.:

1108* आगच्छन्पथि काकुत्स्थो निमित्तान्युपलक्ष्य वै ।
इन्द्रियैरप्रहृष्टैः स त्रस्तो लक्ष्मणमब्रवीत् ।
अशोभनान्येव हि लक्षणानि
प्रादुर्भवन्त्यत्र ममाशुभानि ।
आयासमूलानि सुदीर्घकाल- [5]
मार्तिं प्रदास्यन्ति न संशयो मे ।

[(l. 1) D3 [उ]पलभ्य (for °क्ष्य). —(l. 4) D1–3 [अ]द्य (for [अ]त्र). —(l. 5) Ś1 -दीर्घानि; D1 -भूतानि (for -मूलानि). Ś1 न (for सु-).]

19 Ñ1 om. 19 (cf. v.l. 18). Dt1 transp. 18 and 19. —a) M2.3 आर्तरूपः. Ś1 D1–3 विगर्हमाणो म(Ś1 ह्य)नुजोत्तमं(D1.3 °मो) वै. —b) Ś1 श्रमात्क्रोधाच्चैव; Dt1 D6 क्षुधा श्रमेणैव; D1–3 श्रमात्क्षुधा चैव (by transp.) (for क्षुधा श्रमाच्चैव). ❀ Cr.g.t श्रमात् बहुदूरधावनजात्।; Ct श्रमाच्चैव इति प्रायः पाठः. ❀ —c) Ś1 Dt1 Dm1 D1–3.6.8 S विनिश्वसन्. Dg1 D2 T विवर्णः; D1 विदीर्णः (for विषण्णः). —d) D4 प्रत्याश्रमं (for प्रतिश्रयं). —For 19, Ñ2 V1 B1.3.4 D5.7 subst.:

1109* विगर्हयन्लक्ष्मणमाययौ तदा
स्वमाश्रमं क्षुच्छ्रमशोककर्षितः ।
विनिःश्वसञ्शुष्कमुखस्त्वरान्वितः
प्रतिश्रयं शून्यमथाससाद सः ।

[(l. 2) Ñ2 D5.7 -कर्शितः; B3 -पीडितः (for -कर्षितः). —(l. 3) V1 B4 D5.7 विनिश्वसन्. —(l. 4) V1 प्रत्याश्रमं (for प्रतिश्रयं). B1 om. सः.]

20 Ñ1 reads 20 after 1117*. —a) Ñ1 स चाश्रमं. Ś1 Ñ1 V1 Dt1 स(Ś1 च) प्रविगाह्य; Ñ2 B4 संप्रतिगा(B4 °गृ)ह्य; B1 संपरिचिंत्य; B3 संप्रविचार्य; Dg1 स्वप्रविगाह्य; D3 *प्रवि°; D5.7 संपरि°; D8 संप्रविनाह्य; G3 संप्रविशन्स; G(ed.) तं प्रवि° (for संप्रविगाह्य). Ś1 शून्यं; D2 शीघ्रं (for वीरो). —b) Ñ विहाय; B4 विगाह्य (for विहार-). Ś1 D2 च ससार; Dg1 D4 अनुश्रुत्य; Dt1 अनुश्रित्य; D1 विससार; D3 विचचार (for अनुसृत्य). Ś1 कांश्च; Ñ1 कंचित् (sic); Ñ2 V1 B1.4 D5.7 सर्वान् (for कांश्चित्). B3 विहाय सर्वाननुसृत्य देशान्. —c) Ñ1 Dt1 एतद् (for एतत्तद्). Ñ2 V1 B1.3.4 D5.7 एवेति (for इत्येव). Ñ V1 B1.3.4 D5.7 -मध्ये (for भूमौ). Ś1 D2 तांश्चैव सर्वान्विपुलान्विचिंत्य(D2 °चिन्वन्); D1.3 तांश्चैव सर्वान्निपुणं(D3 °न्विपुलान्) विचीय. —d) Ñ1 दुक्तो स ** (illeg.); G3 प्रवेष्टुकामो (for प्रहृष्टरोमा). Ś1 D1.2 [ऽ]भवत्सः; D3 बभूव सः; D4 बभूव ह (for बभूव). ❀ Cv: एतत्तद्रात्रयाणी(योर्नि)वासस्थान इत्येव। अन्ये पुनर्यत्पूर्वं शंकितं देव्यदर्शनं तदेतदिति व्याचक्षते. ❀

Colophon. —*Sarga name*: Ś1 Ñ1 D2.3 (illeg. after पा) रामोपावर्तनं; Ñ2 रामप्रधानं; V1 रामोपनयनं; B1.3.4 D5.7 रामोपयानं; D1 उपावर्तनं. —*Sarga no.* (figures, words or both): Ś1 B1.3 D2 om.; Ñ1 illeg.; Ñ2 D5.7 65; V1 64; B4 D3 66; Dg1 Dt1 Dm1 D8 T G M1.2 58; D1 62; D4 61; D6 M3 59. —After colophon, G1.3 conclude with श्रीरामाय नमः.

## ५७

अथाश्रमादुपावृत्तमन्तरा रघुनन्दनः ।
परिपप्रच्छ सौमित्रिं रामो दुःखार्दितः पुनः ॥ १
तमुवाच किमर्थं त्वमागतोऽपास्य मैथिलीम् ।
यदा सा तव विश्वासाद्वने विरहिता मया ॥ २
दृष्ट्वैवाभ्यागतं त्वां मे मैथिलीं त्यज्य लक्ष्मण ।
शङ्कमानं महत्पापं यत्सत्यं व्यथितं मनः ॥ ३
स्फुरते नयनं सव्यं बाहुश्च हृदयं च मे ।
दृष्ट्वा लक्ष्मण दूरे त्वां सीताविरहितं पथि ॥ ४
एवमुक्तस्तु सौमित्रिर्लक्ष्मणः शुभलक्षणः ।
भूयो दुःखसमाविष्टो दुःखितं राममब्रवीत् ॥ ५
न स्वयं कामकारेण तां त्यक्त्वाहमिहागतः ।
प्रचोदितस्तयैवोग्रैस्त्वत्सकाशमिहागतः ॥ ६
आर्येणेव परिक्रुष्टं हा सीते लक्ष्मणेति च ।
परित्राहीति यद्वाक्यं मैथिल्यास्तच्छ्रुतिं गतम् ॥ ७ G. 3. 66. 8 B. 3. 59. 7 L. 3. 66. 5

---

## 57

☞ V2 illeg. from 1 up to 19. D8 begins with ॐ; T2 with श्रीरामचन्द्राय नमः; M1 with श्रीरामाय नमः.

1 a) Ś1 Ñ V1 B1.3.4 D1–3.5.7 M1 [आ]श्रमम्. Ś1 D1.2 उपावृत्तस्; B1 उपागत्य (with hiatus); D3 उपागच्छन्; D6 उपायांतम्; G(ed.) समन्विष्य (with hiatus) (for °वृत्तम्).—b) Ś1 विमना; D1 त्वरितो; D2 त्वंतरा (for अन्तरा).—c) T2 सौमित्रे (sic).—d) Ś1 दुःखार्तितः; Dg1 Dm1 D8 G2.3 Cg दुःखार्दितं (for °र्दितः). G2 वचः (for पुनः). Ñ2 D5.7 रामो दशरथात्मजः; V1 B1.3.4 रामो दुःखसमन्वितः; Dt1 D6 रामो दुःखार्दितं वचः; D1 रामो दृढपराक्रमः.

2 B4 transp. $2^{ab}$ and $2^{cd}$.—a) Ś1 D1–3 उवाच च; Ñ1 परिश्रुत्य (for तमुवाच).—b) D1.3 हित्य (sic) (for ऽपास्य). Ś1 D2 हित्वायातोसि मैथिलीं; Ñ1 सीतां संत्यज्य निर्गतः.—For $2^{ab}$, Ñ2 V1 B1.3 D5.7 subst. and read after $2^{cd}$, while B4 ins. after $2^{cd}$ (transp.):

1110* न्यासधर्मान्मया दत्ता वने राक्षससेविते ।
कथं त्वं तां समुत्सृज्य मत्समीपमुपागतः ।

[(l. 1) V1 न्यस्ता (for दत्ता).—(l. 2) Ñ2 सीतां; V1 नु तां; B4 तां (subm.); D5 त्वैतां (for त्वं तां).]

—Ś1 D1–3 om. $2^{c}$–3.—c) Ñ2 V1 D7 सा तदा; B1.3.4 सा यदा (by transp.); Dg1 D4 यथा सा; D5 तदा* (for यदा सा). G1 यदि त्वयि तु विश्वासाद्.—d) G3 [ऽ]पि (for वि-). Dg1 कृता (for मया). Ñ1 आश्रमे रहिता मया; Ñ2 V1 B1.3.4 D5.7 मैथिली रहिते (V1 D5 °ता) शुभा. ❀ Cv : परिपप्रच्छेत्युक्त्वा भूयोप्युवाचेति वचनं न केवलं परिप्रश्नमेव कृतवानन्यच्चोक्तवानिति प्रदर्शनार्थं. ❀

3 Ś1 D1–3 om. 3 (cf. v.l. 2).—ab) Ñ1 वा (for [ए]व). Dt1 त्वा (for त्वां). M1 तु (for मे). Ñ2 V1 B1.3.4 D5.7 तवैवागमनान्मेद्य (B1 °न्मन्ये) सीतां संत्यज्य लक्ष्मण.—c) Ñ1 शंकमानं परं पापं; V1 विशंकमानं मत्पापं.—d) D6 सर्वं (for सत्यं). G3 व्यथते मनः.

4 a) Ñ2 V1 B1.3.4 D5.7 स्पंदते.—b) Ñ1 मम (for च मे).—c) Ś1 Ñ2 V1 B1.3.4 D1–3.5.7 दूरात् (for दूरे). D6 त्वा (for त्वां).—d) Dm1 D8 G3 तया (for सीता-). Ś1 D3 -विरहिते (D3 °तः). Ñ2 V1 B1.3.4 D5.7 वने (for पथि).

5 a) D3 om. तु (subm.).—b) D6 reads शुभलक्षणः in marg. Ñ2 B3 Dg1 Dt1 D8 G3 -लक्ष्मणः (for -लक्षणः).—c) Dt1 D6 दुःखं (for दुःख-). G3 भूयोपि दुःखमाविष्टो.—d) Ś1 Dg1 D3 G2.3 दुःखितो; D4 दुः** (for दुःखितं). Ś1 D1–4 वाक्यम् (for रामम्).—For $5^{cd}$, Ñ2 V1 B1.3.4 D5.7 subst.:

1111* दुःखशोकसमाविष्टो राघवं वाक्यमब्रवीत् ।

6 a) Dt1 D6 ह्यहं (for स्वयं). V1 B3.4 Dg1 -चारेण; Dt1 -रूपेण (for -कारेण).—b) G3 transp. तां and त्यक्त्वाहम्. Ś1 Ñ V1 B1.3.4 D1–3.5.7 सीतां त्यक्त्वाह (G[ed.] स)मागतः.—Ś1 Ñ1 D1–3 T2 om. (hapl.) $6^{cd}$.—c) Ñ2 B1.3.4 D5.7 तयैवाहं; Dt1 तथैवाहं; M3 तयैवोक्तस् (for तयैवोग्रैस्). V1 प्रदेशितस्तयैवाहं.—d) Ñ2 V1 B1.3.4 D5.7 ततस्त्वां समुपागतः (V1 °मं; B4 °तं).

7 a) Ś1 V1 आर्येणैवं; Ñ1 रक्षसा हि; Ñ2 B1.3.4 D5.7 M2.3 आर्येण हि; Dg1 Dt1 D1–4.6 Ct आर्येणैव (for °णेव). Ñ2 D5.7 विक्रुष्टं तु (D5 °ष्टे त्वं [sic]); Dg1 Dm1 D4.6.8 T2.3 G1 M Cv.m.g पराक्रुष्टं; G2 परामृष्टं; Cr.k.t as in text (for परि°). G3 आर्येण परमाक्रुष्टं.—b) Ś1 Ñ V1 B1.3.4 Dt1 D1.2.5–7 M3 लक्ष्मणेति सुविस्त (Ñ V1 D5–7 M3 Ct °स्व) रं; D3 लक्ष्मणेति हि सुस्वरं.—c) Ñ2 B1.3.4 D5.7 [अ]सद्वाक्यं; V1 [अ]सत्कृत्वा (sic) (for यद्वाक्यं).—d) B1 Dm1 D8 वैदेह्यास् (for मैथिल्यास्). Ñ1 श्रुतिमागतं; B4 सुश्रुतिं गतं; Dg1 तु श्रुतिं गतं. ❀ Ck : आर्येण हि परिक्रुष्टं लक्ष्मणेति सुविस्वरम् । परित्राहीति यद्वाक्यं मैथिल्यास्तच्छ्रुतिं गतमिति प्राचीनः पाठः। लक्ष्मणेति परित्राहीति च सुविस्वरं सुदुःशब्दं..वाक्यं आर्येण आर्यस्वरसदृशस्वरेण परिक्रुष्टं तत्तु मैथिल्याः श्रुतिं गतं. ❀

G. 3.66.8
H. 3.59.8
L. 3.66.6

सा तमार्तस्वरं श्रुत्वा तत्र स्नेहेन मैथिली ।
गच्छ गच्छेति मामाह रुदन्ती भयविह्वला ॥ ८
प्रचोद्यमानेन मया गच्छेति बहुशस्तया ।
प्रत्युक्ता मैथिली वाक्यमिदं त्वत्प्रत्ययान्वितम् ॥ ९
न तत्पश्याम्यहं रक्षो यदस्य भयमावहेत् ।
निर्वृता भव नास्त्येतत्केनाप्येवमुदाहृतम् ॥ १०
विगर्हितं च नीचं च कथमार्योऽभिधास्यति ।
त्राहीति वचनं सीते यस्त्रायेत्त्रिदशानपि ॥ ११
किंनिमित्तं तु केनापि भ्रातुरालम्ब्य मे स्वरम् ।
विस्वरं व्याहृतं वाक्यं लक्ष्मण त्राहि मामिति ।
न भवत्या व्यथा कार्या कुनारीजनसेविता ॥ १२
अलं वैक्लव्यमालम्ब्य स्वस्था भव निरुत्सुका ।
न चास्ति त्रिषु लोकेषु पुमान्यो राघवं रणे ।
जातो वा जायमानो वा संयुगे यः पराजयेत् ॥ १३

---

**8** a) B1 सभयार्त-; G(ed.) सा तु चार्त- (for सा तमार्त-). T3 दृष्ट्वा (sic) (for श्रुत्वा).—b) Ś1 Ñ V1 B1.3.4 D1–3.5.7 भर्तृ-; M1 भवत्-; M2 त्वयि (for तत्र).—V1 om. $8^{cd}$.—c) Dt1 G3 आशु (for आह).—d) Ś1 D1–3 वैदेही; Ñ B1.3.4 Dg1 D4.6.7 T G3 M2.3 रुदती (for रुदन्ती). Ś1 Ñ B3 Dg1 Dt1 Dm1 D1–3.5–8 G1.2 M3 भयविक्लवा.—After 8, Ś1 D1.3 ins.:

1112* शृण्वती चापि तां वाचं रूक्षां भीमस्वरामथ ।
विस्वरं प्रतिमुञ्चन्ती जलार्द्र इव दुन्दुभिः ।

[(l. 1) Ś1 रूक्ष- (for रूक्षां).—(l. 2) L(ed.) -मुंचंतीं (for °न्ती).]

**9** a) V1 प्रदेश्यमानेन; D1.2 प्रबोध्य(D2 °ध)मा°; D3 प्रनोद्य° (for प्रचोद्य°). G(ed.) प्रदिश्यमानेन तया.—b) Ś1 Ñ1 D1.3 ततः; Ñ2 V1 B1.3.4 D5.7 तदा; D2 -तरां (sic); G3 तथा (for तया).—c) Ś1 इत्युक्त्वा; Ñ2 B3.4 प्रत्युक्त्वा.—d) Dg1 Dt1 Dm1 D4.6.8 G1 Ck.t तत् (for त्वत्-). Ñ1 -प्रत्ययाद्विभो; D2.3 -प्रत्ययान्मया (for °न्वितम्). Ś1 इदं त्वां प्रति यन्मया; Ñ2 V1 B1.3.4 D5.7 मया त्व(B3 त)त्प्रियकाम्यया; D1 किमिदं भाषितं त्वया.

**10** a) Ñ2 V1 B1.3.4 D5.7 तं (for तत्). Ñ2 V1 B1.3.4 D5.7 लोके; G(ed.) सीते (for रक्षो). Ñ1 राक्षसं तं न पश्यामि.—b) Ś1 D2 यो रामे; Ñ1 B1 यस्तस्य; Ñ2 V1 B3.4 Dt1 D5.7 यो ह्यस्य; D1 यदार्ये; T3 यद्यस्य; M1 यत्तस्य (for यदस्य). Ñ2 V1 B1.3 Dm1 D4.5.7.8 G M2 आनयेत्; Dt1 D3 M1 आहरेत् (for आवहेत्).—c) Ñ1 D2.3.5.6 निर्वृत्ता; B1 Dg1 Dm1 D1.8 निवृत्ता (for निर्वृता). Dm1 D4 G1 Ct [अ]स्य (for [अ]स्ति).—d) Ñ1 Dg1 Dt1 D3.6 T3 केनाप्येतद्; Ñ2 V1 B1.3 D5.7 शंके केनापि; B4 केनाशंकेपि (for °प्येवम्).

**11** a) Ñ1 दीनं (for नीचं). Dt1 तु (for second च). B1 गर्हितं चाविनीतं च; B4 गर्हितं च सुनीचं च.—b) Dg1 विधास्यति (for ऽभिधा°).—c) Ñ2 V1 B1.3.4 D5.7 त्रायस्वेति वचः सीते.—d) Ñ2 V1 B1.3.4 D1.5.7 त्राता (for त्रायेत्).—After 11, Ś1 reads $13^{ab}$.

**12** a) Ś1 D1–3 किंचिन्निमित्तं; Ñ1 निर्निमित्तं हि; G1.3 त्वन्निमित्तं तु (for किंनिमित्तं तु).—Dt1 reads mostly $12^{cd}$ in marg.—c) Ś1 D1–3 त्रायस्व (for विस्वरं). B1 व्याकृतं (for व्याहृतं). Ñ1 व्याहृतं करुणं वाक्यं; Dm1 D8 G1.3 राक्षसेनेरितं वाक्यं.—d) Ñ2 V1 B1.3.4 D5.7 सौमित्रे (for लक्ष्मण). B1.4 पाहि (for त्राहि). G3 M3 transp. लक्ष्मण and त्राहि. Ś1 D1–3 लक्ष्मणेति सुदुःखितं.—For $12^{cd}$, Dg1 T M2 subst., while Dt1 D4.6 ins. after $12^{cd}$; G2 ins. after $12^{ab}$:

1113* राक्षसेनेरितं वाक्यं त्राहि त्राहीति शोभने ।

[Dt1 D4.6 त्रासात् (for the first त्राहि).]

—B1 om. $12^{ef}$.—e) M3 transp. न and भवत्या. Ś1 [अ]त्र धीः; B3 [अ]न्यथा; M1 वृथा (for व्यथा).—f) Ñ1 B3 कुलाभिजनसेविता; V1 कौमारी°.

**13** Ś1 reads $13^{ab}$ after 11. Dg1 reads $13^{ab}$ in marg.—a) B4 वैकृत्यम्; Dm1 D8 G3 विक्लवम्; D5 वैभाव्यम् (for वैक्लव्यम्). Ñ2 V1 B1.3.4 D5.7 आगत्य (for आलम्ब्य). Ś1 D1.2 मा गाः श्रुत्वा च वैक्लव्यं; Ñ1 विक्लवा भव मा ** (illeg.); Dt1 D4.6 G1.2 M1.2 Ct अलं विक्लवतां गंतुं; D3 श्रुत्वा विक्लवमागास्त्वं.—b) Ñ2 B1.3 सुस्था भव. Ñ2 D5.7 शुचिस्मिते (for निरुत्सुका).—c) Ś1 Ñ2 V1 B1.3.4 D1–3.5.7 T1.2 G3 सोऽस्ति (for चास्ति). B4 om. (hapl.) for लोकेषु.—d) Ñ1 illeg. for पुमान्यो रा. Dg1 T3 स पुमान्; K(ed.) पुमान्वै (for पुमान्यो).—e) Ñ B1.4 D5.7 [अ]पि जनिष्यो (for जायमानो). V1 जातो न *जनिष्यो वा; B3 जनिष्यते वा जातो वा; M1.2 जातो वा जनिता वापि.—f) M1 जायमानः (for संयुगे यः). Ñ1 सत्यमेतद्ब्रवीमि ते; Ñ2 V1 B1.3.4 D5.7 संग्रामे तं (V1 B3 [m. also].4 यः) पराभवेत्.—For $13^{ef}$, Ś1 D1–3 subst.:

1114* भूतपूर्वो भविष्यो वा निहन्याच्छत्रुविक्रमम् ।

[D3 यो हन्याच् (for निहन्याच्). Ś1 व्यक्त-; D1 छत्र- (for शत्रु-).]

—After 13, Dg1 Dt1 Dm1 D4.6.8 S ins.:

1115* अजेयो राघवो युद्धे देवैः शक्रपुरोगमैः ।

[D4 G1 M3 न जेयो; M2 Cg न जय्यो (for अजेयो).]

एवमुक्ता तु वैदेही परिमोहितचेतना ।
उवाचाश्रूणि मुञ्चन्ती दारुणं मामिदं वचः ॥ १४
भावो मयि तवात्यर्थं पाप एव निवेशितः ।
विनष्टे भ्रातरि प्राप्ते न च त्वं मामवाप्स्यसि ॥ १५
संकेताद्भरतेन त्वं रामं समनुगच्छसि ।
क्रोशन्तं हि यथात्यर्थं नैनमभ्यवपद्यसे ॥ १६
रिपुः प्रच्छन्नचारी त्वं मदर्थमनुगच्छसि ।
राघवस्यान्तरप्रेप्सुस्तथैनं नाभिपद्यसे ॥ १७
एवमुक्तो हि वैदेह्या संरब्धो रक्तलोचनः ।
क्रोधात्प्रस्फुरमाणोष्ठ आश्रमादभिनिर्गतः ॥ १८
एवं ब्रुवाणं सौमित्रिं रामः संतापमोहितः ।
अब्रवीद्दुष्कृतं सौम्य तां विना यत्त्वमागतः ॥ १९
जानन्नपि समर्थं मां रक्षसां विनिवारणे ।
अनेन क्रोधवाक्येन मैथिल्या निःसृतो भवान् ॥ २०

G. 3. 66. 22
B. 3. 59. 22
L. 3. 66. 20

---

14 $^{a}$) B3.4 G2 M1 उक्त्वा (for उक्ता). —$^{b}$) Ñ2 -चेतसा; V1 B1.3.4 -मानसा; M3 -लोचना (for -चेतना). Ś1 D1.2 पुनर्मां (Ś1 सुनंदा) रक्तलोचना; D3 पुनराकुललोचना. —$^{c}$) B3 D2 [अ]श्रु विमुंचंती (for [अ]श्रूणि मुञ्चन्ती). —$^{d}$) M3 करुणं (for दारुणं). Ś1 D1–3 दारुणार्थंप (D3 °मि)दं वचः; Ñ2 V1 B1.3.4 D5.7 तदा मां परुषं वचः.

15 $^{a}$) Ś1 D1.2 पापं (for भावो). G3 मन (for तव). Dt1 Ct [अ]त्यर्थ- (for °र्थं). Ñ1 भावान्मम कृतेत्यर्थं. —Dm1 om. (hapl.) $15^{b}$–$16^{c}$. Ñ1 illeg. from एव in $15^{b}$ up to च in $15^{d}$. —$^{b}$) D8 G3 पापाचार-; M पापभाव- (for पाप एव). Ś1 D1–3 पापस्य हृदि वर्तते; Ñ2 V1 B1.3.4 D5.7 पाप(B3 दुष्ट)भावोसि लक्ष्मण. —$^{c}$) Ñ2 V1 B1.3.4 D4.5.7.8 G M1.2 विनाशं (for विनष्टे). G(ed.) भर्तरि (for भ्रा°). Ś1 D1.2 L(ed.) ह्यर्थं; Dg1 Dt1 D6 T M3 प्राप्तुं; D3 ज्येष्ठे (for प्राप्ते). —$^{d}$) V1 त्वं नैवं; G2 यदि त्वं; G(ed.) न त्वेनां (for न च त्वं). D1 तम् (for माम्). D3 transp. त्वं and माम्. Dt1 D6.8 T2 Ct अवाप्स्यसे. Ś1 Ñ2 B1.4 D5.7 तन्नैव (Ś1 न मे त्वं; B1 त्वं वैरं; B4 मां नैवं) समवाप्स्यसि; B3 मामात्मानमवाप्स्यसि; L(ed.) नवं त्वं समवाप्स्यसि.

16 Dm1 om. $16^{abc}$ (cf. v.l. 15). —$^{a}$) Ś1 D1.2 प्रेषितो; Ñ1 संहृतो; Ñ2 V1 B1.3.4 D3.5.7 प्रहितो (for संकेताद्). —$^{b}$) Ś1 B3 Dg1 D7 T3 समुप- (for समनु-). Ñ1 illeg. for गच्छ. M1 राघवं ह्यनुगच्छसि. —Ś1 om. (hapl.) $16^{c}$–$17^{b}$. B3 repeats $16^{cd}$ after $17^{ab}$. —$^{c}$) Ñ1 तथा; M2 यदा (for यथा). Ñ2 V1 B1.3(both times).4 D5.7 क्रोशमानं तथा हि त्वं; D1–3 विक्रोशंतं यथा ह्ये(D3 °प्ये)नं. —$^{d}$) V1 Dt1 Dm1 T3 G2 नैवम्; D1.2 न त्वम्; D3 नार्यम् (for नैनम्). Ñ2 V1 B3(second time).4 D5.7 अभ्युपपद्यसे; B1 यद्युप°; B3 (first time) समुप°; M3 अभ्यवपश्यसे. Ñ1 नैनं त्वं नाभिपद्यसे. —After 16, Ñ2 V1 B1.3.4 D5.7 ins. :

1116* इयं मृते भ्रातरि मे मयि वत्स्यति मैथिली ।
न चाहमाशां कुर्यां ते पाप प्रच्छन्नचारक ।

[(l. 1) B4 मे भ्रातरि मृते (by transp.). —(l. 2) B4 -चारिक (for -चारक). Ñ2 D5.7 पापां प्रच्छन्नचारिकां; V1 पापप्रच्छन्नचारिणं (for the post. half).]

17 Ś1 om. $17^{ab}$ (cf. v.l. 16). —$^{ab}$) D1–3 शत्रुः (for रिपुः). Ñ1 -चारित्रो; D4 -चार त्वं (for -चारी त्वं). —Ñ1 illeg. from $17^{b}$ up to स्थै in $17^{d}$. D1.3 मद(D3 °मा)र्थमुपगच्छसि; D2 तदर्थमुपसर्पसि (for $^{b}$). Ñ2 V1 B1.3.4 D5.7 नूनं प्रच्छन्नरूपस्त्वं रामं समनु(V1 B3.4 °मुप)गच्छसि. —After $17^{ab}$, B3 repeats $16^{cd}$. —$^{c}$) Ś1 Ñ2 V1 B1.3 Dg1 Dt1 Dm1 D1.3–6.8 T [अं]तरं(Dg1 D8 °रे) (for °र-). V1 लिप्सुस् (for -प्रेप्सुस्). —$^{d}$) V1 तथैवं; B3 तवैवं; D2 यथेमं; D3 यथैतं; T1.2 तदैनं; G2 तथैतं; G3 न चैनं (for तथैनं). B3 नातिपद्यसे; Dt1 नाभिपद्यते; D5 अभि°; D7 वाभि°; G3 M3 नाभिपत्स्यसे (for नाभिपद्यसे). Ś1 D1 ततो ना(D1 मा)भ्यवपद्यसे.

18 D7 reads from $18^{a}$ up to संर in $18^{b}$ in marg.. —$^{a}$) Ś1 Ñ1 D1–4 [ऽ]स्मि; Ñ2 V1 B1.3.4 Dg1 Dt1 D5–7 T3 M1 तु; M3 [ऽ]पि (for हि). Ñ1 मैथिल्या (for वैदेह्या). —$^{cd}$) Dt1 reads from ष्ठ up to र्गतः in marg. Ñ2 V1 B4 D5.7 प्रस्फुरमाणौष्ठो; D8 °रमाणेपि (with hiatus); M3 °माणोष्ठम् (for °माणोष्ठ). B3 क्रोधेन स्फुरमाणौष्ठो (for $^{c}$). Dm1 D4.8 T1 G M अस्मि (for अभि-). Ñ1 सहसा *****; Ñ2 V1 B1.3.4 D5.7 निःसृतोहमथाश्रमात् (for $^{d}$). Ś1 D1–3 आश्रमात्स्फुरिताग्रौ(D1.3 °ग्रो)ष्ठः क्रोधादस्मि विनिर्गतः.

19 D1 om. (hapl.?) 19. —$^{b}$) Dg1 reads संताप in marg. Ñ1 संतापमागतः; D2 °पमोहितं (for °मोहितः). —$^{c}$) Ś1 D2 न कृतं; Ñ V1 D3 दुःकृतं; T2 दुष्करं (for दुष्कृतं). —$^{d}$) Ś1 य आश्रमात्त्वमागतः (sic); Ñ1 योश्रमादिह मागतः; Ñ2 V1 B1.3.4 D5.7 यस्त्व(Ñ2 B3 D7 °त्त्व)मागम(Ñ2 D5.7 °त) आश्रमात्; Dg1 Dt1 D6 T3 M3 तां विना त्वमिहा(M3 यत्त्व हा [sic])गतः; D2.3 आ(D3 यो)श्रमात्त्वमिहागतः. —After 19, Ñ1 reads $22^{ab}$.

20 ☞ V2 resumes from here (cf. v.l. 3.53.1). —Ñ1 om. $20^{ab}$. —$^{a}$) D3 जानता (sic) (for जानन्). Ñ2 V B1.3.4 D5.7 वनस्थं (for समर्थं). Dt1 मा (for मां). —$^{b}$) Dg1 T3 अपि वारणे; Dt1 D8 अपवारणे (for विनि°). B4 राक्षसानां निवारणे. —Ñ1 mostly illeg. for $20^{cd}$. —$^{d}$) Dg1 गर्हितो; Dt1 Dm1 D4.6.8 T3 G3 M1.3 Ct निर्गतो (for निःसृतो). Ś1 D1.2 किमर्थं निःसृतस्ततः; D3 किमर्थं निःसृतोश्रमात्.

G. 3. 73. 5 B. 3. 68. 4 L. 3. 75. 5 जटायो यदि शक्नोषि वाक्यं व्याहरितुं पुनः ।
सीतामाख्याहि भद्रं ते वधमाख्याहि चात्मनः ॥ ४
किंनिमित्तोऽहरत्सीतां रावणस्तस्य किं मया ।
अपराद्धं तु यं दृष्ट्वा रावणेन हृता प्रिया ॥ ५
कथं तच्चन्द्रसंकाशं मुखमासीन्मनोहरम् ।
सीतया कानि चोक्तानि तस्मिन्काले द्विजोत्तम ॥ ६
कथंवीर्यः कथंरूपः किंकर्मा स च राक्षसः ।
क्व चास्य भवनं तात ब्रूहि मे परिपृच्छतः ॥ ७
तमुद्वीक्ष्याथ दीनात्मा विलपन्तमनन्तरम् ।
वाचातिसन्नया रामं जटायुरिदमब्रवीत् ॥ ८

1226* इदमस्य शरीरं वै गतप्राणं प्रदृश्यते ।

[ D1.2 पुरा देहं ( for शरीरं वै ). ];

while Ñ2 V B1.3.4 D5.7 subst. :

1227* मन्दप्राणो ह्ययं पक्षी कथंचिद्यदि जीवति ।
स्वरहीनश्च दीनश्च विक्लवः समुदीक्ष्यते ।

[ ( l. 2 ) Ñ2 D7 विक्लवं; B4 विह्वलः ( for °वः ). Ñ2 V1 B1 समुदीक्षते ( for °दीक्ष्यते ). ]

—Thereafter both the groups cont. :

1228* यावदेव ससंज्ञोऽयं यावच्छक्नोति भाषितुम् ।
तावत्पृच्छाम्यहं सीतां राजानं पिशिताशिनाम् ।

[ ( l. 1 ) B3 समाज्ञाय ( for ससंज्ञोऽयं ). Ñ2 V2 भाषितं; V1 जीवितुं ( for भाषितुम् ). D1 यावच्छक्तो विभाषितुं ( for the post. half ). —( l. 2 ) D1.3 प्रेक्ष्याम्यहं ( for पृच्छा° ). V1 गृध्र- ( for सीतां ). Ś1 D2 तं चापि; D1.3. पतिं च ( for राजानं ). Ś1 D2 पिशिताशि( D2 °श )नं. ]

4 Ñ1 illeg. for $4^{ab}$. —$^{a}$) B4 जटायुर्. Dt1 शक्तोषि ( for शक्नोषि ). —$^{b}$) D4 व्यवहितं ( for व्याहरितुं ). Ś1 वाचा मां भाषितुं पुनः; Ñ2 V2 B1.3.4 D5.7 वाचमीरयितुं पुनः; D1.3 वाचमाभाषितुं पुनः; D2 वाचमाभाष्यतां पुनः. —$^{c}$) Ñ2 V B1.3.4 D5.7 आचक्ष्व; D2 आभाष्य ( for आख्याहि ). —$^{d}$) G3 स्वयम् ( for वधम् ). Ś1 कस्मिन्देशे हृतेति सा; Ñ2 V B1.3.4 D5.7 वध( B3 धर्म )मात्मन एव च; D1–3 कं च देशं हृतेति सा. —After 4, Ś1 Ñ2 V B1.3.4 D1–3.5.7 M2 ( *inf. lin. sec. m.* ) ins. :

1229* कृत्वा त्वामहमव्यग्रं संरूढव्रणमुत्सहे ।
गन्तुं वर्षसहस्राणि जीव मे चिरमण्डज ।

[ ( l. 1 ) M2 [ अ ]नामयम् ( for त्वामहम् ). Ś1 D1–3 त्वाम ( D3 त्वां त्व )नामयमव्यग्रं ( for the prior half ). V1 संकट-; D2 °मूढ- ( for °रूढ- ). Ś1 D3 -प्राणम् ( for -व्रणम् ). —( l. 2 ) Ś1 D1–3 वर्तुं; B1 भर्तुर्; M2 भोक्तुं ( for गन्तुं ). M2 -सहस्रेण ( for °स्राणि ). Ñ2 V1 B4 D5.7 जीवसे; V2 जीव त्वं ( for जीव मे ). M2 इच्छतः ( for अण्डज ). Ś1 D1–3 जीवन्वै विचरिष्यसि ( for the post. half ). ]

5 $^{a}$) Dt1 D6 Ct जहारार्यां; Cg as in text ( for ऽहरत्सीतां ). Ś1 Ñ V B1.3.4 D5.7 किंनिमित्तं हृता सीता; D1.2.4 G3 M3 किंनिमित्तं हरेत्सीतां; D3 किमर्थमहरत्सीतां; T2 G2 किंनिमित्तं हरत्सीतां ( metri causa ). —$^{b}$) Ś1 Ñ V B1.3.4 D1–3.5.7 रावणस्य च; M3 रावणः कश्च ( for रावणस्तस्य ). D4 मया वैरं यदस्य किं. —$^{c}$) Ś1 Dg1 Dt1 D1–4.6.8 T M Ck.t अपराधं ( for °द्धं ). Ñ V B1.3.4 D1–3.5.7 क्व वा ( for तु यं ). —$^{d}$) Ś1 Ñ V B1.3.4 D1–3.5.7 मम ( for हृता ). ❀ Cv : किंनिमित्तोहरत्सीतां रावणस्तस्य किं मया । अपराद्धं तु यं दृष्ट्वा रावणेन हृता प्रिया इति पाठः ।; Cm : किंनिमित्त इति । किं निमित्तं यस्य सः. ❀

6 $^{a}$) Ñ2 V B1.3.4 D5.7 इंदु- ( for चन्द्र- ). —$^{b}$) Ñ1 मनोगमं; V1 G1 मनोरमं ( for °हरम् ). —D4 om. ( hapl. ? ) $6^{c}$–$8^{b}$. —$^{c}$) G2 सीताया ( for सीतया ). —For $6^{cd}$, Ñ2 V B1.3.4 D5.7 subst. :

1230* सीताया ह्रियमाणायास्तदा घोरेण रक्षसा ।

[ V1 तथा ( for तदा ). B1 क्रूरेण ( for घोरेण ). ]

7 D4 om. 7 ( cf. v.l. 6 ). —$^{a}$) Ñ2 V B1.3.4 D5.7 G2 कथंरूपः कथंवीर्यः ( by transp. ). —$^{b}$) D6 om. च ( subm. ). V2 B1.3.4 Dt1 D5.7 T1.2 M3 च स ( by transp. ) ( for स च ). V1 रावणः ( for राक्षसः ). —$^{c}$) Dg1 किं ( for क्व ). —$^{d}$) B1 तद्ब्रूहि ( for ब्रूहि मे ). —After 7, Ñ2 V B1.3.4 D5 ins. :

1231* कथं वासमनुप्राप्तो दण्डकं सुमहद्वनम् ।
चित्रकाननसंपन्नं बहुपादपसंकुलम् ।

[ ( l. 1 ) V स( V2 तु ) सम्- ( for वासम् ). B3 उपप्राप्तो ( for अनु° ). ]

8 D4 om. $8^{ab}$ ( cf. v.l. 6 ). —D7 om. $8^{a}$–$9^{b}$. —$^{a}$) Ś1 Dt1 D6 G2 M1 उद्वीक्ष्य स( G2 M1 तु ); Ñ2 V B3 Dg1 D2.3.5 M2.3 उदीक्ष्याथ; B1 उदैक्ष्यत ( for उद्वीक्ष्याथ ). V1 मंदात्मा; Dg1 Dt1 Dm1 D8 T3 G2.3 M1.3 धर्मात्मा; Cg as in text ( for दीनात्मा ). Ñ1 उदीक्ष्य सीतारहितं. —$^{b}$) Ñ1 D6 अनंतकं; Ñ2 V B1.3.4 D5 अरिंदमं; Dt1 Dm1 D8 G2.3 M1 अनाथवत् ( for अनन्तरम् ). —After $8^{ab}$, V2 B1.3.4 ins. :

1232* कृच्छ्रादुन्मील्य चाश्वास्य जटायुः परमातुरः ।

[ V2 illeg. B1 कृच्छ्रादुत्तिष्ठदाश्वस्य ( for the prior half ). B4 परमादरः. ]

—$^{c}$) Ś1 Ñ1 D1–3 [ अ ]वसन्नया; Dt1 D6 विक्लवया ( for [ अ ]तिसन्नया ). Ñ2 V B1.3.4 D5 स वाचा व्यक्तया रामं. —$^{d}$) Ñ2 V B1.3.4 Dt1 Dm1 D5.6.8 इदं वचनमब्रवीत्.

सा हृता राक्षसेन्द्रेण रावणेन विहायसा ।
मायामास्थाय विपुलां वातदुर्दिनसंकुलाम् ॥ ९
परिश्रान्तस्य मे तात पक्षौ छित्त्वा निशाचरः ।
सीतामादाय वैदेहीं प्रयातो दक्षिणामुखः ॥ १०
उपरुद्धयन्ति मे प्राणा दृष्टिर्भ्रमति राघव ।
पश्यामि वृक्षान्सौवर्णानुशीरकृतमूर्धजान् ॥ ११
येन याति मुहूर्तेन सीतामादाय रावणः ।
विप्रनष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते ॥ १२
विन्दो नाम मुहूर्तोऽसौ स च काकुत्स्थ नाबुधत् ।
झषवद्बडिशं गृह्य क्षिप्रमेव विनश्यति ॥ १३
न च त्वया व्यथा कार्या जनकस्य सुतां प्रति ।
वैदेह्या रंस्यसे क्षिप्रं हत्वा तं राक्षसं रणे ॥ १४
असंमूढस्य गृध्रस्य रामं प्रत्यनुभाषतः ।
आस्यात्सुस्राव रुधिरं म्रियमाणस्य सामिषम् ॥ १५ G. 3. 73. 19 B. 3. 68. 15. L. 3. 75. 16

---

9 D7 om. $9^{ab}$ (cf. v.l. 8). —$^{a}$) D4 T1.2 G1 M2 Cg हृता सा (by transp.); G3 संहृता (for सा हृता). —$^{b}$) Ñ1 [अ]मितौजसा; Ñ2 V B1.3.4 D5 बलीयसा; Dt1 D6 दुरात्मना (for विहायसा). —$^{c}$) D7 कथाम् (for मायाम्). G(ed.) आश्रित्य (for आस्थाय). Ś1 D1.2 विषमां (for विपुलां). —After 9, M2 (*inf. lin. sec. m.*) ins.:

1233* हा राघव महाबाहो हा सौमित्रे ह्रिये ह्यहम् ।
अनाथा रक्षसा राम इति दीनमुखाब्रवीत् ।

[(l. 2) Note hiatus between the two halves.]

10 V2 illeg. up to पक्षौ छि in $^{b}$. —$^{a}$) Ñ1 Dt1 D6 परिक्रांतस्य (for °श्रान्तस्य). Ñ2 B1.3 D5.7 से युद्धे; B4 युद्धे मे (for मे तात). V1 परिश्रांतस्य पक्षौ मे. —$^{b}$) V1 युद्धे छित्वा; G(ed.) छित्त्वा पक्षौ (by transp.) (for पक्षौ छित्त्वा). T1.2 स राक्षसः (for निशाचरः). —$^{d}$) Ñ2 D5.7 प्रस्थितो (for प्रयातो). Ñ1 दक्षिणामुखं; V1 T1.2 °णां दिशं; D4 °णोन्मुखं (for दक्षिणामुखः).

11 $^{a}$) Ś1 B4 उपरुंधंति (for उपरुद्धयन्ति). —$^{b}$) Ñ2 V1 B1.3.4 D5.7 भ्राम्य(D7 °म्य)ति (for भ्रमति). —$^{c}$) Ñ2 V B1.3.4 D5.7 एतांश्च(V1 °स्तु) (for सौवर्णान्). —V2 illeg. for $^{d}$. —$^{d}$) Ś1 शिरसोद्भूत-; D2 शिरसावृत- (for उशीरकृत-). Ñ2 V1 B1.3.4 D5.7 सौवर्णानिव सांप्रतं(V1 संप्रति).

12 Ñ1 illeg. for $^{a}$. —$^{a}$) Ś1 Ñ2 V B1.3.4 D1–3.5.7 राम (for याति). —M3 damaged from दाय in $^{b}$ up to ध in $^{c}$. —$^{b}$) Ñ1 G3 हरति; V1 B1.3.4 D1–3.7 आदत्त (for आदाय). —Ś1 om. $12^{c}$–$13^{d}$. —$^{cd}$) V2 तस्मिन्नष्टं; T1.2 G2.3 M2 विप्रणष्टं (for विप्रनष्टं). G2 यत्तु (for क्षिप्रं). D1.3 transp. क्षिप्रं and स्वामी. Ñ1 विप्रणष्टं धनं तस्मिंस्तत्स्वामी लभते पुनः; Ñ2 V1 B1.3.4 D2.5.7 तस्मिन्नष्टं धनं स्वामी क्षिप्रं संप्रतिपद्यते. ❀ Cm : तत्र नष्टं धनं; Ck : तत्प्रणष्टं धनं. ❀

13 Ś1 om. 13 (cf. v.l. 12). —$^{a}$) B4 विंध्यो; D1 वंदो (sic); D2 वृंदो; D3 वृंदो; M3 विंदो (for विन्दो). Ñ2 V B3.4 D5.7 तु; T1.2 [ऽ]यं; Cm as in text (for ऽसौ). —$^{b}$) Dt1 Dm1 D6 न (for स). Dt1 D6 सो (for न). Ñ1 न स काकुत्स्थ तं बुधाः (sic); Ñ2 V B1.3 D5.7 नावुध्यत स तं तदा; B4 नावबुध्यत्स तं तदा; D1–3 तं च(D1 तच्च) नाबुद्ध राक्षसः. —After $13^{ab}$, T1.2 ins.:

1234* स्वप्रियां जानकीं हत्वा रावणो राक्षसेश्वरः ।

—V2 illeg. from शं गृह्य up to $13^{d}$. —$^{c}$) D4 **वत्; D6 सद्ययावद् (corrupt) (for झषवद्). T1 G M बलिशं (for बडिशं). —$^{d}$) G3 damaged for मेव विन. —For $13^{cd}$, Ñ V1 B1.3.4 D1–3.5.7 subst.:

1235* झषो यथामिषं प्राप्य क्षिप्रं न स भविष्यति ।

[V1 गृध्रो; B4 मत्स्यो (for झषो). Ñ1 ह्यस्वामिषं; D1.3 लोहामिषं (for यथामिषं). Ñ1 यद्वद् (for प्राप्य). V1 गृध्रो (for क्षिप्रं). Ñ2 om. न (subm.). B3 D5.7 स न (by transp.); B4 नायं; D3 च स (for न स). Ñ1 बडिशाद्धि प्रणश्यति; D1 क्षिप्रं च स विनंक्ष्यति; D2 क्षिप्रं स विनशिष्यति (for the post. half).]

14 $^{a}$) Ś1 D1–3 हि (for च). Ś1 व्यथा त्वया (by transp.). —$^{b}$) Ś1 D1–3 [आ]त्मजां (for सुतां). —For $14^{ab}$, Ñ V B1.3.4 D5.7 subst.:

1236* तत्र व्यथा राजपुत्र कर्तव्या राम रंस्यसे ।

[Ñ1 न च; Ñ2 तनु- (for तत्र). B1 राजपुत्र्याः. Ñ1 गन्यतां (for रंस्यसे). —D7 (erroneously) repeats पुत्र कर्तव्या राम after राम in the post. half.]

—$^{c}$) Ñ1 B4 वैदेही- (for वैदेह्या). Ñ1 illeg.; Ñ2 V B1.3.4 D5.7 सहितः(B3 °तं) (for रंस्यसे). D1–3 पत्न्या (for क्षिप्रं). Ś1 वैदेहीं रंस्यसे पत्नीं. —$^{d}$) Ñ V B1.3.4 Dm1 D5.7.8 G1.3 M1 रावणं रणे; Dt1 D6 रणमूर्धनि (for राक्षसं रणे).

15 $^{a}$) B3 सुसंमूढस्य; G(ed.) असंस्थानस्य (for असंमूढस्य). D7 विहगः (for गृध्रस्य). —$^{b}$) V1 रामे (for रामं). Ñ2 V1 B1.3.4 D5.7 प्रत्यनु(B4 °भि)भाषिणः (for °भाषतः). —V2 illeg. from सु in $^{c}$ up to वैश्रव in $16^{b}$. —Dg1 reads $15^{cd}$ in marg. —After 15, Ś1 Ñ2 V B1.3.4 D1–3.5.7 ins.:

1237* इदं चोवाच वचनं म्रियमाणो विहंगमः ।
सर्वतश्चारयन्दृष्टिमस्थिरामतिविक्लवः ।

[(l. 1) V2 प्रोवाच (for चो°). —(l. 2) D1 चालयन् (for चार°). B3 -विह्वलः; B4 -विक्रमः (for -विक्लवः). Ś1 रामं तत्राश्रुविक्लवं; D1–3 अस्थिरामश्रुविक्लवां (for the post. half).]

—Thereafter, V2 B4 D5.7 cont.:

G. 3. 73. 21
B. 3. 68. 16
L. 3. 75. 18

पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च ।
इत्युक्त्वा दुर्लभान्प्राणान्मुमोच पतगेश्वरः ॥ १६
ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः ।
त्यक्त्वा शरीरं गृध्रस्य जग्मुः प्राणा विहायसम् ॥ १७
स निक्षिप्य शिरो भूमौ प्रसार्य चरणौ तदा ।
विक्षिप्य च शरीरं स्वं पपात धरणीतले ॥ १८
तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासुमचलोपमम् ।
रामः सुबहुभिर्दुःखैर्दीनः सौमित्रिमब्रवीत् ॥ १९
बहूनि रक्षसां वासे वर्षाणि वसता सुखम् ।
अनेन दण्डकारण्ये विचीर्णमिह पक्षिणा ॥ २०
अनेकवार्षिको यस्तु चिरकालसमुत्थितः ।
सोऽयमद्य हतः शेते कालो हि दुरतिक्रमः ॥ २१
पश्य लक्ष्मण गृध्रोऽयमुपकारी हतश्च मे ।
सीतामभ्यवपन्नो वै रावणेन बलीयसा ॥ २२

---

1238* समुद्रे दक्षिणे द्वीपे लंकाधिपतिरीश्वरः ।

16 V2 illeg. up to वैश्रव in $^{b}$ (cf. v.l. 15). —$^{b}$) G3 तु (for च). —$^{c}$) Ñ1 illeg. for इत्युक्त्वा दुर्लभा. Ñ2 V B1.3.4 D5.7 दुर्बल: (for दुर्लभान्). —$^{d}$) Ś1 विहगेश्वर: (for पतगे°). ❀ Cg: अथ रावणवंशं वक्तुमुपक्रमते पुत्र इति । साक्षात्पुत्रः औरस इत्यर्थः । अस्योत्तरार्धं "अध्यास्ते नगरीं लङ्कां रावणो राक्षसेश्वरः" इति बोध्यम् । उत्तरत्र संपातिवचने इदमेव पूर्वार्धमुपादाय अस्योत्तरार्धस्य कथनादिति लोकाचार्योक्तम् । इत्युक्त्वा एतावन्मात्रमुक्त्वा भवनादिकथनपूर्वमित्यर्थः । दुर्लभान् ब्रूहि ब्रूहीति पृच्छते रामाय साकल्येन विज्ञापनपर्यन्तं प्राणा न स्थिताः हन्तेति ऋषिः शोचति. ❀

17 $^{b}$) Ś1 V1 कृतांजलि: (sic) (for °ले:). —$^{c}$) Ñ2 illeg. for रं गृध्रस्य. Ñ1 शरीरं गृध्रराजस्य. —V2 illeg. from प्राणा up to 18$^{a}$. —$^{d}$) Dt1 Dm1 D6.8 प्राणा जग्मुर् (by transp.) (for जग्मुः प्राणा). Ś1 D1–3 विहायसा; Ñ1 मनोजवा:; Ñ2 V1 B1.3.4 D5.7 जटायुष: (for विहायसम्). ❀ Cg: प्राणः सूक्ष्मशरीरेन्द्रियप्राणसहित आत्मेत्यर्थः. ❀

18 V2 illeg. for $^{a}$ (cf. v.l. 17). —$^{a}$) Ś1 D1–3 सन्निप(D1.3 °पा)त्य; B3 (*sup. lin.* also as in text) सन्निकृष्य (for स निक्षिप्य). —$^{b}$) Ś1 प्रसज्य; T2 प्रसाद्य (for प्रसार्य). Dt1 Dm1 D1–4.6.8 G M2.3 तथा (for तदा). Ñ V B1.3.4 D5.7 प्रसार्य च शिरोधरां. —V1 om. 18$^{cd}$. —$^{c}$) D4 G1.2 M1 वि(G2 स)निक्षिप्य; G3 निक्षिप्य च; Cg as in text (for विक्षिप्य च). Ñ V2 B1.3.4 D5.7 विक्षिप्य चरणौ गृध्र:.

19 D6 om. 19. —$^{a}$) D3 व्यापन्नं (for तं गृध्रं). Ñ2 V B1 D5.7 पतितं (for ताम्राक्षं). Ś1 D1.2 व्यापन्नं प्रे(D1 वी)क्ष्य तं गृध्रं; B3 तं प्रेक्ष्य पतितं गृध्रं; B4 तं गृध्रं पतितं वीक्ष्य. —Ñ1 illeg. from सु in $^{b}$ up to दीन: in $^{d}$. —$^{b}$) G(ed.) पर्वतोपमं (for अचलो°). —V2 illeg. from $^{c}$ up to सौमित्रि in $^{d}$. —$^{c}$) Ñ2 V1 B1.3.4 D5.7 रामः सुबहुदुःखार्तो. —$^{d}$) Ś1 D2 दीनं; Ñ2 V1 B1.3.4 D5.7 वच: (for दीन:). Ś1 D1–3 लक्ष्मणम् (for सौमित्रिम्).

20 V1 om. from नि up to वर्षा in $^{b}$. —$^{a}$) Ñ1 B1.3.4 G2 राक्षसावासे (for रक्षसां वासे). —$^{b}$) Ñ1 om.; D2 वर्षाणां (for वर्षाणि). Ś1 Ñ1 D2 वसत: (sic); D1 भ्रमता (for वसता). —After 20$^{ab}$, T1.2 ins.:

1239* पक्षिराजेन वृद्धेन तातमित्रेण नः सुखम् ।

—$^{c}$) G(ed.) दंडकारण्यं. Ś1 D1.2 अनेकानि सहस्राणि. —$^{d}$) Ś1 वाहितानीह; B3 Dg1 Dt1 D6.8 T1 Cr.g.k.t विशीर्णमिह; D1.2 विहतानीह; G2 विचीर्णमिव; Cv.m.gp as in text (for विचीर्णमिह). Ñ1 ** माना (illeg.) समंतत:.

21 $^{a}$) Dg1 M3 अनेन (sic) (for °क-). Ś1 D2 असौ वै (D2 °नेन) दंडकारण्ये; Ñ V B1.3.4 D1.3.5.7 अनेक(V2 °न)वर्षशतिकश् (Ñ1 D1 °साहस्रश्; D3 °कालश्च). —$^{b}$) Ś1 चिरकालं सुखं स्थित:; Ñ1 चिरकालोषित: समा:; V1 B4 D1 चिरकालमुप(B4 °मत्र)स्थित:; D2 चिरकालमुपोषितं; D3 चिरमत्र व्यवस्थित:. —D6 om. 21$^{c}$–22$^{d}$. V2 illeg. from $^{c}$ up to का in $^{d}$. —$^{c}$) Dm1 चासौ (for शेते). —$^{d}$) B4 [ऽ]यं (for हि). —After 21, Ñ1 ins.:

1240* अपकार्यहिते युक्तः स चायं पक्षिणो वरः ।
धरण्या यतितः **********।;

while B3 ins.:

1241* कालः सृजति भूतानि कालः संहरते पुनः ।
सुखदुःखप्रदाता च कालमूलमिदं जगत् ।

—Thereafter B3 cont.; Ñ2 V B1.4 D5.7 M3 ins. after 21, while Ś1 D2 subst. for and D1 ins. after 22:

1242* ततः प्रियहिते युक्तं मृतं दृष्ट्वा जटायुषम् ।
अब्रवील्लक्ष्मणं रामो मुखेन परिशुष्यता ।

[ (l. 1) M3 उपकार- (for ततः प्रिय-). Ś1 D1.2 न मे कार्यमिदं युक्तं (for the prior half). Ś1 त्यक्त्वा; D2 मुक्त्वा (for दृष्ट्वा). D3 औपकार्ये हि तं दृष्ट्वा हितयुक्तं जटायुषं. —After l. 1, Ś1 ins.:

1242(A)* व्रजाम्यसंस्कृतं ह्येनं गृध्रराजं पितुः समम् ।

—(l. 2) V1 illeg. after अब्रवील्. Ś1 D1.2 इत्याह (for अब्रवील्). ]

22 D6 om. 22 (cf. v.l. 21). D1 reads 22 in marg. —$^{b}$) Ñ2 V B1.3.4 D5 G2.3 M1.3 द्विजोत्तम:; D3 भृशं च मे (for हतश्च मे). —V2 illeg. for 22$^{cd}$. —$^{c}$) Ñ1 illeg. from म up to वै. Ñ2 M2 अभ्युपपन्नो (for अभ्यव°). V1 Ñ2 Dt1 हि; Dm1 D8 G3 [ऽ]यं; D4 [ऽ]सौ (for वै). V1 B1.3.4 D5.7 सीतामभ्युपपन्नश्च (V1 °स्य); D3 सीतामभ्यवपन्नैको. —$^{d}$) Ñ1 D3.4 G M2.3 हतो रणे; Ñ2 V1 B1.3.4

गृध्रराज्यं परित्यज्य पितृपैतामहं महत् ।
मम हेतोरयं प्राणान्मुमोच पतगेश्वरः ॥ २३
सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः ।
शूराः शरण्याः सौमित्रे तिर्यग्योनिगतेष्वपि ॥ २४
सीताहरणजं दुःखं न मे सौम्य तथागतम् ।
यथा विनाशो गृध्रस्य मत्कृते च परंतप ॥ २५
राजा दशरथः श्रीमान्यथा मम महायशाः ।
पूजनीयश्च मान्यश्च तथायं पतगेश्वरः ॥ २६
सौमित्रे हर काष्ठानि निर्मथिष्यामि पावकम् ।
गृध्रराजं दिधक्षामि मत्कृते निधनं गतम् ॥ २७ G. 3. 73. 35 B. 3. 68. 27 L. 3. 75. 32

D5.7 M1 हतो बली; D1 च संयुगे ( for बलीयसा ). —For 22, Ś1 D2 subst. 1242*; while after 22 D1 ins. 1242*.

23 D3 transp. 23 and 24. —$^{a}$ ) Ś1 D1.3 गृध्रो राज्यं; Dt1 D2.4 T2 G1 M3 गृध्रराजं; Cg as in text ( for गृध्रराज्यं ). —$^{c}$ ) Dt1 D6 एष; D2 प्रियान् ( for अयं ). —$^{d}$ ) Ś1 D1-3 मुक्तवान् ; Ñ2 B1.3.4 D7 अमुंचत् ; V D5 मुंचते ( for मुमोच ). —After 23, M3 reads 25$^{cd}$.

24 Ñ1 om. ( hapl. ) 24-26. D3 transp. 23 and 24. T1.2 transp. 24 and 25. —$^{a}$ ) B1 सर्वतः ( for °त्र ). —V2 illeg. from धवो in $^{b}$ up to तिर्यग्यो in $^{d}$. —V1 om. शूराः शर. —$^{d}$ ) Ś1 -गता अपि ( for -गतेष्वपि ). —After 24, B3( marg. within brackets ) ins. :

1243* पूर्वजन्मकृताद्दोषात्पापात्मानो भवन्ति हि ।
अपि ब्रह्मकुले जातो यथायं विश्रवःसुतः ।

B3 cont.; while Ś1 Ñ2 V B1.4 D1.2.5.7 ins. after 24 :

1244* अयं सखा मम पितुः सानुक्रोशो विहंगमः ।
मम हेतोः पराक्रान्तो गतः स्वर्गं न संशयः ।
पुत्रैरपत्यैर्दारैश्च परिहीनो महावने ।
अस्मदर्थाय धर्मात्मा गतो वैवस्वतक्षयम् ।

[ ( l. 1 ) Ś1 D1.2 अयं पतगराजो वै( Ś1 °सौ ) ( for the prior half ). Ś1 D1.2 सुहृत्प्रियः ( for विहंगमः ). —( l. 2 ) V B1.3.4 परिश्रां( B1.3 °क्रां )तो ( for पराक्रान्तो ). —V2 illeg. from पत्यैर् up to गतो in l. 4. —( l. 3 ) V1 B1 D1 अमात्यैर् ( for अप° ). Ñ2 D2.5.7 पुत्रैरमात्यैर्भृत्यै( D2 °दांतै )श्च; B4 पुत्रैदारैरमात्यैश्च ( for the prior half ). V1 B3 D1.2 परिक्षीणो ( for °हीनो ). Ś1 D1.2 महाबलः ( for °वने ). —( l. 4 ) Ś1 D1.2 अनाथ इव; V1 अस्मदर्थं हि ( for अस्मदर्थाय ). V1 गतः स्वर्गं न संशयः ( for the post. half ). ]

25 Ñ1 om. 25 ( cf. v.l. 24 ). T1.2 transp. 24 and 25. —$^{b}$ ) Ś1 D1.2 न मे वीर तथाविधं( Ś1 °भवत् ); Ñ2 V B1.3.4 D5.7 न मे दुःखं तथाविधं; D3 न मां वीर तथा तुदेत्. ❀ Cm : तथा आगतमिति च्छेदः ।; so also Cv.g.t ❀ —M3 reads 25$^{cd}$ after 23. —$^{c}$ ) Ś1 B1.4 T1.2 विनाशे; G1.2 °शात् ( for विनाशो ). —$^{d}$ ) Ñ2 B3.4 D1.2.5 न; D3 ते ( for च ). ❀ Cv : यथा विनाश इत्याद्यर्धं सीताहरणजमित्यादेरर्धस्य परतो द्रष्टव्यम् । पूर्वत्र तु प्रमादाल्लिखितम्. ❀ —After 25, V2 ins.; while V1 B4 ins. after 28; whereas D3 ins. l. 4–7 after 28 and l. 8–11 after 25 :

1245* एष गृध्रस्तु सौमित्रे रक्षसा निहतो रणे ।
अयं परिणतो बुद्ध्या वयसा च परंतप ।
शस्त्रेण निधनं प्राप्तो वृद्धः पितृसखा च मे ।
यथा प्राणहृतं कर्म गृध्रेण सुमहात्मना ।
प्रतिरोद्धुं महारौद्रं रावणं क्रूरदर्शनम् ।
आख्यास्यति प्रवृत्तिं च स्वर्गलोके महायशाः ।
गृध्रराजो महातेजास्तातस्य शुभकर्मणः ।
कुले महति जातस्य हृतभार्यस्य लक्ष्मण ।
यत्कृतं गृध्रराजेन प्राणान्संपरिरक्षता ।
गवार्थे ब्राह्मणार्थे वा स्त्रीहेतोर्वापि लक्ष्मण ।
परित्यजति यः प्राणान्सर्वलोके स पूज्यते ।
ये लोकाः शस्त्रसेव्यानां शूराणां पतगोत्तम ।
अपराङ्मुखपक्षाणां ताँल्लोकान्व्रज सुद्विज ।

[ V2 partially illeg. after एष in l. 1. —( l. 1 ) V1 वने ( for रणे ). —V2 illeg. for the prior half of l. 2. —( l. 2 ) V2 B4 परंगतः ( for °तप ). —( l. 4 ) V1 प्राणाहुतं; V2 प्राणहतं; D3 प्राणं कृतं ( for प्राणहृतं ). —V2 illeg. for l. 5. —( l. 5 ) D3 प्रतियुद्धय महाघोरराक्षसं घोरदर्शनं. —( l. 7 ) D3 महाप्राज्ञस्. V1 क्षुद्रकर्मणः ( for शुभ° ). D3 पितुर्दशरथस्य मे ( for the post. half ). —V2 illeg. from भार्यस्य up to संपरि in l. 9. —( l. 8 ) V1 D3 एतदार्यस्य लक्ष्मण( D3 लक्षणं ) ( for the post. half ). —( l. 9, ) V1 प्राणान्परिरिरक्षता ( for the post. half ). —After l. 9, V2 D3 ins. :

1245( A )* आर्यो भवति वृत्तेन न कुलेन न विद्यया ।
पक्षिणोऽस्य समाचारं पश्य लक्ष्मण यादृशम् ।

[ V2 illeg. after भवति in l. 1. —( l. 1 ) D3 ( also ) च ( for second न ). —( l. 2 ) V2 तस्य सीता- ( for पक्षिणोऽस्य ). ] —V2 illeg. from तोर्वापि in l. 10 up to स in l. 11. —( l. 10 ) V2 च ( for वा ). —( l. 11 ) D3 यः परित्यजति प्राणान्ब्रह्मलोके महीयते. —( l. 13 ) V अपराङ्मुखानां क्षीणानां तं लोकं व्रजतु द्विजः( V2 °ज वै द्विज ). ]

—Thereafter, V2 erroneously reads 30 repeating it in its proper place.

26 Ñ1 om. 26 ( cf. v.l. 24 ). —$^{c}$ ) B3 reads मान्यश्च in marg. —$^{d}$ ) D3 स ( for [ अ ]यं ).

27 V2 illeg. up to निर्मथिष्या in $^{b}$. —$^{a}$ ) Ś1 Ñ V1 B1.3.4 D1-3.5.7 लक्ष्मणाहर( Ñ1 °नय ). —$^{cd}$ ) Ś1 D1.2 दहिष्यामि; Ñ1 D3 प्रधक्ष्यामि( Ñ1 illeg. from घ up to ते in $^{d}$ ); Dg1 Dt1 Dm1 D6.8 T3 G3 M1.2 Ck दिधक्ष्यामि;

G. 3. 73. 36
B. 3. 68. 28
L. 3. 75. 33

नाथं पतगलोकस्य चितामारोपयाम्यहम् ।
इमं धक्ष्यामि सौमित्रे हतं रौद्रेण रक्षसा ॥ २८
या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः ।
अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥ २९
मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ।
गृध्रराज महासत्त्व संस्कृतश्च मया व्रज ॥ ३०
एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् ।
ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ॥ ३१
रामोऽथ सहसौमित्रिर्वनं यात्वा स वीर्यवान् ।
स्थूलान्हत्वा महारोहीननु तस्तार तं द्विजम् ॥ ३२
रोहिमांसानि चोद्धृत्य पेशीकृत्वा महायशाः ।
शकुनाय ददौ रामो रम्ये हरितशाद्वले ॥ ३३

$T_{1.2}$ $G_2$ हि धक्ष्यामि; $G_1$ वधिष्यामि (sic); $C$m.g as in text (for द्धिक्षामि). $\tilde{N}_2$ V $B_{1.3.4}$ $D_{5.7}$ पक्षींद्र सत्क($\tilde{N}_2$ संस्क)रिष्यामि. ✲ Ct: द्धिक्ष्यामि दग्धुमिच्छामि सद्गतिसिद्धये। इयन्नार्थः. ✲ —$^{d}$) $\tilde{N}_2$ V $B_{1.3.4}$ $D_{5.7}$ मदर्थे (for मत्कृते). $D_2$ सौमित्रे ममकृद्धतं.

28 $Dm_1$ om. 28.—$^{a}$) $Ś_1$ $D_{1.2}$ $T_{1.2}$ देहं पतगराज ($Ś_1$ °नाथ)स्य. —$^{b}$) $Dt_1$ $D_8$ $G_3$ $M_1$ चितिम्; $C$g as in text (for चिताम्). $Ś_1$ $\tilde{N}$ V $B_{1.3.4}$ $D_{1.2.5.7}$ $T_{1.2}$ चितामारोप्य लक्ष्मण($\tilde{N}_1$ $T_{1.2}$ राघव).—$G_{2.3}$ M om. $28^{cd}$. —$^{c}$) $Ś_1$ अहं; $D_1$ इदं (for इमं).—$^{d}$) $\tilde{N}_1$ illeg. for हतं रौद्रे. $V_2$ illeg. for द्रेण रक्षसा. $\tilde{N}_2$ $V_1$ $B_{1.3.4}$ $D_{5.7}$ पक्षिणं (for रक्षसा).—After 28, $V_1$ $B_4$ $D_3$(l. 4–7 only) ins. 1245*.

29 $\tilde{N}_2$ $B_{1.3}$ $D_{5.7}$ om. 29–30. $V_1$ $B_4$ om. 29. $\tilde{N}_1$ reads 29–30 (including 1247*) after 34.—$^{ab}$) $Ś_1$ $D_{1.2}$ धर्म- (for यज्ञ-). $\tilde{N}_1$ आहिताग्नेर्गतिर्या च या गतिर्यज्ञयाजिनां.—After 29, $Ś_1$ $D_{1.2}$ ins.:

1246* शरणागतिनां या च गोहिरण्यप्रदायिनाम् ।

30 $\tilde{N}_2$ $B_{1.3}$ $D_{5.7}$ om. 30 (cf. v.l. 29). $\tilde{N}_1$ reads 29–30 (including 1247*) after 34. $V_2$ repeats 30 here (cf. v.l. 1245*).—$^{a}$) $D_{1-3}$ तान् (for त्वं). $V_1$ $B_4$ स्व($B_4$ सु)कृतेनैव कर्मणा; $D_3$ स्वकृतेन च कर्मणा. —$^{d}$) $D_{1.2}$ त्वं (for च). $Ś_1$ यतः; $T_{1.2}$ द्विज (for व्रज). $V_1$ $B_4$ स्वर्ग($B_4$ शक्र)लोकमितो व्रज. ✲ Cg: संस्कृतो व्रजेति। गृध्रराज महासत्त्व संस्कृतश्च महाव्रतेति पाठे संस्कृतश्च भवेति वार्थः. ✲ —For 30, $\tilde{N}_1$ subst.:

1247* तां गतिं समनुज्ञातो मया त्वं सत्कृतो व्रज ।

31 $^{a}$) $B_3$ प्राप्ताम् (for दीप्ताम्).—$^{b}$) $D_3$ रामोपि (for आरोप्य).—$V_2$ $B_{1.3}$ read $31^{cd}$ twice.—$^{c}$) $V_2$ $B_{1.3}$(all first time) रुरोद (for ददाह).—$^{d}$) $B_{1.3}$ (both first time) स्व($B_3$ स)बंधुरिव. $\tilde{N}_2$ $V_2$ $B_{1.3}$ ($V_2$ $B_{1.3}$ second time).$_4$ $D_{5.7}$ पतगेंद्रं($B_4$ °गेशं) गता($B_1$ जटा)युषं.

32 $^{a}$) $Ś_1$ $D_{1.2}$ दग्ध्वा च; $\tilde{N}_2$ $B_{1.3}$ $Dt_1$ $Dm_1$ $D_{6.8}$ $T_1$ $M_{2.3}$ रामोपि (for रामोऽथ). $V_2$ illeg. from सौ up to वीर्यवा in $^{b}$.—$^{b}$) $Ś_1$ $D_{1.2}$ $T_{1.2}$ गत्वा च($T_{1.2}$ स); $\tilde{N}_1$ $D_3$ आश्रित्य; $M_3$ यात्वा तु (for यात्वा स). $\tilde{N}_2$ $V_1$ $B_{1.3.4}$ $D_{5.7}$ विगाह्य जलमोजसा.—$^{c}$) $Ś_1$ महारोहान् (for °रोहीन्). —$^{d}$) $Ś_1$ $D_{1.2}$ अनुस्मरत; $D_3$ °सस्मार (for अनु तस्तार). $\tilde{N}_1$ *** श्च(illeg.) ततो द्विजं; $V_2$ मत्वास्तामथनं द्विजं (sic). ✲ Cr: महारणमृगान् महामृगान् योजना तु स्थूलान्महारणमृगान्हत्वा ।; Cm: स्थूलान्हत्वा......तं द्विजमिति इकारान्तत्वमार्षम् ।; Ck: महारोहीन्महामृगान् । इकारान्तोप्यस्ति मृगवाची रोहिशब्दः तदेव व्यज्यते रोहिमांसानि चेति प्रयोगेण। योजना तु स्थूलान्महारोहीन्हत्वा ।; Ct महारोहीन्महामृगान्। रोहिशब्द इकारान्तोपि मृगवाची. ✲ —For $32^{cd}$, $\tilde{N}_2$ $V_1$ $B_{1.3.4}$ $D_{5.7}$ subst.; while $V_2$ ins. after $32^{ab}$:

1248* कृत्वा चोदककार्यं तौ भ्रातरौ रामलक्ष्मणौ ।

[ $B_1$ तु; $B_3$ च (for तौ). $V_2$ illeg. for the post. half. ]

—$V_2$ cont.:

1249* ******** ******शयात् ।
उदकं तस्य तौ कृत्वा भ्रातरौ रामलक्ष्मणौ ।

33 $V_2$ illeg. from रोहि up to पेशी in $^{b}$.—$^{a}$) $D_6$ (also in marg.) वने (for रोहि-). $\tilde{N}_2$ $B_{1.3}$ $Dg_1$ $D_{1.5.7}$ $M_3$ $C$r.m.g.k.t चोत्कृत्य; $B_4$ सत्कृत्य; $Dt_1$ सूद्धृत्य (for चोद्धृत्य). $D_3$ रोह्या मांसानि चाहृत्य.—$^{b}$) $Ś_1$ $D_6$(also as in text) पिंडीकृत्वा; $\tilde{N}_2$ $B_3$ संस्कृत्य च; $V_1$ $D_{2.3}$ $M_{1.2}$ पेशीं($D_3$ °श्यां; $M_1$ °शीः) कृत्वा; $B_{1.4}$ $D_{5.7}$ $C$r.m.g पेशीकृत्य; $C$v.t as in text; $C$k पिंडीकृत्य (for पेशीकृत्वा). $\tilde{N}_1$ स राघवः (for महायशाः).—After $33^{ab}$, $D_3$ ins.:

1250* कश्यपान्वयसंभूत अरुणात्मज धार्मिक ।
इमं पिण्डं मया दत्तं जटायो भुङ्क्ष्व तृप्तये ।
एवमुक्त्वा तु तं पिण्डं जटायोस्तृप्तिहेतवे ।

[ (l. 1) Note hiatus between the two halves. ]
—$^{c}$) $\tilde{N}$ V $B_{1.3.4}$ $D_{5.7}$ शकुने(V $B_3$ °नि)भ्यो; $D_{3.4}$ $G_2$ M शकुना($D_4$ $G_2$ $M_3$ °नी)नां (for शकुनाय). $Ś_1$ $D_{1.2}$ कुशानादाय रामः स.—$^{d}$) $Ś_1$ वने; $D_7$ marg.; G(ed.) वन्ये (for रम्ये).

यत्तत्प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः ।
तत्स्वर्गगमनं तस्य क्षिप्रं रामो जजाप ह ॥ ३४
ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ।
उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ ॥ ३५

स गृध्रराजः कृतवान्यशस्करं
सुदुष्करं कर्म रणे निपातितः ।
महर्षिकल्पेन च संस्कृतस्तदा
जगाम पुण्यां गतिमात्मनः शुभाम् ॥ ३६ G. 3. 73. 42 B. 3. 68. 37 L. 3. 75. 41

इति श्रीरामायणे अरण्यकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

34 $^{a}$) D3 Ck यत्तु; G( ed. ) यं तु ( for यत्तत् ). V1 B1 मृतस्य ( for प्रेतस्य ). B1 सर्वस्य; Dm1 D8 मंत्रं च; D3 धर्मस्य ( for मर्त्यस्य ). Ś1 यत्प्रेतधर्मकर्म त्वं; Ñ2 V2 B3.4 D5.7 यं यं( V2 B3.4 तं ) मृतस्य मर्त्यस्य; D4 यत्तद्वृत्तस्य महतः; L( ed. ) यत्प्रेतकर्म कार्यं च. —$^{b}$ ) Ñ1 यजंति तु; Ñ2 V B1.3.4 D5.7 जपंतीह ( for कथयन्ति ). —V1 om. 34$^{cd}$. —$^{c}$ ) Ś1 D1.2 तत्प्रेत-( D1 °त्य ) ( for तत्स्वर्ग- ). Dg1 D8 क्षिप्रं; D3 यास्मै (sic) ( for तस्य ). Ñ2 V2 B1.3.4 D5.7 तं स्वर्गगमने तस्य ( V2 illeg. from तस्य up to जजा in $^{d}$). —$^{d}$ ) Ñ2 B1.3.4 D5.7 मंत्रं; K( ed. ) पित्र्यं ( for क्षिप्रं ). Dt1 D6 transp. तस्य and क्षिप्रं. G2 M2 एव ( for रामो ). Ś1 D1.2 क्षिप्रं रामश्चकार ह; Dm1 D8 याम्यसूक्तं जजाप ह; D3 क्षिप्रं रामो ददावथ. —After 34, Ñ1 reads 29-30 ( including 1247* ); while D3 ins. after 34 :

1251* तत्प्रेतगमनं तस्मै प्रियं रामश्चकार ह ।

35 $^{a}$ ) D4 G1.2 M2 तथा ( for ततो ). —$^{b}$ ) M2 रम्यां ( for नदीं ). V1 दशरथात्मजौ; B4 नृपवरात्मजौ ( for नरवरा° ). —$^{c}$ ) Ñ2 V B1.3.4 D7 ददतुस् ; D5 च ददौ ( for चक्रतुस् ). Ñ2 V B1.3.4 D5.7 गृध्रराजे( B4 D5 °ज्ञे ) जटा( V1 गता )युषे. —After 35, Dg1 Dt1 Dm1 D4.6.8 T G M1.2 ins. :

1252* शास्त्रदृष्टेन विधिना जलं गृध्राय राघवौ ।
स्नात्वा तौ गृध्रराजाय उदकं चक्रतुस्तदा ।

[ D4 transp. l. 1 and l. 2. —( l. 1 ) Dg1 T G2.3 M1.2 जले ( for जलं ). —( l. 2 ) Dg1 तु ( for तौ ). —Note hiatus between the two halves. G3 तथा ( for तदा ). ]

36 $^{ab}$ ) Ñ2 om. सुदुष्करं. V1 B3 transp. यशस्करं and सुदुष्करं. Ñ1 महत्त्वगस्तदा ( for रणे निपातितः ). —$^{c}$ ) Ś1 महर्षितुल्येन. Ś1 Ñ2 V B1.3.4 D5.7 तेन सत्कृ( Ś1 संस्कृ )-तो; Ñ1 सत्कृतः स्वयं; D1 सत्कृतस्तथा; D2.3 संस्कृतस्तथा( D3 °तो ) ( for संस्कृतस्तदा ). —$^{d}$ ) M3 पु***( damaged )म् ( for पुण्यां गतिम् ). Ñ V B1.3.4 D5.7 उत्तमां ( for आत्मनः ). D4 प्रियां; Ct सुखां ( for शुभाम् ). ❁ Cm.g : आत्मनः सुखावहां गतिं लोकं जगाम. ❁ —After 36, Dg1 Dt1 Dm1 D1( marg. ).4.6.8 S ins. :

1253* कृतोदकौ तावपि पक्षिसत्तमे
स्थिरां च बुद्धिं प्रणिधाय जग्मतुः ।
प्रवेश्य सीताधिगमे ततो मनो
वनं सुरेन्द्राविव विष्णुवासवौ ।

[ ( l. 3 ) Dg1 D4 प्रविश्य. T3 -[ अ ]भिगमे ( for -[ अ ]धि° ). D1 तदा ( for ततो ). —( l. 4 ) D1.4 M3 यथामरेंद्राविव ( for वनं सुरेन्द्राविव ). D1 M3 शक्रविष्णू ( for विष्णुवासवौ ). ❁ Cv : वनं सुरेन्द्राविव विष्णुवासवाविति पाठः. ❁

Colophon. D4 om. —M3 damaged up to स्थि in 3.65.1$^{ab}$. —*Sarga name* : Ś1 Ñ2 B1.3 D5.7 जटायु( B3 D5 °युः )संस्कारः; Ñ1 जटायुःसत्करणं; V B4 D3 जटायु ( B4 °युः )सत्कारः; D1.2 जटायु( D1 °युः )सत्क्रिया. —*Sarga no.* ( figures, words or both ) : Ś1 Ñ1 B1.3 Dg1 D2 om.; Ñ2 D5.7 75; V1 72; V2 78; B4 76; Dt1 Dm1 D6.8 T G M1.2 68; D1 73; D3 77. —After colophon, G concludes with श्रीरामाय नमः.

# ६५

G. 3. 74. 1
B. 3. 69. 1
L. 3. 76. 1

कृत्वैवमुदकं तस्मै प्रस्थितौ राघवौ तदा ।
अवेक्षन्तौ वने सीतां पश्चिमां जग्मतुर्दिशम् ॥ १
तां दिशं दक्षिणां गत्वा शरचापासिधारिणौ ।
अविप्रहतमैक्ष्वाकौ पन्थानं प्रतिपेदतुः ॥ २
गुल्मैर्वृक्षैश्च बहुभिर्लताभिश्च प्रवेष्टितम् ।
आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ॥ ३
व्यतिक्रम्य तु वेगेन गृहीत्वा दक्षिणां दिशम् ।
सुभीमं तन्महारण्यं व्यतियातौ महाबलौ ॥ ४
ततः परं जनस्थानात्त्रिक्रोशं गम्य राघवौ ।
क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ ॥ ५
नानामेघघनप्रख्यं प्रहृष्टमिव सर्वतः ।
नानावर्णैः शुभैः पुष्पैर्मृगपक्षिगणैर्युतम् ॥ ६

## 65

D8 begins with ॐ.

1 M3 damaged up to प्रस्थि in $^{b}$.—$^{a}$) D1 तस्य (for तस्मै). Ñ1 कृत्वा तत्रोदकं तस्मै.—$^{b}$) D5 M2 प्रथितौ (for प्रस्थितौ). Ñ2 V2 B1.3.4 D1.3.5.7 T1.2 रामलक्ष्मणौ (for राघवौ तदा). Ś1 V1 D2 तावुभौ रामलक्ष्मणौ; Ñ1 जग्मतू रामलक्ष्मणौ.—After $1^{ab}$, Ś1 Ñ V B1.3.4 D1–3.5.7 ins.:

1254* भ्रातरौ मेघसंकाशं जनस्थानमुपेयतुः ।
ततस्त्वस्तंगते सूर्ये संस्थितौ तौ निजाश्रमे ।
कल्यमुत्थाय च पुनः कृतजप्याह्निकावुभौ ।
ततः शून्यं निवासं तं परित्यज्य तु राघवौ ।

[(l. 1) Ś1 D1.2 -संकाशौ (for -संकाशं). Ñ1 तदा पुनः (for उपेयतुः). Ś1 D1.2 शोकव्याकुलचेतनौ (for the post. half).—(l. 2) Ñ1 ततोस्तमागते सूर्ये; Ñ2 D5.7 ततोस्तगमिते सूर्ये; V B1.3.4 ततोस्तं हि(B3 वि) गते सूर्ये (for the prior half). Ñ2 V B1.3.4 D5 संश्रितौ (for °स्थितौ). V1 स्वमाश्रमं (for निजाश्रमे). Ñ1 D1–3 वास(D3 °स्तु)माश्रमे; Ñ2 V2 B1.3.4 D5.7 स्वकमाश्रमं (for तौ निजाश्रमे).—(l. 3) Ñ1 रजन्यां स (illeg. after स up to $1^{d}$). Ś1 नयतुस्तां निशां तत्र; D1.3 न शिश्याते निशां तत्र; D2 न शिश्येते निशां तत्र (for the prior half). V1 -मध्याह्निकाव् (for -जप्या°). Ś1 D1–3 दुःखितौ रामलक्ष्मणौ (for the post. half).—(l. 4) Ñ2 V B1.3.4 D5.7 जनस्थानं (for निवासं तं).—D5 om. from the post. half up to दक्षिणां in $2^{a}$. D3 च (for तु). Ñ2 V B1.3.4 D7 महाबलौ (for तु राघवौ).]

D5 om., while Ñ1 illeg. for $1^{cd}$.—$^{c}$) Ś1 Dm1 D1–3.8 G2.3 अन्वेषं(D3 °न्विष्यं)तौ; G1 आन्वेक्षंतौ; Cv.g as in text (for अवेक्षन्तौ). Ñ2 V B1.3.4 D7 अन्वेषमाणौ तौ सीतां.—$^{d}$) Ñ2 V B1.3.4 Dt1 Dm1 D6.8 जग्मतुः पश्चिमां दिशं; T3 जग्मतुर्दक्षिणां दिशम्.

2 D5 om. up to दक्षिणां (cf. v.l. 1254*). D4 M om. 2.—$^{a}$) Dm1 D8 T G2.3 Cm.g तौ (for तां). Ś1 Dg1 D1–3 G1 तौ दिशं पश्चिमां गृह्य(Ś1 Dg1 D2 गत्वा); Ñ1 तां दिशं पश्चिमां गृह्य; Ñ2 V B1.3.4 D7 ततस्तौ पश्चिमां गत्वा.—$^{b}$) D6 [अ]धिकारिणौ (for [अ]सिधारिणौ). Ñ1 पंथानं चापधारिणौ.—$^{c}$) Ś1 Ñ V B1.3.4 D1–3.5.7 इक्ष्वाकू (D1 °कौ); Dt1 ऐक्ष्वाकू (for ऐक्ष्वाकौ).—$^{d}$) Ñ2 V B1.4 D5.7 प्रतिपद्य वै(V तौ). Dt1 प्रतिपेदितौ; Dm1 D8 G1.3 प्रतिजग्म(G1 °पेत)तुः; G2 अभिजग्मतुः; Cg प्रतिपेदतुः (as in text). Ñ1 प्रविष्टौ तौ सु*खं.

3 $^{a}$) Ś1 फलैः पुष्पैश्च; Ñ2 illeg.; D1 फुल्लैश्च वृक्षैर्; D3 फुल्लैर्वृक्षैश्च; D5.7 वृक्षैर्गुल्मैश्च (by transp.) (for गुल्मैर्वृक्षैश्च). D2 फलैश्च बहुभिः पुष्पैर्.—$^{b}$) Ñ2 V B1.3 D7 समावृतं; B4 सुसंवृतं; D5 समाकुलं (for प्रवेष्टितम्).—$^{c}$) Ñ2 V B3.4 D5.7 पर्वतैर् (for सर्वतो). V1 G2 दुर्गैर्; G3 दुःखं (for दुर्गं). B1 पर्वतैरुन्नतैर्दुर्गं.—$^{d}$) Ñ2 V B1.3.4 D5.7 तावपश्यतां (for घोरदर्शनम्). G(ed.) महद्वनमपश्यताम्.

4 Dg1 T1 om. $4^{ab}$.—$^{a}$) Dm1 D5.7.8 G2.3 अतिक्रम्य; M1 अभि° (for व्यति°). Ñ1 व्यतिक्रमंतौ वेगेन.—$^{b}$) Ś1 Ñ V B1.3.4 D1–3.5.7 T1.2 व्याल(Ś1 Ñ1 D2 °घ्र)सिंह (B4 संघ)निषेवितं.—$^{c}$) Ñ2 V B1.3.4 D5.7 अतिभीमं; G3 सुभीमं तौ (for सुभीमं तन्). D4 महापुण्यं (for °रण्यं).—$^{d}$) Dg1 Dt1 Dm1 D4.6 G3 Cr व्यतीयातौ; D1 व्यभियातौ; T1.2 व्यतियातां; M2 व्यतियंतौ; M3 सुनिर्यातौ; Cm.g.k.t as in text (for व्यतियातौ). Ñ2 V B1.3.4 D5.7 भ्रातरौ रामलक्ष्मणौ(V B4 तौ महाबलौ).

5 Ñ1 om. $5^{ab}$.—$^{b}$) Ś1 चापि; D1–3 प्राप्य (for गम्य). Ñ2 V B1.3.4 D5.7 क्रोशत्रय(V2 B1.3 °मात्र)मतीत्य तौ(V2 B1 D7 वै).—$^{c}$) Ś1 D3 क्रौंचावटीं; Ñ1 गुंजावनं; V M2.3 क्रौंचावनं; D1.2 क्रौंचाटवीं; D4 क्रौञ्चावतीं; G(ed.) क्रौंचालयं; Cr.m.g.t as in text (for क्रौञ्चारण्यं).—$^{d}$) Ś1 Ñ V B1.3.4 D5.7 वन(B1.3 शून्य)मोजसा(D5 [m.] गोचरं); Dg1 T3 तौ सुतेजसा; Dm1 D4.8 तौ महाजवौ (for तौ महौजसौ).—After 5, D5 repeats erroneously 4 and $5^{ab}$.

6 D5 om. (hapl.) $6^{ab}$.—$^{a}$) Ś1 Ñ1 D1.2 -चय-; Ñ2 V B1.3 D7 -गण-; B4 G3 -सम- (for -घन-). D4 नानावन** प्रख्यं.—$^{b}$) Ś1 D2 प्रवृत्तम्; D7 °कृष्टम् (for °हृष्टम्). Ś1 Ñ2 V1 B4 D2 पर्वतः(Ś1 D2 °तं) (for सर्वतः). G3 om. (hapl.) $6^{cd}$.—$^{cd}$) Ñ2 V B1.3.4 D5.7 नानावृक्षैः (for °वर्णैः). Ñ2 V B1.3.4 D5.7 कीर्णं; Dg1 वृक्षैर् (for पुष्पैर्). Ñ1

दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिक्यतुः ।
तत्र तत्रावतिष्ठन्तौ सीताहरणकर्शितौ ॥ ७
लक्ष्मणस्तु महातेजाः सत्त्ववाञ्शीलवाञ्शुचिः ।
अब्रवीत्प्राञ्जलिर्वाक्यं भ्रातरं दीप्ततेजसम् ॥ ८
स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः ।
प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ ९
तस्मात्सज्जीभवार्य त्वं कुरुष्व वचनं हितम् ।
ममैव हि निमित्तानि सद्यः शंसन्ति संभ्रमम् ॥ १०
एष वञ्चुलको नाम पक्षी परमदारुणः ।
आवयोर्विजयं युद्धे शंसन्निव विनर्दति ॥ ११
तयोरन्वेषतोरेवं सर्वं तद्वनमोजसा ।
संजज्ञे विपुलः शब्दः प्रभञ्जन्निव तद्वनम् ॥ १२
संवेष्टितमिवात्यर्थं गहनं मातरिश्वना ।
वनस्य तस्य शब्दोऽभूद्दिवमापूरयन्निव ॥ १३ G. 3. 74. 0 B. 3. 69. 25 L. 3. 76. 15

---

नानावर्णैश्च पुष्पैश्च ( for °). Ñ1 सत्त-; G1 नाना- ( for मृग-). Ś1 V1 D1.2 -गणायुतं; B1 -गणाकुलं; B3 -समावृतं; B4 -गणावृतं; Dg1 D4 G1.2 M -गणैर्वृतं ( for -गणैर्युतम्). T1.2 नानापक्षिगणैर्जुष्टं नानाव्यालमृगैर्युतम्. ❀ Cg : व्यालमृगैः सर्पैर्मृगैश्च. ❀

7 *a*) Ñ2 V B1.3.4 D5.7 मार्गमाणौ ( V °णं; B4 om. from णौ up to 8 ) तु ( for दिदृक्षमाणौ ). —*b*) Ś1 D1.2 निरीक्षतुः ( D2 °तुं ); Ñ1 D3 विचेरतुः; Dg1 Dt1 Dm1 D6.8 G M3 विचिन्वतुः; T3 विचिक्य च; Cg as in text ( for विचिक्यतुः ). —After तद्वनं तौ, D4 repeats erroneously from महाजवौ ( v.l. for महौजसौ ) in 5*d* up to तौ in 7*b*. Ñ2 V B3 D5.7 तत्र तत्र ( D5 om. [ hapl. ] one तत्र ) विचेरतुः; B1 भ्रातरौ तौ ( marg. also तत्र तत्र ) विचेरतुः. —*c*) Ñ2 V B1.3 D5.7 यत्र तत्र ( V B3 यत्र ) ( for तत्र तत्र ). Ñ1 [ अ ]वतिष्ठंतं; M3 [ ए ]व तिष्ठंतौ ( for [ अ ]वतिष्ठन्तौ ). Ś1 D1.3 तत्र तत्र विचे( D3 °चे )ष्टंतौ; D2 तद्वनं तौ विचेष्टंतौ. —*d*) Ś1 D1.2 -कर्षितौ; Ñ1 -कर्शितं; Ñ2 V B1.3 Dg1 Dt1 Dm1 D3–8 T3 G M -दुःखितौ ( for -कर्शितौ ). —After 7, V2 ( mostly illeg. ) ins. :

1255* शोकानि * * * * * * * * * * * * * ।
* * * * * * * * * * * ञ्च शशास सः ।
विस्मृत्य वचनं तस्य पक्षिराजस्य मोहितः ।

—After 7, Dg1 Dt1 Dm1 D4.6.8 S Cv.r.m.g.k.t ins. a passage relegated to App. I ( No. 17 ).

8 B4 om. 8 ( cf. v.l. 7 ). —*a*) D3 तं; D6 ता ( sic ) ( for तु ). —*b*) Ś1 सत्त्ववाक्; Ñ1 B1.3 Dt1 Dm1 D1.3 T3 सत्यवान्; Cg as in text ( for सत्त्व° ). V शीलवान्सत्त्ववान् ( by transp. ). —*cd*) M1.2 transp. प्राञ्जलिर् and भ्रातरं. Ś1 B1.3 D1 दीनचेतसं; D2 हीनचेतसं ( for दीप्ततेजसम् ). D6 भ्रातरौ रामलक्ष्मणौ.

9 *a*) B3 भृशं ( for दृढं ). V1 सुदृढं; D5 प्रदृढं ( for मे दृढं ). —*cd*) Ñ2 V2 B1.3.4 D5.7 विपरीतानि पश्यामि निमित्तानि महाभुज; V1 विपरीतनिमित्तानि संपश्यामि महाभुज.

10 *a*) D4.6 ( after corr. ) सज्जो भव ( for सज्जीभव ). Ś1 Ñ1 D1–3.8 M2 -भवत्वार्य ( for -भवार्य त्वं ). —*b*) Dt1 D8 मम ( for हितम् ). Ś1 D1–3 कुरुष्व गमने मतिम्; Ñ1 कुरुष्व वधतः स्थिरः ( sic ). —For 10*ab*, Ñ2 V B1.3.4 D5.7 subst. :

1256* घोररूपाणि दृश्यन्ते कुरु वीर मनः स्थिरम् ।

[ V2 illeg. for दृश्यन्ते. Ñ2 V2 mostly illeg. for the post. half. ]

—*c*) Ś1 Ñ V B1.3.4 D1–3.5.7 इमानि ( D2 °* ); Dg1 ममैष; D4 ममैवं ( for ममैव ). B1 ते; T3 [ इ ]ह; M3 तु ( for हि ). Ś1 D2 [ अ ]निमित्तानि. —*d*) Ñ1 * *; B4 सत्यः ( for सद्यः ). Dg1 Dt1 D2.4 शंसति ( for °सन्ति ). Ś1 D2 मे भयं; Ñ2 V B1.3.4 D5.7 विग्रहं; D1 मे प्रियं; D3 मे रणं; D4 विभ्रमं ( for संभ्रमम् ).

11 D6 om 11. —*a*) Ñ1 Dg1 Dt1 Dm1 D1–5.7.8 T3 Ct*p* वंजुलको; V1 रंजनको; G3 वंचुलिकी; Cv.r.m.g.k.t as in text ( for वञ्चुलको ). Dt1 राम ( for नाम ). —Ñ1 illeg. for *b*. —*c*) D4 अनयोर् ( for आवयोर् ). —*d*) Ś1 एव ( for इव ). G1 शंसतीव ( for °न्निव ). Ś1 D1.2 विनर्दते; D3 च नर्दति ( for विनर्दति ). —For 11*cd*, Ñ2 V B1.3.4 D5.7 subst. :

1257* अपसव्यं प्रयात्याशु शंसयन्नौ महद्भयम् ।

[ Ñ2 D5.7 शंसमानो; V1 शंसते नौ ( for शंसयन्नौ ). B4 शंसन्नौ सुमहद्भयम् ( for the post. half ). ]

12 Ñ V B1.3.4 D5.7 om. 12–14. —*a*) D3 ययोर् ( for तयोर् ). D6 T1.2 G1.2 तत ( G2 °यो )स्त्वन्वेषतोर् ( for तयोरन्वेषतोर् ). D2 रोषं ( sic ); D6 G1 M2 एव ( for एवं ). —*c*) D5 विपुलं ( for °लः ). D1 om. ( hapl. ) from 12*d* up to शब्दो in 13*c*. —*d*) D2.3 भंजन्निव महद्वनम्.

13 Ñ V B1.3.4 D5.7 om. 13 ( cf. v.l. 12 ). D1 om. up to शब्दो in 13*c* ( cf. v.l. 12 ). —*a*) Ś1 D2.3 संवेष्ट्यत; M3 सुवेष्टितं ( for संवेष्टितम् ). D4 संवेष्ट्य तद्वनं सर्वं. —*b*) Dg1 D4 T3 G1.2 M1.2 Cv.m गगनं; Ct as in text ( for गहनं ). —*c*) M2 वनसत्त्वस्य; M3 वने स तस्य ( for वनस्य तस्य ). M1 वनस्य शब्दो घोरोभूद्. —*d*) Dg1 D4.6 T3 G1.2 M1.2 Cv वनम्; D2 दिनम्; Cg as in text ( for दिवम् ). ❀ Ct : तद्गहनं वनमत्यन्तं मातरिश्वना संवेष्टितं व्याप्तमिव जातम्. ❀

G. 3. 74. 0 B. 3. 69. 26 L. 3. 76. 16 तं शब्दं काङ्क्षमाणस्तु रामः कक्षे सहानुजः ।
ददर्श सुमहाकायं राक्षसं विपुलोरसम् ॥ १४
आसेदतुस्ततस्तत्र तावुभौ प्रमुखे स्थितम् ।
विवृद्धमशिरोग्रीवं कबन्धमुदरेमुखम् ॥ १५
रोमभिर्निचितैस्तीक्ष्णैर्महागिरिमिवोच्छ्रितम् ।
नीलमेघनिभं रौद्रं मेघस्तनितनिःस्वनम् ॥ १६
महापक्ष्मेण पिङ्गेन विपुलेनायतेन च ।
एकेनोरसि घोरेण नयनेनाशुदर्शिना ।॥ १७
महादंष्ट्रोपपन्नं तं लेलिहानं महामुखम् ।
भक्षयन्तं महाघोरानृक्षसिंहमृगद्विपान् ॥ १८
घोरौ भुजौ विकुर्वाणमुभौ योजनमायतौ ।
कराभ्यां विविधान्गृह्य ऋक्षान्पक्षिगणान्मृगान् ॥ १९
आकर्षन्तं विकर्षन्तमनेकान्मृगयूथपान् ।
स्थितमावृत्य पन्थानं तयोर्भ्रात्रोः प्रपन्नयोः ॥ २०
अथ तौ समतिक्रम्य क्रोशमात्रे ददर्शतुः ।
महान्तं दारुणं भीमं कबन्धं भुजसंवृतम् ॥ २१

---

14 Ñ V B1.3.4 D5.7 om. 14 (cf. v.l. 12). —$^{a}$) Ś1 D3 वीक्ष्यमाणस् (for काङ्क्षमाणस्). —$^{b}$) Dg1 Dt1 D3.6 T3 खड्गी; Dm1 D8 G3 तस्थौ; Cg as in text (for कक्षे). Ś1 D1.2 रामः सौमित्रिणा सह. —$^{c}$) Ś1 सुमहावीर्यं (for °कायं). —$^{d}$) Ś1 D1–3 घोरदर्शनं; M1.3 विपुलोदरं (for विपुलोरसम्).

15 $^{a}$) Ñ1 आशंसेते (for आसेदतुस्). Ś1 D1–3 ततस्तस्य; Dt1 D6 च तद्रक्षस् (for ततस्तत्र). —$^{b}$) Ś1 D1–3 G2 M2 स्थितौ (for °तम्). —For 15$^{ab}$, Ñ2 V B1.3.4 D5.7 subst.:

1258* अथ तत्र महाघोरं विकृतं तं महोच्छ्रयम् ।
[V1 अत्र (for अथ). V1 च (for तं).]

—$^{c}$) V1 सशिरोग्रीवं; D1 अशिरोग्रीवी (for अशिरो°). M3 विनिवृत्तशिरोग्रीवं. —$^{d}$) Ñ1 उरसो मुखं (for उदरेमुखम्).

16 $^{a}$) Ś1 D1.2 लोमभिर् (for रोमभिर्). Ś1 Ñ2 V1 B1.4 D1–3.5.7 नि(V1 वि)चितं; B3 निशितं; Dg1 Dt1 Dm1 D6.8 T3 G1 Ct निशितैस्; Cg as in text (for °चितैस्). Ñ1 रोमभिर्वि*दाकारैः. —$^{b}$) B4 M3 [उ]श्थितं; M2 [उ]-न्नतं (for [उ]च्छ्रितम्). Ñ1 सर्वतो *समाचितम्. ❀ Ct: रोमभिर्निबिडैस्तीक्ष्णैः इति क्वचित्पाठः. ❀ —After 16$^{ab}$, Ñ1 ins.:

1259* बाला* कपिलः सर्वस्तृणैरिव महाबलम् । (sic)

—$^{cd}$) V2 illeg. after नीलमेघ up to स्तनित in $^{d}$. Ñ2 V1 B1.3.4 D5.7 घोरं (for रौद्रं). Ś1 मेघदुंदुभि-; D4 °स्वनित-; D5 °स्तुनिव(sic) (for °स्तनित-). D3 समेघस्तनितस्वरम् (for $^{d}$). —After 16, Dg1 Dt1 Dm1 D4.6.8 S ins.:

1260* अग्निज्वालानिकाशेन ललाटस्थेन दीप्यता।

17 V2 mostly illeg. for 17$^{a}$. —$^{ab}$) Ś1 महावपेण (sic); Ñ2 V1 B1.4 D5.7 महता चाति-; B3 महता भाति; D1.2 महावक्रेण; D4 महावक्षेण (for महापक्ष्मेण). Ś1 D1–3 नीलेन; V1 -वेगेन; B4 -घोरेण (for पिङ्गेन). M2 [आ]यसेन (for [आ]यतेन). Ñ1 मण्डलेक्षणपि* * * * * * * * * * (illeg.). —$^{c}$) Ñ2 V B1.3.4 D5.7 दीर्घेण; D3 रौद्रेण (for घोरेण). Ś1 D1.2 एकैकेनातिरौद्रेण. —$^{d}$) Ś1 D3 विवर्तिना; Ñ2 V B1.3.4 D3.5.7 [अ]ति(V1 B3 °भि)दर्शिना; Dt1 Dm1 D6 सुदर्शिना; D8 [अ]सुदर्शिना; M2 [आ]शुदर्शनं; M3 [अ]नुदर्शिता (for [आ]शुदर्शिना). Ñ1 नेत्रेणाद्भुतदर्शिना.

18 Ñ1 illeg. for 18$^{a}$. —$^{a}$) Ñ2 D5.7 तु; V1 च (for तं). Ś1 D1.2 महानादं महादंष्ट्रं; D3 महादंष्ट्रं महानादं. —$^{b}$) Ś1 D1–3 इवांतकं; D4.6 M3 महन्मुखं; G2 M2 मुहुर्मुखं (for महामुखम्). Ñ2 V B1.3.4 D5.7 बलिनं सर्व(B4 मुनि)घातिनं. —$^{c}$) Ś1 महारौद्रं; Ñ1 D1–3 °वक्त्रं; Ñ2 V B1.3.4 D5.7 °कायं (for °घोरान्). —$^{d}$) Dg1 Dt1 D6 T1.2 -द्विजान् (for -द्विपान्). Dm1 D4.8 G1 M -रुरुद्विपा(G1 °हा)न्; G3 -रुरु** (for -मृगद्विपान्). Ś1 Ñ V B1.3.4 D1.2.5.7 घोरानृक्षमहा(Ś1 Ñ1 B3 D1.2 °मृग)द्विपान्(Ś1 V2 B3 °जान्); D3 घोरं वृकवरद्विषाम्.

19 Ñ1 om. 19. —$^{a}$) Ś1 D1–3 दीर्घौ (for घोरौ). Ñ2 V B1.3.4 D5.7 भुजौ दीर्घौ(Ñ2 B3 दीप्तौ) (for घोरौ भुजौ). V B1 D2 विकुर्वाणौ (for °र्वाणम्). —$^{b}$) Ñ2 V B1.3.4 D5.7 घोरौ (for उभौ). Ś1 D1–3 तावुभौ योजनायतौ. —$^{cd}$) Ś1 गृह्णन् (for गृह्य). M1 वृषान्; M2 वृक्षान् (for ऋक्षान्). M3 द्विजान् (for मृगान्). Ś1 D1–3 विचित्रा(D1–3 °वृद्धा)न्मृगपक्षिणः (for $^{d}$). Ñ2 V B1.3.4 D5.7 आदाय विविधांश्चैव करा(Ñ2 D5.7 बाहु)भ्यां मृग(V1 नृप)-पक्षिणः.

20 Ñ1 transp. 20$^{ab}$ and 21$^{cd}$. —$^{a}$) D4 आकर्षयंतं (hypm.) (for °र्षन्तं). Ñ2 V B1.3.4 D5.7 वना(V बला)-त्तस्माद्; D4 जनेनैव (for विकर्षन्तम्). Dt1 आकर्ष* ***न्तम् (om. hapl.). —$^{b}$) D4 सुबहून् (for अनेकान्). Ñ1 वा* *जन*** (illeg.). —After 20$^{ab}$, Ñ1 ins. l. 4–7 of 1264* then reads 3.66.1 and 1268*. —$^{c}$) V1 आसाद्य (for °वृत्य). G2 पंथानमावृत्य (by transp.). —$^{d}$) Ś1 प्रसन्नयोः; D3 महात्मनोः (for प्रपन्नयोः). Ñ1 ** गिरिमिवाचलं (illeg.). Ñ2 V B1.3.4 D5.7 कबंधं तावपश्यतां.

21 Ñ1 om. 21$^{ab}$. —$^{a}$) Dt1 Ct तं; Dm1 D6.8 तत् (for तौ). Ñ2 V B1.3.4 D5.7 समति(V2 °तु)क्रांतौ; Dg1 D1 T G3 Cv.m.g समभिक्रम्य; D3 समति**; Cr.k as

स महाबाहुरत्यर्थं प्रसार्य विपुलौ भुजौ ।
जग्राह सहितावेव राघवौ पीडयन्बलात् ॥ २२

खड्गिनौ दृढधन्वानौ तिग्मतेजौ महाभुजौ ।
भ्रातरौ विवशं प्राप्तौ कृष्यमाणौ महाबलौ ॥ २३

G. 3.74.23
B. 3.69.36
L. 3.76.25

in text (for °तिक्रम्य). —$^{b}$) Dt1 D2.6 Ct क्रोशमात्रं; Cv.r.m.g.k as in text (for °मात्रे). D3 Ck ददृशतुः; Cg.t as in text (archaic) (for °दृशतुः). Ś1 क्रोशमात्रं तु पश्यताम्; Ñ2 V B1.3.4 D5.7 क्रोशमात्रान्तरेण तु. —For 21$^{c}$–23, Ñ2 V B1.3.4 D5.7 subst. 1264*. Ñ1 transp. 20$^{ab}$ and 21$^{cd}$. —$^{c}$) Ñ1 illeg.; Dm1 भूतं; D3 रौद्रं; D4 घोरं; Cg as in text (for भीमं). —$^{d}$) Ñ1 विवृद्ध- (for कबन्धं). ❀ Cv: भुजसंवृतमिति। क्विबन्ताद्वितीया भावे निष्ठान्तरस्य बहुव्रीहिर्वा. ❀ —After 21, Dg1 Dt1 Dm1 D1(m.).4.6.8 S ins.:

1261* कबन्धमिव संस्थानादतिघोरप्रदर्शनम् ।

[D1 इति संस्थानम् (for इव संस्थानाद्).]

—Thereafter G1 cont., while D3 ins. 1263* after 21.

22 For subst. in Ñ2 V B1.3.4 D5.7, cf. v.l. 21 and 23. Ñ1 om. 22–23. G3 transp. 22 and 23. —$^{a}$) M1 स महाबा*** (damaged). —$^{b}$) G2 प्रासार्य. T2 विमलौ (for °पुलौ). M3 damaged from लौ in 22$^{b}$ up to राघवौ in 22$^{d}$. —$^{c}$) Dg1 Dt1 D6 सहिताचेष; G2 सन्निधावेव; Cg as in text (for सहितावेव). —For 22, Ś1 D1–3 subst.:

1262* अघोररूपो दुष्टात्मा क्षुधार्तो जगृहेऽथ तौ ।

[D2 च तौ; D3 ततः (for ऽथ तौ).]

23 Ñ1 D4 M1 om. 23 (for Ñ1, cf. v.l. 22). G3 transp. 22 and 23 and reads 23 for the second time after 1266(B)*. M3 om. 23$^{ab}$ here and reads 23 (23$^{cd}$ second time) after 1266(B)*. —$^{ab}$) T3 धृतधन्वानौ (for दृढ°). Dg1 तिग्मगौ तौ; T3 तिग्मबाणौ; G3(first time) निस्तेजस्कौ; Ct as in text (for तिग्मतेजौ). Ś1 D1–3 M3 तिग्मबाणधनुर्धरौ; G1 तेजसा भास्करोपमौ; G3(second time) तिग्मबाणौ च राघवौ; K(ed.) तिग्मतेजोवपुर्धरौ (for $^{b}$). G2 ततस्तौ वातविक्षिप्तौ तोयदौ वार्षिकाविव; M2 विक्षिप्ताभ्यां स्वबाहुभ्यां मृगैः सह महावने. ❀ Cg: तिग्मं खरं तेजो यस्य तत्तथा तादृशवपुर्धरौ।; Ck: तिग्मं खरं तेजो यस्य स तथा तादृशवपुर्धरौ वेषधराविल्यर्थः। Ct: तिग्मतेजौ तिग्मतेजसौ. ❀ —After 23$^{ab}$, Ś1 D1.2 ins., while D3 ins. after 21 and G1 cont. after 1261*:

1263* कबन्धेनातिकायेन संमूढौ दीर्घबाहुना ।

[G1 प्रमाथी (for संमूढौ).]

—$^{c}$) Ś1 D1.2 वैरिणा(D1.2 °णं); G2 अटवीं; G3 (second time) अरणिं; M2 निकटं; Cm.g.k.t as in text (for विवशं). Ś1 D1.2 G2 M2 प्राप्य (for °प्तौ). D3 M3 (second time) भ्रातरावरि(M3 °र)णं प्राप्य. —$^{d}$) D1 क्रोशमाणौ; M3(second time) तुष्य° (for कृष्य°). G2.3 M2.3 ददृशे ह(G3 M3 both second time °तुः) (for महाबलौ). —For 21$^{cd}$–23, Ñ2 V B1.3.4 D5.7 subst., while Ś1 D1–3 G3(after 23 r.) M3 ins. after 23(M3 after 23$^{cd}$ [second time]); Ñ1 ins. after 20$^{ab}$; Dm1 D8 after 1266(B)*:

1264* भ्रातरावतिकायेन गृहीतौ दीर्घबाहुना ।
परिगृह्य महावीरौ क्षुधार्तेन महाबलौ ।
कृष्यमाणौ ददृशतुर्बाहू परिघसंनिभौ ।
महागजकराकारौ खरौ रोमभिराचितौ ।
दीर्घशुष्कनखौ घोरौ पन्नास्याविव पन्नगौ । [5]
ताभ्यां संकृष्यमाणौ तौ खड्गबाणधनुर्धरौ ।
कृच्छ्रेणास्य समीपं तावुपनीतौ व्यवस्थितौ ।

[Ñ1 Dm1 D8 G3 M3 om. l. 1–3. Ś1 D1–3 om. l. 1–2. —(l. 1) V1 रक्षसा तेन (for अतिकायेन). —(l. 2) V2 illeg. after परि. V1 B1.3.4 बलाढ्यौ(V1 °*) (for महावीरौ). V1 महाभुजौ (for °बलौ). —After l. 2, B3 ins.:

1264(A)* खड्गिनौ तेजसा युक्तौ दिव्यबाणधनुर्धरौ ।

—(l. 3) B3 कृष्यमाणौ (for कृष्य°). Ś1 D1–3 दीर्घौ ददृशतुर्वीरौ (Ś1 °वीरौ) (for the prior half). —(l. 4) Ś1 Ñ1 Dm1 D1–3.8 G3 M3 महाजगरसंकाशौ (for the prior half). Ñ1 घन-; V1 om. (for खरौ). Ś1 Ñ1 V B3.4 D1–3 लोमभिर् (for रोमभिर्). D5.7 आवृतौ (for आचितौ). Dm1 D8 G3 M3 खरोमभिरावृतौ (for the post. half). —(l. 5) Ś1 Dm1 D1–3.8 G3 M3 तीक्ष्णरोमनखौ(D1.2 °मुखौ) बाहू; B3 दीर्घतीक्ष्णनखैर्घोरैः (for the prior half). —(l. 6) Ś1 Dm1 D1.2.8 G3 M3 तु कृष्यमाणौ; Ñ1 संकर्षमाणं (sic); B1.3 आकृष्यमाणौ; D3 विकृष्यमाणौ; D5.7 संकृष्यमाणौ (for संकृष्यमाणौ). Ñ1 V B1.3.4 Dm1 D3.8 तु (for तौ). V2 -पाणि- (for -बाण-). Ś1 D2.3 बाणपातादुपागतौ; Ñ1 *स्य पातमुपागतौ; B3 खड्गबाणांतरे तदा; Dm1 D8 G3 M3 बाणपातनिपातौ; D1 तिग्मबाणधनुर्धरौ (for the post. half). —(l. 7) समीपस्थाव् (for °पं ताव्). Ñ1 D1.2 तदुरस्यासं; Dm1 D8 G3 दूरतस्तस्य; D3 तु दुरान्यासं (sic); M3 रसतस्तस्य (for [अ]स्य समीपं ताव्). Ś1 कृच्छ्रेण तौ दूरसास्यं (sic) (for the prior half). Ś1 Dm1 D1.2.8 तस्य दृष्ट्वा; D3 प्राप्य तस्य; G3 M3 तत्र दृष्ट्वा (for उपनीतौ). Ñ1 दृष्ट्वा त* (illeg.) त्रितस्ततः (for the post. half).]

—Thereafter Ś1 Ñ2 V B1.3.4 D1–3.5.7 cont.:

1265* न शशाक स तौ वीरौ भ्रातरौ रामलक्ष्मणौ ।
प्रक्षेप्तुमास्ये बाहुभ्यामवष्टभ्य स्वतेजसा ।

[(l. 1) Ñ2 V B1.3 D5.7 हि (for स). B4 स्थितौ (for स तौ). —(l. 2) V2 illeg. after मास्ये. Ñ2 V1 B1(m.).3.4 D3.5.7 अवष्टभ्यौ (for °ष्टभ्य).]

G. 3. 71. 25 B. 3. 69. 43 L. 3. 76. 29 तावुवाच महाबाहुः कबन्धो दानवोत्तमः ।
कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ ॥ २४

घोरं देशमिमं प्राप्तौ मम भक्षावुपस्थितौ ।
वदतं कार्यमिह वां किमर्थं चागतौ युवाम् ॥ २५

Dg1 Dt1 Dm1 D6.8 T G1 M2.3 Cv.r.m.g.k.t ins. after 23 ( M3 after 23$^{cd}$ [first time] ); while D4 G2.3 M1.2 ins. after 22 ( owing to omission, except G3 ) :

1266* तत्र धैर्याच्च शूरस्तु राघवो नैव विव्यथे ।
बाल्यादनाश्रयाच्चैव लक्ष्मणस्त्वभिविव्यथे ।
उवाच च विषण्णः सन्राघवं राघवानुजः ।
पश्य मां विवशं वीर राक्षसस्य वशंगतम् ।
मयैकेन तु निर्युक्तः परिमुच्यस्व राघव ।
मां हि भूतबलिं दत्त्वा पलायस्व यथासुखम् ।
अधिगन्तासि वैदेहीमचिरेणेति मे मतिः ।
प्रतिलभ्य च काकुत्स्थ पितृपैतामहीं महीम् ।
तत्र मां राम राज्यस्थः स्मर्तुमर्हसि सर्वदा ।
लक्ष्मणेनैवमुक्तस्तु रामः सौमित्रिमब्रवीत् ।
मा स्म त्रासं कृथा वीर नहि त्वादृग्विषीदति ।
एतस्मिन्नन्तरे क्रूरो भ्रातरौ रामलक्ष्मणौ ।

[ G3 transp. l. 1 and 2. —( l. 1 ) T1.2 धैर्येण ( for °र्याच्च ). M3 वै न ( for नैव ). —Dm1 D4.8 G1 M2.3 om. ( hapl. ) l. 2. —( l. 2 ) Dg1 T G2.3 M1 Cm.g.t*p* अनाश्रयत्वाच्च; Cr.k.t( also ) as in text ( for °याच्चैव ). Dg1 Cg.k त्वति-; T3 त्वथ; M1 तं च ( for त्वभि- ). —( l. 3 ) Dm1 D8 G2.3 स ( for च ). G3 निपण्णः ( for वि° ). M3 damaged from the post. half of l. 3 up to राक्षसस्य in the post. half of l. 4 and written up to the prior half of l. 4 in marg. *sec. m.* —( l. 4 ) Dg1 D4 T G1.2 M2.3( m. *sec. m.* ) वीर विवशं ( by transp. ); M1 राम विवशं ( for विवशं वीर ). Dt1 -गतः ( for -गतम् ). —( l. 5 ) D4 मामनेन; M2 एकेनैव ( for मयैकेन ). Dg1 Dm1 D8 निर्मुक्तः; D4 °क्तं ( for निर्युक्तः ). Cm.g K( ed. ) विनिर्युक्तः ( for तु निर्युक्तः ). Dg1 Dm1 T2 Cm.g -मुंचस्व. —( l. 6 ) Dg1 T3 च ( for हि ). M3 पालयस्व ( for पला° ). G2 °गतं ( for °सुखम् ). —( l. 7 ) T2 अभिगंतासि. M3 damaged for वैदेहीम्. —( l. 8 ) T2 प्रतिलक्ष्य ( for °लभ्य ). —( l. 9 ) M3 मा ( for मां ). —After l. 9, Dm1 D8 G3 M3 ins. :

1266( A )* न हि मे त्वत्समो बन्धुः कश्चनानघ विद्यते ।
न मातुश्च ममाख्येयो विनाशश्च कथंचन ।
विषीदत्यतिमात्रं हि प्रियपुत्रा हि सा भृशम् ।
तं तु संपन्नया वाचा परितापार्तमातुरम् ।
आश्वासहेतोर्वचनमिदमाह परंतपः ।
पुत्रो दशरथस्यासि द्वितीयो मम चानुजः ।
स प्राकृत इवोदारः कथं नाम विषीदसि ।
मांसराशिमयः पापो रूपमात्रं हि भीषणम् ।

[ ( l. 2 ) M3 मद्विनाशः ( for विनाशश्च ). —( l. 3 ) M3 सा तादृशं ( for हि सा भृशम् ). —( l. 4 ) M3 वचनेनानमनातुरं ( for the post. half ). —( l. 8 ) M3 -राशिमयं ( for °मयः ). M3 विभीषणं ( for हि भीषणम् ). ]

—Dm1 D8 G3 M3 om. l. 10. —( l. 11 ) M1 मा ( for स्म ). M3 सौम्य ( for वीर ). M3 विषीदसि ( sic ) ( for °दति ). —After l. 11, Dm1 D8 G3 M2.3 ins. :

1266( B )* ततः सत्त्वानि तद्रक्षः क्षुधयाभिग्रसत्तदा ।

[ G3 [ अ ]भ्यग्रसत् ( for [ अ ]भिग्र° ). M2 ततः पिपासाविक्षिप्तः क्षुधया निभृतस्तदा. ]

—After 1266( B )*, G3 ( second time ) M3 read 22, while Dm1 D8 ins. 1264*, whereas D4 ins. after l. 11 :

1266( C )* भ्रातरौ स्वकरं प्राप्तौ दृष्ट्वा तौ प्रीतमानसः ।

—Dg1 D4 T3 G1.2 M om. l. 12. —( l. 12 ) D6 G3 क्रूरौ ( for क्रूरो ). ]

24 Ñ1 D1 om. 24$^{ab}$; V2 illeg. up to कबंधो in 24$^{b}$. —$^{a}$ ) Ñ2 V1 B1.3.4 D5.7 अथोवाच; D2 T3 तावुभौ च ( for तावुवाच ). T1.2 पप्रच्छ घननिर्घोषः. —After 24$^{ab}$, B1.3 ins. :

1267* बाहुपाशपरिक्षिप्तौ विकृतौ पुरुषादकः ।

—Thereafter B1.3 cont., while Ś1 Ñ( Ñ1 after 3.66.1 [ cf. v.l. 20$^{ab}$ ] ) V B4 D2.3.5.7 M3 ins. after 24$^{ab}$ :

1268* शरचापधरौ वीरौ भ्रातरौ रामलक्ष्मणौ ।

[ D3 वर- ( for शर- ). Ñ1 -चापायुधौ ( for -चापधरौ ). D3 M3 सहितौ ( for भ्रातरौ ). Ñ1 सशृंगाविव पर्वतौ ( for the post. half ). ]

—$^{d}$ ) Ś1 D1-3 खड्गबाण-( D1.2 चाप- ); Ñ1 महाबाहु-; B3 महत्खड्ग- ( for महाखड्ग- ).

25 $^{a}$ ) Dg1 घोरदेशम् ( for घोरं देशम् ). Ś1 Ñ2 V B1.3.4 D1-3.5.7 वनमिदं( D3 °मं ) ( for देशमिमं ). Ñ1 T1.2 अनुप्राप्तौ. —$^{b}$ ) Ś1 भक्ष्यम्; B1.3.4 Dg1 D5.7 T3 भक्ष्याव् ( for °क्षाव् ). Dg1 उभौ स्थितौ ( for उपस्थितौ ). Dt1 D6 T1.3 Cm.k.t दैवेन मम चाक्षु( T1.2 °मि )षौ. ❀ Cg : भक्षौ आहारौ. ❀ —$^{c}$ ) Dg1 D4 M3 वदतां; Dt1 T3 वदंतं; D8 वद तत् ( for वदतं ). T3 मां ( for वां ). Ś1 D1-3 तच्च( D1.2 °त्त्वं; D3 °था ) ब्रूतं यथातत्त्वं( D1.2 °थ्यं ); Ñ1 आक्रम्यमाणो यत्नेन; Ñ2 V B1.3.4 D5.7 ब्रू( B3 क्रू )तमर्थं ( B1 °मद्यं ) च कामं च. —$^{d}$ ) Ś1 वामिहागतौ; Ñ1 ** ( illeg. ) वां मया; Dm1 D8 G3 M1 चागतावुभौ; D1-3 इदमा( D2 °ह वा )गतौ ( for चागतौ युवाम् ). ❀ Cv : वदतं कार्यमिह वामिति सम्यक्. ❀

दण्डकारण्यमखिलं दर्शनादेव राघव।
शापस्यान्ताय काकुत्स्थ प्राप्तस्त्वमरिमर्दन।
स त्वमद्य पुरावृत्तैः पितृभिः संनिराकृतम्।
तारयस्व महाबाहो दण्डकारण्यमद्य वै।
एवमुक्तस्तदा रामः प्रत्युवाच महामुनिम्।
आश्चर्यमिदमाख्यातं देशस्यास्य यथातथम्।
एवमुक्तस्तु रामेण महर्षिस्त्विदमब्रवीत्।

Colophon

## 4

After 3.13.26, Ś1 V1 D1.2 ins.:

तथा वारणमुख्यांश्च दश पुत्रांश्च राघव।
तेषां पुत्राश्च पौत्राश्च कोटिशोऽर्बुदशस्तथा।
असङ्गगतयश्चैव दुष्टसत्त्वा भयंकराः।
धार्मिका बलिनश्चण्डा देवैरपि दुरासदाः।
कामरूपा महाकाया जराशोकविवर्जिताः।
तेषां दश सहस्राणि कुलानां सुमहौजसाम्।
सरमायाः सुतौ श्वानौ यमस्यानुचरौ स्मृतौ।
तयोः पुत्राश्च पौत्राश्च तेषां संख्या न विद्यते।
भूतापि जज्ञे भूतांश्च रुद्रस्यानुचरान्बहून्।
अनेकरूपवर्णांश्च ह्रस्वान्स्थूलान्वृकोदरान्।
अनेकहस्तपादांश्च बहुक्षिमुखनासिकान्।
अनेकवेषाभरणान्दक्षांश्चण्डरणप्रियान्।
कपिशायां पिशाचाश्च जाता उच्छिष्टभोजनाः।
सुरसासूतसर्पाणां सहस्रं तीक्ष्णविक्रमम्।
तीक्ष्णकोपं दुराधर्षं महोग्रं विषदर्पितम्।
दंष्ट्राया दंष्ट्रिणः पुत्रा व्याधाश्चामिषगृध्रिणः।
विनतायाः सुतो देवोऽरुणो गरुड एव च।
अरुणस्तु सूर्यसखो गरुडः पतगेश्वरः।
इरण्याः प्रसवः कन्यास्तिस्रो रघुकुलोद्वह।
ताभ्यो लता वीरुधश्च ज्ञेया वल्लयस्तृणानि च।
सर्वे पुष्पफला वृक्षा इरण्याः प्रसवाः स्मृताः।
रुद्राणां सुरभी माता गवां च रघुनन्दन।
विश्वस्य मातरो गावो रुद्रास्त्रिभुवनेश्वराः।
विश्वेश्वरा मुकुटिनो मुण्डाः पिङ्गाक्षमालिनः।
अचिन्त्या ह्यद्भुताकारा वशिनः कृत्तिवाससः।

## 5

After 3.23.27ab, Ñ2 V B1.3 D5.7 ins.; while B2.3 ins. after 3.23.27:

खेचरा विस्मिताः सर्वे कालस्येव युगक्षये।
दृष्ट्वा च राघवं सर्वे राक्षसा युद्धदुर्मदाः।

l. 74–78.—(l. 74) M3 K(ed.) द्विजमन्युगता(K[ed.] °हुता)नि वै.—(l. 76) G2.3 राजन् (for राम).—(l. 77) M2 मानद (for राघव).—(l. 78) M2.3 अरिसूदन (for °मर्दन).—Ś1 om. l. 79.—(l. 79) D2.3 तत्त्वम् (for स त्वम्). D1–3 पुरात्प्राप्तः; M2 पुरावृत्तेः (for पुरावृत्तैः). D1–3 पितृवत् (for पितृभिः). D1–3 सुनिराकृतान्; M2 स निराकृतं (for संनिराकृतम्).—(l. 80) G3 M2.3 तारय त्वं; M1 कारय त्वं (for तारयस्व). Ś1 महाभाग (for °बाहो). Ś1 D1–3 दंडकान्म(D2 °केस्म)द्दशानुगान्(D3 °त्) (for the post. half).—After l. 80, Ś1 D1–3 ins.:

एवमस्माद्रघुश्रेष्ठ दण्डकारण्यमुच्यते।

Colophon

[D3 एतस्माद् (subm.) (for एवमस्माद्). *Sarga name*: Ś1 D2.3 शापवर्णनं(D3 °नः); D1 दंडकारण्यशापवर्णनं.—*Sarga no.* (figures, words or both): Ś1 D2 om.; D1 16; D3 21; L(ed.) 17.]

—(l. 82) G2 यथातथा (for °थम्).—G2 om. l. 83.—(l. 83) M1 इदम् (for त्विदम्).—After l. 83, M2 ins.:

यस्य दोषादिदं राम दण्डकारण्यमुच्यते।

Colophon.—*Sarga no.* (figures, words or both): M2 13.—After colophon, M2 wrongly repeats l. 81 with var. ततो (for तदा).

### 4

(l. 1) V1 वानर-; D2 वामन- (for वारण-). D1 सदंताश्चैव (for दश पुत्रांश्च).—(l. 2) V1 D1 च ह (for तथा).—(l. 3) V1 D1.2 असंगगतयः सर्वे (for the prior half). V1 दुष्टमनु- (sic); D1.2 °सत्त्व- (for °सत्त्वा).—(l. 4) V1 यजिनश्; D1 जवनाश् (for बलि°). D2 धार्मिकानलिनश्.—(l. 6) V1 कुल- (for दश).—(l. 9) Ś1 D2 च (for [अ]पि). D1 भूता विजज्ञे भूतांस्तु (for the prior half).—(l. 10) V1 -वर्णरूपांश् (by transp.) (for -रूपवर्णांश्). D1 तान् (for च). D2 ह्रस्व- (for ह्रस्वान्). V1 D1 नैकस्थल(D1 ह्रस्वस्थूल)कृशोदरान् (for the post. half).—(l. 11) V1 अनंतपादांश्च बहून्वकुक्षिमुखनासिकान्.—(l. 12) D1 चंडान् (for चण्ड-). V1 कृपांश्चंडाव्रणप्रियान् (for the post. half).—(l. 13) V1 कपिशायाः. D1 तूच्छिष्टभोजिनः; D2 तूच्छिष्टभोजनाः.—(l. 15) V1 बलदर्पितं.—(l. 16) D1 दंष्ट्रायां. V1 D1 व्यालाश्; D2 व्याडाश् (for व्याधाश्).—(l. 17) V1 D1.2 सुतौ देवाव् (for सुतो देवो). V1 D1 अरुणो गरुडश्च ह; D2 अरुणो गरुड एव च (hypm.) (for the post. half).—(l. 18) V1 वै (for तु). D1 अरुणः सूर्यरथगो (for the prior half).—(l. 19) D1.2 इरायाः (for इरण्याः).—(l. 20) D1 ताभ्यो भगवन्वीरुधश्च (hypm.) (for the prior half). D1 जाता (for ज्ञेया). V1 ताभ्यः स्रोतसरीरश्च जाता जन्यो वनानि च (sic).—(l. 21) D1 सर्व-; D2 सर्वाः (for सर्वे). V1 पुष्पलता; D1 पुण्यफला (for पुष्प°). V1 D2 इवायाः; D1 इरायाः (for इरण्याः). D1 प्रसवः स्मृतः.—(l. 22) V1 D1 सुरभिर्.—(l. 23) V1 तु (for त्रि-).—(l. 24) V1 मुंडदंडाः पताकिनः; D1.2 मूढाः पिंगाः(D2 मुंडाः पिंडाः) पिनाकिनः (for the post. half).—(l. 25) V1 त्वश्चताकारा (for ह्यद्भु°).

### 5

(l. 1) B1.3 [ए]व (for [इ]व).—(l. 2) V1 B1.3 तं दृष्ट्वा (for दृष्ट्वा च). V2 illeg. after दृष्ट्वा च. V1 राक्षसाः (for

स्थिताः पर्वतसंकाशाः परमं विस्मयं गताः ।
तान्दृष्ट्वा विस्मितान्सर्वान्राक्षसान्राक्षसाधिपः ।
उवाच दूषणं तत्र खरः खरपराक्रमः ।
न चैवास्ति नदी तार्या सैन्यं चैकपदे स्थितम् ।
ज्ञायतां सौम्य तत्त्वेन किमेतदिति निश्चितम् ।
स गत्वा राघवं दृष्ट्वा पुनरागम्य राक्षसः ।
उवाच दूषणो वाक्यं खरं तं रावणानुजम् ।
राम एष धनुष्पाणिः स्थितः समरमूर्धनि ।
यं दृष्ट्वा राक्षसाः सर्वे स्थिताः शत्रुभयंकरम् ।
मां नियोजय तावत्त्वं यावदेनं नृपात्मजम् ।
शरैरत्याग्निसंकाशैर्नयामि यमसादनम् ।
दूषणस्य वचः श्रुत्वा स रथेनाशुविक्रमः ।
अभ्यधावत काकुत्स्थं स्वर्भानुरिव भास्करम् ।
तं दृष्ट्वा राक्षसी सेना खरं युद्धाय दंशितम् ।
अभ्यधावत गम्भीरा महामेघौघनिःस्वना ।
वरायुधस्तां रिपुसंघसूदनो
महारथो दाशरथिर्महायशाः ।
महाचमूं वीक्ष्य महार्णवोपमां
न विव्यथे नापि मुमोह राघवः ।

## 6

After 3.23.27, Ś$_1$ Ñ$_1$ $D_{2.3}$ $M_2$ ins. :

तं तु दृष्ट्वा स्थितं रामं संक्रुद्धं धृतकार्मुकम् ।
स्थितमेकपदे सैन्यं सहसा तदकम्पत ।
सैन्यं तु स्थितमालोक्य निश्चलं पर्वतोपमम् ।
पार्श्वस्थं दूषणं क्रुद्धः खरो वचनमब्रवीत् ।
न चात्रास्ति नदी तार्या स्थितमेकपदे बलम् ।
किमर्थं ज्ञायतां तावच्छीघ्रं दूषण गम्यताम् ।
एवमुक्तस्ततो दूरे दूषणः परवीरहा ।
खरस्य वचनादेवं सैन्यमध्ये विनिःसृतः ।
रथेन दूषणः शीघ्रमग्रतश्चावलोकयन् ।
स ददर्श ततो राममग्रतो विधृतायुधम् ।
शरार्चिषं सुसंक्रुद्धं दग्धुकाममिवानलम् ।
स निवृत्य रथेनैव दूषणः शत्रुदूषणः ।
उपगम्य खरं वाक्यमतिसंक्रुद्धमब्रवीत् ।
रामः प्रतिमुखे वीर सचापः पर्यवस्थितः ।
तस्य त्रासादिदं सैन्यं स्थितं न परिसर्पति ।
न खल्वाख्याति ते कश्चिद्रामोऽयमिति संस्थितः ।
राक्षसानां विषादेन स मया परितर्कितः ।

---

राघवं ). $V_1$ राघवं ( for राक्षसा ). —( l. 4 ) $V_2$ illeg. after तान्. $D_7$ om. ( hapl. ) for क्षसान्रा. $B_1$ राक्षसेश्वराः ( for राक्षसाधिपः ). —( l. 5 ) $B_1$ खरतरं वचः ( for खरपराक्रमः ). —$B_1$ om. l. 6–9. —( l. 6 ) $V_2$ illeg. after सैन्यं. $V_1$ [ए]के पदे ( for [ए]कपदे ). —( l. 7 ) $D_5$ तत्त्वैनं ( for तत्त्वेन ). —After l. 7, $V_2$ ins. :

खर * * * * * * * * * दभिनिःसृतः ।
रथेन दूषण श्री * * * * * * * * * ।
स ददर्श ततो राममग्रतो वि * * पुरम् ।
यत्र त्रासास्थितं * * * * * * * * * * ।

—( l. 8 ) $V_1$ $B_4$ आगत्य ( for आगम्य ). —( l. 11 ) $V_2$ illeg. up to शत्रुभ. Ñ$_2$ $V_1$ $B_2$ शत्रुभयंकराः; $B_{1.4}$ $D_5$ °कर ( for °करम् ). —$V_1$ om. l. 12–13. $M_2$ ins. l. 12–13 after l. 14 of App. I ( No. 6 ). —( l. 13 ) $V_2$ अत्यग्नि-; $B_{1.4}$ अथाग्नि-; $B_2$ अभ्यग्नि-; $M_2$ अग्न्यर्क- ( for अद्याग्नि- ). $B_3$ शरीरेभ्यग्निसंकाशे ( for the prior half ). —( l. 15 ) $V_2$ illeg. up to स्वर्भा-. $V_1$ $B_2$ भास्करः. —( l. 17 ) V -मेघोघ-; $D_5$ -तेजौघ- ( for -मेघौघ- ). —( l. 18 ) $B_3$ वरायुधां. $B_1$ -संघशस्तदा; $B_4$ -वृंदसूदनो ( for -संघसूदनो ). —( l. 20 ) $B_2$ तां सुमहार्णवोपमां ( for वीक्ष्य म° ). —After l. 21, $B_4$ reads colophon with Sarga name खरसैन्यदर्शनं and No. 32.

### 6

( l. 1 ) $D_3$ तत्तु ( for तं तु ). $M_2$ तं दृष्ट्वावस्थितं राममेकं बाणधनुर्धरं. —( l. 2 ) Ñ$_1$ न व्यकंपत; $D_3$ समकंपत ( for तदकम्पत ). $M_2$ बहूनां रक्षसां संघे विनाशाय समुद्यतं. —( l. 3 ) $D_3$ तु स्थितमालक्ष्य; $M_2$ तत्समवस्थाप्य ( for °मालोक्य ). —( l. 4 ) $D_3$ $M_2$ क्रुद्धं ( for क्रुद्धः ). —( l. 5 ) Ñ$_1$ तुर्या; $D_{2.3}$ तीर्या ( for तार्या ). $M_2$ कथमग्रे न यातीदं ( for the prior half ). $D_3$ $M_2$ स्थितं चैकपदे. Ñ$_1$ स्थितं चैकया * * * ( illeg. ) ( for the post. half ). —( l. 6 ) $M_2$ तमर्थं ज्ञायतामेतच् ( for the prior half ). —Ñ$_1$ $D_{2.3}$ $M_2$ om. l. 7. —( l. 8 ) $M_2$ [ए]तद्वचः श्रुत्वा ( for वचनादेवं ). $D_{2.3}$ सैन्यमध्याद् ( for °मध्ये ). Ñ$_1$ विनिर्गतः. $M_2$ सैन्याग्रादभिनिसृतः ( for the post. half ). —( l. 9 ) Ñ$_1$ चाग्रतः ( for दूषणः ). $M_2$ क्रुद्धो ( for शीघ्रम् ). Ñ$_1$ $D_2$ अग्रतोथावलोकयन् ( $D_2$ °यत् ); $D_3$ अग्रतो व्यवलोकयत्; $M_2$ ( with hiatus ) अग्रतोवी व्यलोकयन् ( for the post. half ). —( l. 10 ) Ñ$_1$ $D_2$ विततायुधं; $D_3$ [ऽ]धिष्ठितायुधं; $M_2$ सशरासनं ( for विधृतायुधम् ). —After l. 10, $M_2$ reads l. 15 and om. l. 11–12. —( l. 12 ) $D_{2.3}$ संनिवृत्य ( for स निवृत्य ). $D_3$ शत्रुकर्शनः. —( l. 13 ) $D_3$ अभि- ( for अति- ). $M_2$ तं दृष्ट्वा खरमागम्य दूषणः पुनरब्रवीत्. —( l. 14 ) Ñ$_1$ $D_{2.3}$ एष रामः प्रतिमुखे ( for the prior half ). Ñ$_1$ प्रत्यवस्थितः. $M_2$ एष रुद्ध्वा महाबाहुः सैन्यं रामोग्रतः स्थितः. —After l. 14, $M_2$ ins. l. 12–13 of App. I ( No. 5 ) and then cont. :

ततः स सैन्यं निःसृत्य श्रुत्वा दूषणभाषितम् ।
सहसैवाभियात्क्रुद्धो रथेनाभ्यद्रवत्खरः ।
राक्षसानब्रवीत्सर्वान्भ्रुकुटीसंहताननः ।
इदं वचनमत्युग्रं दर्शयन्भावमात्मनः ।
एभिर्न परितुष्यामि पौरुषेण च राक्षसाः ।
वञ्चितश्चाप्यनार्याणां कृत्वा कस्मात्क्रियां पुरा ।
एकं दृष्ट्वा धनुष्पाणिं मानुषं पर्युपस्थितम् ।
राक्षसं वीरमुत्सृज्य भीताः केनापि हेतुना ।
गच्छध्वमुपसर्पध्वं संनिकर्षादितो मम ।
अहमेको रणे रामं क्षयं नयति सायकैः ।

—( l. 15 ) Ñ$_1$ $D_3$ यस्य ( for तस्य ). $M_2$ यस्य त्रासात्स्थितो ( °तं ) सैन्यः ( °न्यं ) सहसा नाभ्यवर्तत. —$M_2$ om. l. 16–19.

रामस्य संमुखं सूत रथं नोदय मे द्रुतम्।
एकस्माद्धि बलं त्रस्तं विशतीव परस्परम्।
एवमुक्त्वा ततो रामं रथेनाभ्यद्रवत्खरः।
तं दृष्ट्वा सर्वसैन्यानि प्राद्रवन्दूरमग्रतः।

## 7

After 3.24.28, Dg1 Dt1 Dm1 D1.4.6.8 T G M1.2 (preceded by 462*).3 ins.:

ते समन्तादभिक्रुद्धा राघवं पुनरभ्ययुः।
तैश्च सर्वा दिशो दृष्ट्वा प्रदिशश्च समावृताः।
राक्षसैरुद्यतप्रासैः शरवर्षाणि वर्षिभिः।
स कृत्वा भैरवं नादमस्त्रं परमभास्वरम्।
संयोजयत गान्धर्वं राक्षसेषु महाबलः।
ततः शरसहस्राणि निर्ययुश्चापमण्डलात्।
सर्वा दश दिशो बाणैरापूर्यन्त समागतैः।
नाददानं शरान्घोरान्विमुञ्चन्तं शरोत्तमान्।
विकर्षमाणं पश्यन्ति राक्षसास्ते शरार्दिताः।
शरान्धकारमाकाशमावृणोत्स दिवाकरम्।
बभूवावस्थितो रामः प्रक्षिपन्निव ताञ्शरान्।
युगपत्पतमानैश्च युगपच्च हतैर्भृशम्।
युगपत्पतितैश्चैव विकीर्णा वसुधाभवत्।
निहताः पतिताः क्षीणाश्छिन्ना भिन्ना विदारिताः।
तत्र तत्र स्म दृश्यन्ते राक्षसास्ते सहस्रशः।
सोष्णीषैरुत्तमाङ्गैश्च साङ्गदैर्बाहुभिस्तथा।
ऊरुभिर्बाहुभिश्छिन्नैर्नानारूपैर्विभूषणैः।
हयैश्च द्विपमुख्यैश्च रथैर्भिन्नैरनेकशः।
चामरव्यजनैश्छत्रैर्ध्वजैर्नानाविधैरपि।
रामेण बाणाभिहतैर्विच्छिन्नैः शूलपट्टिशैः।
खड्गैः खण्डीकृतैः प्रासैर्विकीर्णैश्च परश्वधैः।
चूर्णिताभिः शिलाभिश्च शरैरस्त्रैरनेकशः।
विच्छिन्नैः समरे भूमिर्विस्तीर्णाभूद्भयंकरा।
तान्दृष्ट्वा निहतान्सर्वे राक्षसाः परमातुराः।
न तत्र चलितुं शक्ता रामं परपुरंजयम्।

—(l. 16) D2 [आ]ख्यायते (for [आ]ख्याति ते).—Ñ1 repeats l. 15 after l. 16.—(l. 17) Ñ1 D2 मया स (by transp.); D3 मया सं- (for स मया).—Ñ1 om. l. 18–19; D2.3 om. l. 18.—(l. 19) D3 एकस्य (for एकस्माद्).—(l. 20) Ñ1 D2 उक्तस्; D3 उक्ते (for उक्त्वा). M3 रणे (for ततो). Ñ1 [अ]विद्रुतः; D3 [अ]भिद्रवत् (for [अ]भ्यद्रवत्).—(l. 21) D3 रथम्; M2 द्रुतम् (for दूरम्).—After l. 21, M2 reads 433*.

## 7

D1 om. l. 1.—(l. 1) D8 अपि क्रुद्धा (for अभिक्रुद्धा). Dt1 D1.6 आर्दयन्; Cg as above (for अभ्ययुः).—(l. 2) D1 T2 G1 स तु; B (ed.) ततः; Cg as above (for तैश्च). T3 G3 दृष्टाः (for दृष्ट्वा).—(l. 3) Dt1 D6 सर्वतः प्राप्तैः (for उद्यतप्रासैः). Dt1 D6 -वर्षाभिरावृतः; D1 -वर्षमिवेषुभिः; T1 G2 M2.3 Cg -वर्षाभिवर्षिभिः; G1 -वर्षाभिलाषिभिः (for -वर्षाणि वर्षिभिः).—M1 om. l. 4.—(l. 4) D1 विमुंचन् (for स कृत्वा). T2 कृत्वा भैरवसंनादं (for the prior half). D1 सोस्त्रं (for अस्त्रं).—(l. 5) Dg1 अयोजयत; Dt1 D6 समयोजयत; D1 प्रायोजयत; G3 संयोजयति (for संयोजयत).—(l. 6) D1 प्रमुमोच महामतिः (for the post. half).—(l. 7) G1 यस्माद् (for सर्वा). D1 घोरा (for बाणैर्). D4 T1 Cg अवार्यंत; G M आवार्यंत (G2 M1 °ते) (for आपूर्यन्त). D1 आवार्य रघुनंदनः (for the post. half).—(l. 8) D1 आददानं; T3 संदधानं (for नाददानं). Dt1 D4.8 G M Ck न मुंचंतं (for वि°). D4 T1 Ck शिलीमुखान् (T1 °खं); M2 महाबलं (for शरोत्तमान्). D1 विकर्षंतं महद्धनुः (for the post. half).—(l. 9) T2 G1 M2 न (M2 ना) कर्षमाणं (for वि°). D1 ददृशुर्न च मुंचंतं (for the prior half). D1 भयार्दिताः (for शरा°).—After l. 9, K (ed.) ins. (within brackets):

शरा रामेण तूत्सृष्टा रुक्मपुङ्खाः पतत्रिणः।
सर्पाः पञ्चानना भूत्वा भक्षयन्ति स्म राक्षसान्।

[ =l. 36–37 of No. 10.]

—(l. 10) T2 शरांधकार (for °रम्). D2 प्रावृण्वन् (for आ°). T2 दिवाकरः.—(l. 11) D1 चकार (for बभूव). Dm1 D8 व्यसृजन्निशिताञ्; D1.4 T1.2 G M Cg.k प्रवम (D4 G3 M3 °प)न्नित्र ताञ् (for प्रक्षिपन्निव ताञ्). Dg1 T3 प्रवर्षन्निव सायकान् (T3 ताञ्शरान्).—(l. 12) D1 प्रपतद्भिश् (for पतमानैश्). Dm1 D4.8 T1 प्रहि (Dm1 °ह)तैः शरैः; G1 प्राहितैर्भृशं; G2 M1 च निपातितैः; G3 चागतैर्भृशं (for च हतैर्भृशम्).—(l. 13) G2 M1 च हतैश् (for पतितैश्). Dg1 Dm1 D1.8 T G3 M3 वि (D1 प्रा)स्तीर्णा; G2 M1.2 प्रकीर्णा (for विकीर्णा).—(l. 14) D1 G2 M1.2 दी (G2 M1 शी)र्णाश् (for क्षीणाश्). D1 M2 भिन्नाश्छिन्ना (by transp.) (for छिन्ना भिन्ना).—(l. 15) D4 om. (hapl.) first तत्र. Dg1 G2 M1 च दृश्यंते; D1 [अ]भ्यदृश्यंत (for स्म दृश्यन्ते). M3 चतुर्दश (for सहस्रशः).—(l. 16) G2 M1 च करैस् (for बाहुभिस्). G3 तदा (for तथा).—(l. 17) Dm1 D4.8 T1 जानुभिश् (for बाहु°). Dg1 T2.3 G1 -रूपविभू (Dg1 °भी)षणैः; M2.3 -रूपविभूषितैः (for -रूपैर्विभूषणैः).—(l. 18) G2 M1 अनेकधा (for °शः).—(l. 19) Dm1 D8 T G1.3 M2 चामरैर् (for चामर-). Dg1 G2 चित्रैर् (for छत्रैर्).—(l. 20) Dm1 D4.8 T1 G1 रामस्य (for रामेण). G3 रामबाणाभिनिहतैर् (for the prior half). Dg1 M1 Cvp विचित्रैः (for विच्छिन्नैः). G1 -मुद्गरैः; Cvp -पट्टसैः (for -पट्टिशैः).—Dg1 Dt1 D6 T3 M1 om. l. 21–22.—(l. 22) G1.2 M2.3 चूर्णीकृतैः (for चूर्णिताभिः). Dm1 छत्रैर्; D4.8 छत्रैर्; T1.2 छिन्नैर्; G2 चित्रैर् (for अस्त्रैर्).—(l. 23) T3 गदाभिः; G2 विसृष्टैः; M1 विसृतैः (for विच्छिन्नैः). Dm1 D8 G3 तोमरैर् (for समरे). Cmp.k.tp as above; Cg.t विकीर्णा (for विस्तीर्णा).—(l. 24) Dm1 D1.8 G2.3 M2 संख्ये (for सर्वे). Dm1 D1.8 G3 राक्षसान्परमातुरान् (D1 °परमार्तवत्) (for the post. half).—Dg1 D4 T G1 M1.3 om. l. 25–29.—(l. 25) Dm1 D8 G2.3

बलावशेषं तु निरस्तमाहवे
खरादिकं राक्षसदुर्बलं बलम्।
जघान रामः स्थिरधर्मपौरुषो
धनुर्बलादप्रतिवारणैः शरैः।

## 8

After Sarga 24, D1 ins. :

राक्षसान्निहतान्दृष्ट्वा राघवेण महात्मना।
आविवेश महान्कोपः खरस्य रिपुघातिनः।
3.24.1 अवस्थितं तु संरब्धं राघवं रिपुघातिनम्।
ददर्शाश्रममागम्य खरः सैन्यपुरस्कृतः।
तं दृष्ट्वा द्विगुणं क्रुद्धश्चापमुद्यम्य सस्वनम्।
रामायाभिप्रयाहीति तं सूतं समनूनदत्।
खरस्याप्याज्ञया सूतस्तानश्वान्समनोदयत्।
यत्र रामो धनुष्पाणिर्युद्धायाभिमुखः स्थितः।
अभिरामं स्थितस्तूर्णं सर्वतः स निशाचरः।
बभूव मध्ये धातूनां स्वर्भानुरिव चाम्बरे।
ततस्ते भीमकर्माणः क्रुद्धाः सर्वे निशाचराः।
रामं नानाविधैः शस्त्रैरभ्यवर्षन्नमर्षिताः।
मुद्गरैरायसैः खड्गैः शूलैश्चक्रैः परश्वधैः।
राक्षसाः समरे रामं निजघ्नुः कुपिता भृशम्।
ते महाघोरसंकाशा महानादा महौजसः।
अभ्यधावन्त काकुत्स्थं यातुधाना जिघांसवः।
ते रामं शरवर्षेण अभ्यवर्षन्निशाचराः।
शशाङ्कमिव धाराभिर्वर्षमाणा बलाहकाः।
स तैः परिवृतो घोरैः राघवो रक्षसां गणैः।
आदित्य इव घर्मान्ते बभौ नीलैर्बलाहकैः।
तानि मुक्तानि शस्त्राणि समन्तात्तैर्निशाचरैः।
प्रतिजग्राह काकुत्स्थो नदीवेगानिवोदधिः।
स तैः प्रहरणैर्मुक्तैर्भिन्नगात्रैर्न विव्यथे।
रामः सुतीक्ष्णैर्बहुभिः शूलशक्तिपरश्वधैः।
निशाचरैर्महाघोरैः सर्वतो रघुनन्दनः।
दिवाकर इवाकाशे महाभ्रैरिव संवृतः।
विपेतुर्देवगन्धर्वाः सिद्धाश्च परमर्षयः।
एकं घोरैः सुबहुभिः दृष्ट्वा रामं समावृतम्।
ततो रामो महासत्त्वो मण्डलीकृतकार्मुकः।
ससर्ज निशितान्बाणाञ्शतशोऽथ सहस्रशः।
दुराधर्षान्दुर्विषहान्कालपाशोपमान्रणे।
मुमोच लीलया रामः शरान्काञ्चनभूषणान्।
ते शरा यातुधानानां मुक्ता रामेण संयुगे।
आददुः समरे प्राणान्कालपाश इवोदितः।
भित्त्वा राक्षससंघांस्ते शरा रुक्मविभूषिताः।
अन्तरिक्षे गता रेजुर्दीप्ता इव हुताशनाः।
असंख्येया हि रामस्य शराः कार्मुकनिःसृताः।
विनिपेतुर्महावेगा रक्षसां प्राणहारिणः।
ते धनूंषि ध्वजाग्राणि वर्माणि कवचानि च।
चिच्छेद रामः समरे शतशोऽथ सहस्रशः।
राक्षसानां तथा बाहून्सहस्ताभरणाङ्गदान्।
उद्यतान्सायकान्युद्धे चिच्छेदू रामसायकाः।
कर्णिकानीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः।
रामेणार्तस्वरं चक्रुर्भिद्यमाना निशाचराः।
ते शक्तिशूलपरशून्प्रासखड्गपरश्वधान्।
चिक्षिपुः परमक्रुद्धा रामाय लघुविक्रमाः।
तच्छस्त्रवर्षं सुमहद्विमुक्तं रजनीचरैः।
असंभ्रान्तो रणे रामः प्रतिजग्राह वीर्यवान्।
प्रतिगृह्य स तद्वर्षं निमीलित इवर्षभः।
तेषां बाणैस्तु निशितैराददे जीवितं ततः।
ते वध्यमाना रघुसूनुना तदा
निशाचराः संयति येऽत्र संश्रुताः।
विमुच्य शस्त्राण्यपरे विदुद्रुवुः
समीक्ष्य रामस्य रणे पराक्रमम्।

Colophon

## 9

After 547*, Ś1 Ñ V B1.3.4 D2.3.7 cont. ( Ś1 Ñ1 D2.3 l. 1–4 only ); Dm1 D8 G3 M1 K( ed. ) [ within brackets ] ins. l. 3–4 after 3.28.24; D5 ins. before 3.28.25; whereas M2 ins. l. 1–4 after 3.28.24 :

अद्य ते गदया राम शिरो मौलिविभूषितम्।
पातयामि क्षितौ वेगाद्दुष्टं पांशूत्करान्वितम्।
ततो रुधिरनिस्यन्दैस्त्वच्छरीरप्रवर्तितैः।
करिष्याम्युदकं तेषां हतानामिह रक्षसाम्।
इत्युक्तो राक्षसेन्द्रेण नरेन्द्रः प्रहसन्रणे।

M2 सहितुं ( for चलितुं ). D1 ननाद विविधान्नादान् ( for the prior half ). D1 रामः ( for रामं ). D1 -पुरंजयः ( for °यन् ). —After l. 25, D1 ins. l. 7–10 of 456*. Dt1 om. l. 26–29. —( l. 26 ) Dm1 स ( for तु ). —( l. 27 ) M2.3 खरादिकं दूषणबाहुसंश्रयं. —( l. 29 ) M2.3 -वारितैः ( for -वारणैः ).

9

D5 om. from l. 1 up to भीम in l. 10 ( cf. v.l. 3.28.13 ). D3 reads l. 1 in marg. —( l. 1 ) D3 अनया ( for अद्य ते ). M2 सशिरस्त्राणं ( for गदया राम ). Ś1 V1 B1 मौलिविभूषणं. —( l. 2 ) Ñ1 गदा- ( for क्षितौ ). B4 भ्रष्टं; D2.7 दुष्ट; G( ed. ) वृष्टिः. G( ed. ) -[ उ ]त्करानिव ( for °न्वितम् ). Ś1 उत्पांसूत्करावृतं; Ñ1 दुष्टं पाप**** ( illeg. ); V2 धृतचापकरावुभौ; D3 दुष्टपांशुकरान्वितं ( for the post. half ). —For l. 2, M2 subst. :

गदया पातयिष्यामि वृन्तात्तालफलं यथा।

—( l. 3 ) D7 तत्ते ( for ततो ). Ś1 -निःष्यंदैस्; Ñ1 D2.3 -निष्यंदैस्; V1 -विस्पंदैस्; B4 -विस्यंदैस्; Dm1 D8 G3 M1 -धारा-भिस्; M2 -विष्यंदैस् ( for -निस्यन्दैस् ). M1 स्वशरीर- ( for त्वच्छ° ). V2 रुधिरवि****रीर- ( illeg. ). V1 -विवर्तितैः; Dm1 D8 G3 M1 -विमर्दनात्; D2 -प्रवर्तिते; M2 -विनिःसृतैः ( for -प्रवर्तितैः ). —( l. 4 ) G3 **ष्यामि. Ñ1 M2 जलं तेषां; Dm1 D8 G3 M1 बलिं भूमौ( G3 °मि ) ( for [ उ ]दकं तेषां ). Ś1

अविस्मिततरं वाक्यं बभाषे रघुनन्दनः ।
रणे तु विजयं प्राप्य शोभते तव भाषितम् ।
परोक्षं न हतास्त्वेते राक्षसास्तव राक्षस ।
देवदत्तवरा ह्येते देवदत्तवरायुधाः ।
पश्यतस्ते हताः क्रूरा राक्षसा भीमविक्रमाः ।
किं वृथा कत्थसे पाप ब्रह्महन्राक्षसाधम ।
यत्ते वीर्यं च शक्तिश्च किं विलम्बेन तत्कुरु ।
अद्य ते सशिरस्त्राणं शिरो ज्वलितकुण्डलम् ।
पातयाम्यर्धचन्द्रेण खाज्ज्वलन्तमिव ग्रहम् ।
राघवेणैवमुक्तस्तु प्रज्वलन्निव राक्षसः ।
क्रोधसंरक्तनयनः प्रत्युवाच पुनः खरः ।
विदितो मे भवान्रामो विदितो मम लक्ष्मणः ।
राजा दशरथश्चैव विदितोऽहं तथा तव ।
मया खलु विसृष्टाया गदाया वेगमुत्तमम् ।
अद्य धारय शक्तिस्ते यद्यस्ति पुरुषाधम ।

## 10

Before Sarga 3.30, $Dg_1$ $Dt_1$ $Dm_1$ $D_{4.6.8}$ S ins.:

त्वरमाणस्ततो गत्वा जनस्थानादकम्पनः ।
प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ।
जनस्थानस्थिता राजन्राक्षसा बहवो हताः ।
खरश्च निहतः संख्ये कथंचिदहमागतः ।
एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः ।
अकम्पनमुवाचेदं निर्दहन्निव तेजसा ।
केन रम्यं जनस्थानं हतं मम परासुना ।
कोऽद्य सर्वेषु लोकेषु गतिं नाधिगमिष्यति ।
न हि मे विप्रियं कृत्वा शक्यं मघवता सुखम् ।
प्राप्तुं वैश्रवणेनापि न यमेन न विष्णुना ।
कालस्य चाप्यहं कालो दहेयमपि पावकम् ।
मृत्युं मरणधर्मेण संयोजयितुमुत्सहे ।
वातस्य तरसा वेगं निहन्तुमहमुत्सहे ।
दहेयमपि संक्रुद्धस्तेजसादित्यपावकौ ।
तथा क्रुद्धं दशग्रीवं कृताञ्जलिरकम्पनः ।
भयात्संदिग्धया वाचा रावणं याचतेऽभयम् ।
दशग्रीवोऽभयं तस्मै प्रददौ रक्षसां वरः ।
स विस्रब्धोऽब्रवीद्वाक्यमसंदिग्धमकम्पनः ।
पुत्रो दशरथस्यास्ति सिंहसंहननो युवा ।
रामो नाम महास्कन्धो वृत्तायतमहाभुजः ।
वीरः पृथुयशाः श्रीमानतुल्यबलविक्रमः ।
हतं तेन जनस्थानं खरश्च सहदूषणः ।
अकम्पनवचः श्रुत्वा रावणो राक्षसाधिपः ।
नागेन्द्र इव निःश्वस्य इदं वचनमब्रवीत् ।
स सुरेन्द्रेण संयुक्तो रामः सर्वामरैः सह ।
उपयातो जनस्थानं ब्रूहि कच्चिदकम्पन ।
रावणस्य पुनर्वाक्यं निशम्य तदकम्पनः ।
आचचक्षे बलं तस्य विक्रमं च महात्मनः ।
रामो नाम महातेजाः श्रेष्ठः सर्वधनुष्मताम् ।
दिव्यास्त्रगुणसम्पन्नः परं धर्मं गतो युधि ।

भविष्याम्युदरं तेषां (for the prior half). $\tilde{N}_1$ अहं वै; $V_1$ हितानां (for हतानाम्). $\acute{S}_1$ युधि; $\tilde{N}_1$ $V_1$ $D_{2.3}$ सर्व-; $B_3$ इव (for इह). $Dm_1$ $D_8$ $G_3$ $M_{1.2}$ त्वां हत्वा सर्वरक्षसां (for the post. half).—(l. 5) $V_1$ प्रहरन् (for °सन्).—(l. 7) $\tilde{N}_2$ $D_7$ रणेन (for रणे तु). $D_7$ भावितं (for °षितम्).—(l. 8) $D_7$ परोक्षे. G(ed.) निहतास् (for न हतास्). $V_1$ ते तु (for त्वेते).—(l. 10) V $B_1$ क्रुद्धा (for क्रूरा).—(l. 11) $D_7$ om. कत्थसे. $V_1$ वीर; $B_{1.3}$ नीच (for पाप). $B_{1.3}$ $D_7$ ब्रह्मघ्न (for °हन्). $V_1$ $B_3$ राक्षसाधमः.—(l. 12) $V_1$ शक्तिश्च वीर्यं च (by transp.).—(l. 14) $V_2$ $B_{1.3}$ म्याज्वलंतम् (sic); G(ed.) प्रज्वलंतम् (for खाज्ज्व°).—(l. 15) $B_4$ तेजसा (for राक्षसः).—(l. 16) $\tilde{N}_2$ $D_{5.7}$ ततः (for पुनः).—(l. 17) $V_2$ राम (for रामो).—(l. 18) $B_3$ मे यथा (for ऽहं तथा).—(l. 19) $\tilde{N}_2$ $V_2$ $D_{5.7}$ कर-; $B_4$ धनु- (for खलु). $B_{1.3}$ विसृष्टायां गदायां. $\tilde{N}_2$ $D_{5.7}$ जवम् (for वेगम्).—(l. 20) $V_1$ अभ्यधारय (for अद्य धा°).

## 10

$D_8$ begins with ॐ; $T_2$ with श्रीरामचन्द्राय नमः; $M_1$ with श्रीरामाय नमः.—(l. 1) $Dg_1$ $G_2$ जनस्थानादिकं पुनः (for the post. half).—(l. 3) $M_1$ जनस्थानगता. $M_2$ जनस्थानं भयस्थानं बहवो राक्षसा हताः.—(l. 5) $Dg_1$ $T_3$ क्रोध- (for क्रुद्धः).—(l. 6) $Dg_1$ T $G_1$ $M_3$ चक्षुषा (for तेजसा).—(l. 7) K(ed.) तेन (for केन). $Dt_1$ $D_4$ $T_{1.2}$ Ct भीमं; Ck भीम- (for रम्यं).—(l. 8) $Dt_1$ $D_6$ $T_{1.2}$ हि; Ck वा (for ऽद्य). $M_2$ कोद्य मे सर्वलोकेषु (for the prior half).—(l. 9) $T_3$ मखवता (for मघ°).—(l. 10) $G_3$ प्राप्तं. $Dt_1$ $D_6$ $G_1$ च (for second न).—(l. 11) $G_2$ [अ]यं (for [अ]हं).—$G_1$ $M_1$ om. (hapl.) l. 13. $T_{1.2}$ transp. l. 13 and 14.—(l. 13) $Dt_1$ $D_6$ अपि चोत्सहे (for अहमु°).—(l. 14) $Dm_1$ $D_8$ $G_{2.3}$ M वा स्वयं($M_1$ सुसं; $M_3$ °प्यहं) क्रुद्धस् (for अपि संक्रुद्धस्).—(l. 15) $M_2$ सुसंक्रुद्धं (for तथा क्रुद्धं).—(l. 16) $G_2$ भय- (for भयात्). याचतेभयं is written in marg. in Malayalam script in $G_2$ *sec. m.*—(l. 18) $Dg_1$ विश्रब्धो (for विस्रब्धो).—(l. 19) $Dg_1$ $Dt_1$ $D_6$ [आ]स्ते; $G_1$ $M_2$ [आ]सीत् (for [अ]स्ति).—(l. 20) $D_4$ $T_{1.2}$ $G_{1.2}$ $M_{1.3}$ वृषस्कंधो; $M_2$ महावीर्यो (for महास्कन्धो).—(l. 21) $Dt_1$ $Dm_1$ $D_{6.8}$ $G_1$ श्यामः; M रामः (for वीरः). Cv*p* वीरः पृथुयशाः श्रीमान् (as above).—(l. 22) $Dg_1$ $Dt_1$ $D_6$ $T_3$ $M_2$ Ct हतस्तेन जनस्थाने (for the prior half).—(l. 23) $D_4$ राक्षसेश्वरः.—$Dg_1$ reads l. 24 in marg.—(l. 24) $Dg_1$ $Dt_1$ $Dm_1$ $D_{4.6}$ S निश्वस्य. K(ed.) वचनं चेदमब्रवीत् (for the post. half).—(l. 25) $T_3$ सर्वायुधैः (for °मरैः).—(l. 26) $Dg_1$ $Dm_1$ $D_4$ $T_2$ $G_{1.3}$ कश्चिद् (for कच्चिद्). ❀ Ct स रामः सर्वामरसहितेन्द्रेण जनस्थानं कच्चिदुपागत इत्यन्वयः. ❀ $Dg_1$ repeats l. 28 after l. 43.—(l. 28) $Dg_1$ (second time) विक्रमस्य (for °मं च).—(l. 30) $Dg_1$ om. from the post. half

तस्यानुरूपो बलवान्रक्ताक्षो दुन्दुभिस्वनः।
कनीयाँल्लक्ष्मणो नाम भ्राता शशिनिभाननः।
स तेन सह संयुक्तः पावकेनानिलो यथा।
श्रीमान्राजवरस्तेन जनस्थानं निपातितम्।
नैव देवा महात्मानो नात्र कार्या विचारणा।
शरा रामेण तूत्सृष्टा रुक्मपुङ्खाः पतत्रिणः।
सर्पाः पञ्चानना भूत्वा भक्षयन्ति स्म राक्षसान्।
येन येन च गच्छन्ति राक्षसा भयकर्शिताः।
तेन तेन स्म पश्यन्ति राममेवाग्रतः स्थितम्।
इत्थं विनाशितं तेन जनस्थानं तवानघ।
अकम्पनवचः श्रुत्वा रावणो वाक्यमब्रवीत्।
गमिष्यामि जनस्थानं रामं हन्तुं सलक्ष्मणम्।
अथैवमुक्ते वचने प्रोवाचेदमकम्पनः।
शृणु राजन्यथावृत्तं रामस्य बलपौरुषम्।
असाध्यः कुपितो रामो विक्रमेण महायशाः।
आपगायाः सुपूर्णाया वेगं परिहरेच्छरैः।
सताराग्रहनक्षत्रं नभश्चाप्यवसादयेत्।
असौ रामस्तु सीदन्तीं श्रीमानभ्युद्धरेन्महीम्।
भित्त्वा वेलां समुद्रस्य लोकानाप्लावयेद्विभुः।
वेगं वापि समुद्रस्य वायुं वा विधमेच्छरैः।
संहृत्य वा पुनर्लोकान्विक्रमेण महायशाः।
शक्तः स पुरुषव्याघ्रः स्रष्टुं पुनरपि प्रजाः।
न हि रामो दशग्रीव शक्यो जेतुं त्वया युधि।
रक्षसां वापि लोकेन स्वर्गः पापजनैरिव।
न तं वध्यमहं मन्ये सर्वैर्देवासुरैरपि।
अयं तस्य वधोपायस्तन्ममैकमनाः शृणु।
भार्या तस्योत्तमा लोके सीता नाम सुमध्यमा।
श्यामा समविभक्ताङ्गी स्त्रीरत्नं रत्नभूषिता।
नैव देवी न गन्धर्वी नाप्सरा नापि दानवी।
तुल्या सीमन्तिनी तस्या मानुषीषु कुतो भवेत्।
तस्यापहर भार्यां त्वं प्रमथ्य तु महावने।
सीतया रहितः कामी रामो हास्यति जीवितम्।
अरोचयत तद्वाक्यं रावणो राक्षसाधिपः।
चिन्तयित्वा महाबाहुरकम्पनमुवाच ह।
बाढं काल्यं गमिष्यामि एकः सारथिना सह।
आनेष्यामि च वैदेहीमिमां हृष्टो महापुरीम्।
अथैवमुक्त्वा प्रययौ खरयुक्तेन रावणः।
रथेनादित्यवर्णेन दिशः सर्वाः प्रकाशयन्।
स रथो राक्षसेन्द्रस्य नक्षत्रपथगो महान्।
संचर्यमाणः शुशुभे जलदे चन्द्रमा इव।
स मारीचाश्रमं प्राप्य ताटकेयमुपागमत्।
मारीचेनार्चितो राजा भक्ष्यभोज्यैरमानुषैः।
तं स्वयं पूजयित्वा तु आसनेनोदकेन च।

---

of l. 30 up to the prior half of l. 31. Dm1 D8 T1.2 G1 पुरंदरसमो युधि ( for the post. half). —(l. 31) G2 रक्तास्यो ( for °क्षो ). —(l. 32) Dt1 D6 भ्राता राका- ( for नाम भ्राता). ❀ Ct : राकाशशिनिभानन इति. ❀ —(l. 37) Dm1 D4 सर्वे ( for सर्पाः ). —(l. 38) D4 [ अ ]भि-; G1 हि ( for च ). D4 G1.2 भयशंकिताः ( for °कर्शिताः ). —(l. 39) Dg1 T3 G2 च ( for स्म ). —After l. 39, M2 ins. *inf. lin. sec. m.* :

अर्धाधिकमुहूर्तेन निहता राक्षसा रणे।
जनस्थाने स्थिताः सर्वे खरश्च सहदूषणः।

—D4 G2 M om. l. 40. —(l. 42) Dm1 D8 G3 जनस्थानं गमिष्यामि हंतुं रामं सलक्ष्मणं. —(l. 43) Dg1 T3 G2 तथा ( for अथ ). Dg1 reads l. 44 for the first time after l. 18, repeating it here. —(l. 46) Dt1 D4.6 तु ( for सु- ). D4 स्वयं; G3 शनैः ( for शरैः ). —Dg1 reads l. 47 in marg. —(l. 47) Dg1 Dm1 D4.8 M3 सतारग्रह-; M2 सतारागण-. Dg1 नभश्च वावसादयेत् ; M3 नभश्चाप्यवलोकयन् ( for the post. half). —(l. 48) D4 सु- ( for तु ). T1.2 G1 Cm.g मज्जंती ( for सीदन्तीं ). M2.3 मशान् ( for श्रीमान् ). D6 अपि ( for अभि- ). —(l. 49) Dm1 D8 M2.3 इमान् ; D4 प्रभुः ( for विभुः ). D6 T2 G1 लोकानां प्लावयेद्विभुः ( for the post. half). ❀ Cvp लोकानाप्लावयेद्विभुरिति पाठः ( as above); Cg विप्लावयेत् सिंचेत्. ❀ —M2 reads l. 50 after l. 46. —(l. 50) Dg1 D8 च ( for first वा ). Dg1 वायोर् ( for वायुं ). D4 हि ( for second वा ). —(l. 51) D4 स संहृत्य; G1 संगृह्य वा ( for संहृत्य वा ). M1 सृजेद् ( for पुनर् ). —Dg1 reads l. 52 in marg. D4 G2 M3 read l. 52 for the first time after l. 45, repeating it here. M1.2 read l. 52 after l. 45. —(l. 52) Dt1 D6 शक्तः श्रेष्ठः स पुरुषः ( for the prior half). Dg1 इमाः ( for अपि ). —(l. 53) Dt1 D6 रणे त्वया ( for त्वया युधि ). Dg1 T3 हंतुं शक्यो युधि त्वया ( for the post. half). —(l. 54) T2 च ( for वा ). —(l. 55) G2 सर्वे- ( for सर्वैर् ). —(l. 56) G1.2 अवध्यस्य ( for अयं तस्य ). M2 वधोपायं. D4 तदिस्यैकमनाः ( for तन्ममै° ). —(l. 57) G2 M1 [ अ ]स्यानुत्तमा ( for तस्यो° ). —(l. 58) Dm1 D8 सर्व( for सम- ). Dt1 * * भूषिता ( for रत्न° ). —(l. 59) D4 न वै ( for नैव ). M2 नासुरी ( for नाप्सरा ). Dt1 D6 M2 न च पन्नगी ( for नापि दानवी ). —(l. 60) Dg1 Dt1 D6 T मानुषी तु; M3 °षेषु ( for °षीषु ). —(l. 61) Dm1 D8 G3 तां ( for त्वं ). Dt1 D4.6 Ct तं प्रमथ्य; T3 प्रमथ्यं तु; M2 प्रलोभ्य तु ( for प्रमथ्य तु ). —(l. 62) T2 G1 स तया ( for सीतया ). Dt1 D6 सीतया रहितो रामो न चैव हि भविष्यति. —(l. 63) Dg1 अरोचयत्तः; D4 अरोचत सः; G1 आरोचयत. D4 लोकरावणः; M2.3 रक्षसां वरः ( for राक्षसाधिपः ). —(l. 65) Note hiatus between the two halves. Dg1 D6 Ct कल्यं ( for काल्यं ). G2.3 ह्येकः ( to avoid hiatus); M3 एषः ( for एकः ). ❀ Ck : काल्यं प्रातः मान्तमव्ययं कल्यमित्यर्थः. ❀ —(l. 66) Dg1 आनेष्यामीति; Dm1 D8 T1.2 आनयिष्यामि; T3 G3 M2.3 आनेष्यामि तु ( for °मि च ). —(l. 67) Dt1 D6 तदा; B( ed.) तद् ( for अथ ). M3 रथ- ( for खर- ). —(l. 70) Dg1 T1.2 Cg संचार्यमाणः; Dt1 D6 G2 Ck.t संचूर्यमाणः; G1.3 संचूर्यमाणः. Dg1 यथा ( for इव ). —(l. 71) Dm1 D8

अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ।
कच्चित्सुकुशलं राजन्लोकानां राक्षसाधिप ।
आशङ्के नाथ जाने त्वं यतस्तूर्णमिहागतः ।
एवमुक्तो महातेजा मारीचेन स रावणः ।
ततः पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ।
आरक्षो मे हतस्तात रामेणाक्लिष्टकर्मणा ।
जनस्थानमवध्यं तत्सर्वं युधि निपातितम् ।
तस्य मे कुरु साचिव्यं तस्य भार्यापहारणे ।
राक्षसेन्द्रवचः श्रुत्वा मारीचो वाक्यमब्रवीत् ।
आख्याता केन सीता सा मित्ररूपेण शत्रुणा ।
त्वया राक्षसशार्दूल को न नन्दति नन्दितः ।
सीतामिहानयस्वेति को ब्रवीति ब्रवीहि मे ।
रक्षोलोकस्य सर्वस्य कः शृङ्गं छेत्तुमिच्छति ।
प्रोत्साहयति यश्च त्वां स च शत्रुरसंशयः ।
आशीविषमुखाद्दंष्ट्रामुद्धर्तुं चेच्छति त्वया ।
कर्मणानेन केनासि कापथं प्रतिपादितः ।
सुखसुप्तस्य ते राजन्प्रहृतं केन मूर्धनि ।
विशुद्धवंशाभिजनाग्रहस्त-
स्तेजोमदः संस्थितदोर्विषाणः ।
उदीक्षितुं रावण नेह युक्तः
स संयुगे राघवगन्धहस्ती ।
असौ रणान्तस्थितिसंधिवालो
विदग्धरक्षोमृगहा नृसिंहः ।
सुप्तस्त्वया बोधयितुं न युक्तः
शराङ्गपूर्णो निशितासिदंष्ट्रः ।
चापापहारे भुजवेगपङ्के
शरोर्मिमाले सुमहाहवौघे ।
न रामपातालमुखेऽतिघोरे
प्रस्कन्दितुं राक्षसराज युक्तम् ।
प्रसीद लङ्केश्वर राक्षसेन्द्र
लङ्कां प्रसन्नो भव साधु गच्छ ।
त्वं स्वेषु दारेषु रमस्व नित्यं
रामः सभार्यो रमतां वनेषु ।
एवमुक्तो दशग्रीवो मारीचेन स रावणः ।
न्यवर्तत पुरीं लङ्कां विवेश च गृहोत्तमम् ।

Colophon

## 11

Before Sarga 3. 40, Ś1 Ñ V1 B1.3.4 D2.5.7 ins.; while M2 ins. l. 5–49 before 3.40.1 and l. 50–93 after 3.40.3 :

भूय एव तु मारीचो रावणं राक्षसेश्वरम् ।
धर्मार्थसहितं पथ्यमिदं वचनमब्रवीत् ।

गत्वा ( for प्राप्य ). Dt1 D6 स दूरे चाश्रमं गत्वा ( for the prior half ). —( l. 73 ) Note hiatus between the two halves. —G3 damaged for l. 74–75. —( l. 74 ) Dg1 reads from वाचा up to अब्रवीत् in marg. —( l. 75 ) D6 कच्चित्; T2 कश्चित् ( for कच्चित् ). G2 सकुशलं. M2 लंकायां ( for लोकानां ). D4 T1.2 G1 M2 Cr.m.g राक्षसेश्वर ( for °साधिप ). —( l. 76 ) Dt1 D6 T1 Ct नाधिजाने ( for नाथ जाने ). D4 शीघ्रम् ( for तूर्णम् ). Dm1 D4.8 T3 G1.3 उपागतः. ❀ Ck : आशङ्के नाधिजाने त्वमिति प्राचीनः पाठः । भयमाशङ्के । क्षेमं नाधि( धि )जाने नावगच्छामीत्यर्थः. ❀ —( l. 79 ) M2 तेन ( for तात ). Dt1 D6 -कारिणा ( for -कर्मणा ). —( l. 81 ) T2 M1 अस्य मे; M2.3 तदस्य ( for तस्य मे ). T2 G1 M1 साहाय्यं ( for साचिव्यं ). —( l. 83 ) Dg1 Dm1 D8 T3 G3 M1 Ct सा सीता ( by transp. ); Dt1 D6 वा सीता ( for सीता सा ). —( l. 84 ) Dg1 नंदंति. Dg1 D4.6 G2.3 M2.3 Cmp.g.k.tp निंदितः; Cm.t as above ( for नन्दितः ). —( l. 85 ) T3 M1 ब्रवीषि ( for °हि ). —( l. 86 ) M3 अर्हति ( for इच्छति ). Dm1 D8 G3 रक्षोलोकस्य कः शृंगं छेत्तुमिच्छति सांप्रतं. —( l. 87 ) Dg1 कश्चित्; D6 पश्चात्; T G2 M1 कश्च ( for यश्च ). T1.2 M1 स हि; M2.3 स्वयं ( for स च ). Dg1 Dm1 D8 T3 G2.3 न संशयः; T1 M2 Ck.t असंशयं. —( l. 88 ) M2.3 [ इ ]च्छसि ( for °ति ). —( l. 89 ) Dg1 Cg तेन; D4 Cgp केन ( for [ अ ]नेन ). Dg1 M1 [ अ ]पि; G2 त्वं ( for [ अ ]सि ). —( l. 92 ) G2 M1 तेजोमयः. M2.3 संयति( M3 °त ) दोर्. —( l. 93 ) Dm1 D8 T2 M1 उद्वीक्षितुं; T1 अवेक्षितुं ( for उदी° ). G1 तेन ( for नेह ). —( l. 94 ) Dg1 reads राघव- in marg. —( l. 95 ) Dt1 D6.8 Cv.t रणांतः- ( for °न्त- ). T3 -स्थित- ( for -स्थिति- ). T2 -संधिवाध्यो. —( l. 96 ) D4 M3 -गणहा ( for -मृगहा ). —( l. 97 ) Dt1 D6 T2 शक्यः; T3 G शक्तः ( for युक्तः ). —( l. 99 ) Dg1 G2 Cv.m.g चापावहारे; T3 °पहाने ( for °पहारे ). D4 भुजवेगतोये; T2 °नागे ( for °पङ्के ). ❀ Cv : भुजवेगपाशे । पाशो वरुणपाशः । टाके इति केचित् । टाक आवर्त्तः । समानार्थानि गम्यन्ते ढाकावर्त्तजलभ्रमाः । तोये इत्यन्ये पठन्ति. ❀ —( l. 100 ) G1 शरोर्मिजाले; G2 शिरोर्मिमाले. D4 सुमहामहौघे; Cm सुमहावलौघे; Cmp ( also as above ) सुमहाहवौघे. T3 पराक्रमाक्रांतमहाजलौघे. —After l. 102, Dt1 D6 read l. 107–108. —( l. 104 ) G1 गच्छ साधो. —( l. 105 ) M2 राजन् ( for नित्यं ). —After l. 106, Dm1 D8 read colophon. —( l. 108 ) Dm1 D8 G1.3 M1 प्रविवेश ( for विवेश च ). T1.2 M2 पुरोत्तमं ( for गृहोत्तमम् ).

Colophon. —*Sarga no.* ( figures, words or both ) : Dg1 Dt1 Dm1 D4.6.8 T G M1 31; M2.3 32. —After colophon, G concludes with श्रीरामाय नमः.

## 11

[ ( l. 1 ) Ñ2 D5.7 हि ( for तु ). Ś1 Ñ1 D2 रावणं वाक्यमब्रवीत् ( for the post. half ). —Ś1 Ñ1 D2 om. l. 2. —( l. 2 ) V1 -[ अ ]नु- ( for -[ अ ]र्थ- ). D7 वाक्यम् ( for पथ्यम् ). D5 वचनं * * मब्रवीत् ( for the post. half ). —( l. 3 ) Ś1 D2 वक्तव्यस्त्वं मया किल ( for the post. half ). —( l. 4 ) V1 तथा ( for यथा ). —For l. 4, Ś1 Ñ1 D3 subst. :

आत्मनश्च हितं कार्यं तव चैव न संशयः ।

आकेशग्रहणाद्राजन्यतितव्यं मया तव।
यथा ते न विनाशः स्याद्राघवान्मम चैव हि।
पुरस्तादेव रामस्य गुणाः संकीर्तितास्तव।
भूय एव तु वक्ष्यामि गुणांस्तस्य महात्मनः।
तस्य कर्म निबोध त्वं यत्सुरैरपि दुष्करम्।
सत्यधर्मरुचेर्दाराच्च त्वं हिंसितुमर्हसि।
हितमुक्तं मया वाक्यं न चैतत्त्यक्तुमर्हसि।
जनस्थानं वशं कृत्वा विराधं बलिनं तथा।
निहत्य विजनेऽरण्ये रमते लक्ष्मणाग्रजः।
तस्य दारांस्तु वीरस्य निकृत्या हरतस्तव।
विनाशमनुपश्यामि नचिरादात्मनस्तथा।
व्यतिक्रमं किंचिदन्यं मर्षयेत्स हि राघवः।
सतां वृत्तमनुस्मृत्य न तु दारप्रधर्षणम्।
सर्वस्वहरणाच्चैतत्कर्मातीव जुगुप्सितम्।
स्वान्प्राणान्प्राणिनो यत्र त्यक्त्वा कुर्वन्ति विक्रमम्।
स रामो दारहरणाद्विकृतस्तेऽन्तको भवेत्।
तदनागतमेवात्र बोद्धुमर्हसि कारणम्।
कामवेगादमर्षाच्च प्रकृत्या दृढविक्रमः।
संतप्यमानस्तेजस्वी समुद्रमपि शोषयेत्।
तं शत्रुभिरनासाद्यमासाद्य न भविष्यसि।
यदि मेऽद्य मतादन्यत्स्वमतं रोचयिष्यसि।
सोऽहमस्मिन्समारम्भे रामदाराभिमर्शने।
विमृशन्नानुपश्यामि सुनीतस्य कलामपि।
यदि वाप्यपनेष्यामि मृगरूपेण राघवम्।
तथाप्यशक्या वैदेही त्वया स्प्रष्टुं निशाचर।
अपनीते मया रामे जीवत्यपि च लक्ष्मणे।

---

[ Ñ1 राजेन्द्र ( for कार्यं ). ]

—Then cont. :

धर्मं पुरस्कृत्य मया कार्यं हितचिकीर्षुणा।
न कामात्मतया धर्मं परित्यक्तुमिहार्हसि।

[(l. 2) Ñ1 न कामात्सत्क्रियां वीर ( for the prior half ). ]

—(l. 5) V1 संकीर्णितास्. Ñ1 M2 ( *sec. m.* ) मया ( for तव ). Ś1 D2 गुणास्ते कीर्तिता मया ( for the post. half ). —(l. 6) D5.7 हि; M2 च ( for तु ). Ś1 धर्मं; D2 भयं; M2 भयात् ( for गुणांस् ). —V1 om. l. 7. —(l. 7) Ś1 धर्मं; D2 वैवं ( for कर्म ). Ñ1 निबो* * ( illeg. ); D5 विबोध त्वं. Ñ2 D5.7 देवैरपि सुदुष्करं ( for the post. half ). —Ñ1 D2 M2 read l. 8 before l. 5. —(l. 8) M2 अद्य ( for सत्य- ). Ñ2 D5.7 -धर्मरतेर्; D2 -धर्मभुवो ( for °रुचेर् ). D2 M2 आनेतुम् ( for हिंसितुम् ). —For l. 8, Ś1 subst. and reads before l. 5 :

संत्यज्य धर्मान्दुर्वादात्तत्त्वं त्वानेतुमर्हसि।

—G(ed.) om. (hapl.) l. 9. —(l. 9) B3 न च ते; B4 न चैव ( for न चैतत् ). Ñ2 न चैतद्वक्तुमर्हसि; D5.7 न वै (D7 चै) तत्त्यक्तुमिच्छसि ( for the post. half ). —(l. 10) B1 वशे ( for वशं ). —For l. 9–10, Ś1 Ñ1 D2 M2 subst. :

पुराध्युषितमस्माभिर्जनस्थानं वशीकृतम्।
विराधं च सुबाहुं च दुराधर्षौ महाबलौ।
तीक्ष्णदंष्ट्रौ महाकायौ बलिनौ राक्षसेश्वरौ।

[(l. 1) Ñ1 M2 चिरा- ( for पुरा ). —(l. 2) M2 महात्मानं ( for सुबाहुं च ). Ś1 विराधश्च सुबाहुश्च ( for the prior half ). M2 बलिनं राक्षसेश्वर ( for the post. half ). Ñ1 दूषणं त्रिशिरसं वै खरं वै राक्षसेश्वरं. —Ñ1 M2 om. l. 3. —(l. 3) Ś1 राक्षसेश्वर. ]

—(l. 11) Ś1 विजये ( for °जने ). M2 विहत्य दंडकारण्ये ( for the prior half ). M2 वसते ( for रमते ). D2 -[ अ ]नुजः ( for -[ अ ]ग्रजः ). —(l. 12) V1 सीतां ( for दारान् ). Ś1 Ñ B4 D2.5.7 M2 उदारस्य; V1 नृवीरस्य ( for तु वीरस्य ). M2 किं च्छद्मं ( for निकृत्या ). —(l. 13) Ś1 अत्र; B3 ननु ( for अनु- ). —(l. 14) D5.7 कंचिदन्यं. —For l. 14, Ś1 Ñ1 D2 M2 subst. :

मर्षयेन्नहि काकुत्स्थः किंचिदन्यद्व्यतिक्रमम्।

[ Ñ1 M2 मर्षयेदपि. D2 कंचिद् ( for किं° ). Ñ1 M2 अन्यं ( for अन्यद् ). ]

—(l. 15) Ś1 D2 धर्मम्; B4 वृत्तिम् ( for वृत्तम् ). —(l. 16) Ś1 Ñ2 B4 D2.5.7 -हरणादेतत्; Ñ1 -हरणात्तेन; M2 -हरणाचैन ( for °च्चैतत् ). Ś1 एवं कर्म; D2 M2 कर्म वीर- ( for कर्मातीव ). Ñ1 कर्म लोकविगर्हितं ( for the post. half ). —(l. 17) Ś1 स्वप्राणान्. Ś1 D2 प्राणिनो ह्यत्र; Ñ1 प्राणतोऽप्यत्र; M2 प्राणिनोऽन्यत्र. Ś1 D2 हित्वा ( for त्यक्त्वा ). —(l. 18) Ś1 निकृतस्ते रिपुर्; D2 निकृतस्त्वंतकृद्; M2 निकृत्तन्तेतुको (sic). —After l. 18, Ñ1 ins. :

न शत्रुं च रणे प्राप्य न भविष्यसि रावण।
यदि मह्यं म*दन्य*मतं योजयिष्यसि।

—(l. 19) Ś1 तदन्वागतम्; B4 D2 तदानागतम्. G(ed.) एवेदं ( for एवात्र ). Ś1 D2 रावण ( for कारणम् ). B3 ( before corr. मुक्तमर्हसि कारणं ) स्वकार्यं बोद्धुमर्हसि ( for the post. half ). —(l. 20) Ś1 D2 कामाद्वेषाद्; B3 °वेदाद् ( for कामवेगाद् ). —(l. 21) Ś1 स तप्यमानस्; B4 संवर्धमानस्; M2 स बुद्धिमांश्च ( for संतप्य° ). —B1 om. l. 22–23. —(l. 22) M2 अनाधृष्यम् ( for अनासाद्यम् ). Ñ1 शुक्रं * म * * * * ( illeg. ) ( for the prior half ). —Ś1 Ñ1 B1 D2 M2 om. (hapl.) l. 23. —(l. 23) V1 मतादन्यं ( for मतादन्यद् ). V1 सुमतं ( for स्वमतं ). —(l. 24) Ś1 D2 न चास्मिन्स मतिं कुर्याद् ( D2 कांचिद् ) ( for the prior half ). —Ñ2 B1.3.4 D5.7 transp. the post. halves of l. 24 and 25. V1 transp. the post. halves of l. 24 and 25 and then om. (hapl.) from रामदारा in l. 24 up to नेष्यामि in l. 26. —(l. 25) Ś1 V1 B1.3 विमृष्यन्; Ñ2 B4 D5.7 विमृषन्. Ś1 D2 न तु; B1.3 नाभि- ( for नानु- ). Ś1 रामदारानुधर्षणे; B3 °भिमर्षणे; D2 °नुदर्शने; M2 °विमर्शने ( for the post. half ). —(l. 26) Ñ1 M2 च ( for वा ). —(l. 27) Ś1 D2

नैव शक्या त्वया सीता हर्तुं रावण कर्हिचित् ।
अथवा रहितां ताभ्यां कथंचिदुपलप्स्यसे ।
ब्रह्मलोकगतस्यापि न ते स्थानं भविष्यति ।
अवाप्य तु वरारोहां सीतां सुरसुतोपमाम् ।
त्रैलोक्यमपि दुष्प्रापं प्राप्तमित्यवधारय ।
अमन्त्रयित्वा सचिवैर्योऽर्थं कृच्छ्रं नृपश्चरेत् ।
न स तिष्ठेच्चिरं राज्ये पुष्करे सलिलं यथा ।
सोऽहं विवर्जितं सद्भिरपथ्यं मार्गमञ्जसा ।
नानुवर्तितुमिच्छामि स्मरन्प्रकृतिमात्मनः ।
वध्यतो हि ममैकस्य दुःखं तव प्रयोजनम् ।
यदि केवलमेतद्धि कार्यस्य निधनं भवेत् ।
अनयेनापि मां हत्वा त्वमितो राक्षसान्प्रति ।
प्रतियाहि स्वमावासमकृत्वा रामकिल्बिषम् ।
उच्यमानोऽसकृद्वाक्यं न गृह्णीषे रणप्रिय ।
किं करिष्यामि मन्दात्मा करिष्यामि तव प्रियम् ।
उपस्थितविनाशोऽसि ध्रुवं त्वं राक्षसेश्वर ।
कार्यं वा यदि वाकार्यं कृतमेवेच्छति प्रभुः ।
इत्येवमुक्तः स निशाचरेश्वरः
प्रहृष्टरूपस्तमुवाच रावणः ।
विनिन्द्यमानस्तु नराधिपात्मजं
विमोहितः कालवशं गतस्तदा ।

Colophon

मारीचस्य वचः श्रुत्वा करिष्यामीति राक्षसः ।
रावणः प्रहसन्वाक्यमिदं मारीचमब्रवीत् ।
हतराज्यो हतधनो मित्रहीनो वनेचरः ।
किं करिष्यति काकुत्स्थः शक्रतुल्यबलोऽपि सन् ।
आत्मनश्च बलज्ञस्त्वं मम चैव न संशयः ।
भक्ष्यभूतो यदा रामः किं त्वमुद्विजसे तदा ।

प्राप्तुं ( for हर्तुं ). —( l. 28 ) V1 आनीते ( subm. ) ( for अपनीते ). Ś1 D2 हि रामे च ( D2 °मेपि ); Ñ1 तु रामे वै; B1 त्वया रामे ( for मया रामे ). M2 अपि नीते च रामे वै ( for the prior half ). Ś1 Ñ1 D2 जीवमाने च ( Ñ1 °नेपि ) लक्ष्मणे; M2 दीप्यमाने च लक्ष्मणे ( for the post. half ). —( l. 29 ) Ñ1 V1 B1.3 M2 transp. शक्या and सीता. Ś1 Ñ2 B4 D2.5.7 न च ( Ś1 B4 D2 नैव; D5 न तु ) सीता त्वया लभ्या ( Ñ2 D5.7 शक्या; B4 * * [ lacuna ] ) ( for the prior half ). D5 राक्षस ( for रावण ). Ś1 Ñ1 B3 D2 M2 लक्ष्मणोपि हि ( Ś1 D2 °णो ह्यपि ) तादृशः ( M2 दुर्जयः ) ( for the post. half ). —( l. 30 ) B4 अथ तां ( for अथवा ). B1 द्वाभ्यां ( for ताभ्यां ). D2 उपलप्स्यते; M2 उपलप्स्यसि ( for °लप्स्यसे ). —( l. 31 ) Ñ2 ब्रह्मलोकं ( for °लोक- ). Ś1 Ñ1 D2 M2 स्थानं तव न विद्यते ( for the post. half ). —Ñ1 om. l. 32–33. —( l. 32 ) Ś1 D2 अथवापि ( for अवाप्य तु ). Ś1 D2 सीतां सत्वाद्धरिष्यसि ( for the post. half ). —( l. 33 ) Ś1 हृदि चेत्युपधारय; B1.3 प्राप्तमित्युपधारय; D2 हतमित्युपधारय ( for the post. half ). —( l. 34 ) V1 M2 आमंत्रयित्वा. Ñ2 D5.7 कृत्स्नं ( for कृच्छ्रं ). Ś1 D2 यो राजा संप्रवर्तते; Ñ1 यत्कृत्स्नं तत्समाचर; V1 योनुकृच्छ्रं समाचरेत् ( for the post. half ). —( l. 35 ) V1 transp. न and स. M2 न तिष्ठति ( for न स तिष्ठेच् ). B4 कालं ( for राज्ये ). Ś1 Ñ1 D2 M2 सलिलं पुष्करे ( by transp. ) ( for पुष्करे सलिलं ). —( l. 36 ) Ś1 D2 विवक्षितं; Ñ2 D5.7 विगर्हितं ( for विवर्जितं ). Ś1 D2 पदयन्नात्मानमंजसा; Ñ1 अप * * र्गमंजसा ( for the post. half ). —( l. 37 ) Ś1 D2 पर- ( for स्मरन् ). —V1 om. l. 38–41. —( l. 38 ) Ś1 Ñ1 D2 वधतोपि. Ś1 Ñ1 D2 M2 न दुःखं तत्प्रयोजनात् ( Ś1 D2 °नं; Ñ1 °ने ); Ñ2 B1.3 D5 दुःखितं ( B3 °तं ) न प्रयोजनं ( Ñ2 °कं ) ( for the post. half ). —Ś1 om. l. 39. Ñ1 partially illeg. for l. 39–40. —( l. 39 ) Ñ2 B1.3 D2.5.7 M2 एतद्धै ( D2 °त्ते ) ( for एतद्धि ). D2 कार्यं न ( for कार्यस्य ). —( l. 40 ) Ś1 D2 नयेनापनयं हित्वा; M2 सुनयेनानयं हत्वा ( for the prior half ). Ś1 D2 M2 राक्षसेश्वर ( for °सान्प्रति ). —( l. 41 ) Ś1 D2 पुरीं लंकाम्; Ñ1 स्वमाश्वस्य; M2 स्वमावासम् ( for स्वमावासम् ). Ñ2 B1.3.4 D2.5.7 अगत्वा ( for अकृत्वा ). —( l. 42 ) D5 वाच्यं ( for वाक्यं ). Ś1 [ ऽ ]पि मद्वाक्यं; D2 [ ऽ ]सि सद्वाक्यं ( for ऽसकृद्वाक्यं ). V1 उच्यमानं सुहृद्वाक्यं ( for the prior half ). Ś1 D2 दशानन; Ñ2 M2 रणे प्रिय; V1 B1 रणप्रियः ( for रणप्रिय ). —M2 om. l. 43. —Ś1 D2 om. l. 44. —( l. 44 ) V1 M2 -विनाशोहं ( M2 °शो हि ) ( for °शोऽसि ). M2 ध्रुवमेष न संशयः ( for the post. half ). —For l. 44, Ñ1 subst. :

उपस्थितो विनाशोऽयं ध्रुवं तव न संशयः ।

—( l. 45 ) B3 om. first वा ( subm. ). M2 कार्यं वा यदि वाकार्यं ( for the prior half ). V1 M2 प्रियम्; B1 नित्यम्; B3 कृत्यम् ( for कृतम् ). Ñ1 * * * * * * प्रभो ( for the post. half ). —For l. 45, Ś1 D2 subst. :

अकार्यं यदि वा कार्यं प्रियमिच्छसि चेत्प्रभो ।

—Ś1 Ñ1 V1 B1 D2 M2 om. l. 46–49. —( l. 49 ) D5 विमोहितं. —After l. 49, Ñ2 B3.4 D5.7 ins. while Ś1 Ñ1 V1 B1 D2 ins. after l. 45 ( owing to om. ) an additional Colophon.

[ *Sarga name* : Ś1 Ñ1 B3 D2 मारीचवाक्यं; Ñ2 D5.7 सीताहरणव्यवसायः; V1 सीतापहरणे मारीचाभ्युपपत्तिः; B1.4 सीताहरणव्यवसाये मारीचा( B4 °चवाक्या )भ्युपपत्तिः. —*Sarga no.* ( figures, words or both ) : Ś1 B1.3 D2 om.; Ñ1 illeg.; Ñ2 D5.7 47; V1 46; B4 49 ].

—( l. 50 ) Ś1 D2 च ( D2 तु ) तच्छ्रुत्वा; Ñ1 M2 तदा श्रुत्वा ( for वचः श्रुत्वा ). Ñ2 B1.4 D5 करिष्य इति ( for करिष्यामीति ). Ś1 D2 वै वचः; Ñ1 M2 तद्वचः; V1 रावणः ( for राक्षसः ). —( l. 51 ) V1 राक्षसः ( for रावणः ). Ś1 D2 प्रीतिमद् ( for प्रहसन् ). Ś1 Ñ1 D2 M2 मारीचमिदम् ( by transp. ); Ñ2 V1 इदं वचनम्. —For l. 52, Ś1 D2 subst. :

रामो राज्यात्परिभ्रष्टो मन्त्रहीनो वनेचरः ।

—( l. 53 ) Ś1 D2 मारीच ( for काकुत्स्थः ). M2 -पराक्रमः ( for -बलोऽपि सन् ). —Ś1 D2 om. l. 54. —( l. 55 ) Ś1 D2 स वै; Ñ1 हि ते ( for यदा ). M2 भक्षभूताद्धि नो रामात् ( for the prior

बलं मे सागरप्रख्यमैश्वर्यं चानुवेक्ष्य मे ।
कथं रामाद्विहीनार्थाद्भयं मारीच पश्यसि ।
राज्यभ्रष्टस्य दीनस्य बुद्ध्या राज्यश्रिया तथा ।
हीनस्य चाप्यमित्रस्य मानुषस्याल्पतेजसः ।
अगतिर्या तु मर्त्यानां रक्षसां विहिता च सा ।
उत्पतिष्यामि वैदेहीं समादाय विहायसा ।
मयि रामः समुद्रस्य परं पारं समाश्रिते ।
किं करिष्यति मूर्खोऽसौ कुर्वन्नपि यथाबलम् ।
सुराश्चासुरसंघाश्च न मे प्रतिबला युधि ।
त्रयाणामपि लोकानामलमस्मि निवारणे ।
मया विक्रम्य शक्रोऽपि सत्तैरावणवाहनः ।
स वज्रपाणिर्निर्भग्नः समस्तैस्त्रिदशैः सह ।
भ्राता मे धनदश्चैव यमोऽथ वरुणस्तथा ।
सर्वे च पृथिवीपाला अवशाः स्थापिता वशे ।
त्रैलोक्यं निर्जितं येन स्थापितं च मया वशे ।
मच्छासनावघुष्टश्च स बिभेति कथं भवान् ।
हरः संक्रीडमानश्च उमया सह पर्वते ।
भुजाभ्यामुद्धृतो वीर्यात्तेन तुष्टोऽभवद्भवः ।
चतुर्युगपरावृत्त्या गतास्तु पञ्च पञ्च च ।
भुञ्जानस्य हि लोकांस्त्रीन्न मे प्रतिबलं क्वचित् ।
दृश्यते दिवि देवेषु यक्षलोकेऽथवा पुनः ।
रसातले वा नागेषु का शङ्का मानुषेषु मे ।
गृहीत्वा मैथिलीं चाहं पथानेन विहायसा ।
लङ्कामभिगमिष्यामि निमेषेणैव सत्वरः ।

half). Ñ1 B4 कथन् (for किं त्वम्). Ś1 D2 M2 [अ]नघ; B1 तथा (for तदा). —V1 om. l. 56–59. —(l. 56) Ñ2 D5.7 चान्ववेक्ष्यसे; B4 चानुवेक्षसे (for चानुवेक्ष्य मे). —For l. 56, Ś1 Ñ1 B1 D2 subst.:

बलमारभतां संख्ये ऐश्वर्यं च निरीक्ष्य माम् ।

[B1 बलसारवतो (for °मारभतां). Ñ1 मुख्यम्; B1 राज्यम् (for संख्ये). —Note hiatus between the two halves. Ś1 च निरीक्षणे; Ñ1 वां च वे * तत्; B1 चानुरक्षणे (for च निरीक्ष्य माम्).];
while M2 subst.:

कस्मै चारभतामव्ययैश्वर्यं प्राप्य बुध्यसे ।

—(l. 57) B1 सर्वतोऽस्मद्विहीनान्यद् (for the prior half). G(ed.) गच्छसि (for पश्यसि). —(l. 58) Ś1 B4 D5.7 हीनस्य (for दीनस्य). Ñ2 राज्यतुष्टस्य हीनस्य (for the prior half). B1 राजश्रियो (sic) (for राज्यश्रिया). Ś1 D2 मारीच त्वं बिभेषि किं (for the post. half). —(l. 59) Ś1 Ñ1 M2 हीनसाधनमित्रस्य; Ñ2 B4 D5.7 दीनस्य धनहीनस्य; D2 हीनस्य वनमित्रस्य (for the prior half). Ś1 D2 -मेधसः (for -तेजसः). B4 मानुषं चाल्पचेतसः (for the post. half). —(l. 60) Ś1 Ñ1 M2 अगतिस्तत्र; D2 अगतिस्त्वत्र (for अगतिर्या तु). Ś1 D2 गतिः; Ñ1 B4 च या; V1 तु सा; B1.3 M2 तु या (for च सा). —(l. 61) Ñ2 B3.4 D5 तामादाय (for समा°). —For l. 61, Ś1 Ñ1 D2 M2 subst.:

मैथिलीमहमादाय उत्पतिष्ये विहायसा ।

[Note hiatus. Ñ1 सहसा (for अहम्).]
—(l. 62) Ś1 D2 प्रयत्नादप्यसौ रामः (for the prior half). B4 पारे (for पारं). Ś1 D2 समाश्रितः (D2 °तां) (for समाश्रिते). —For l. 62, Ñ1 subst.:

प्रयत्नाद * चेद्रामः परमं यत्नमास्थितः ।;

while M2 subst.:

प्रयत्नादपि चेद्रामः परमं कोपमास्थितः ।

—(l. 63) D7 करिष्यसि (sic). Ś1 D2 लंकायां; Ñ1 वेम *; V1 मर्त्योऽसौ; M1 मे मूर्खो (for मूर्खोऽसौ). Ś1 D2 पतन्नपि; Ñ1 गर्जन्नपि; M2 वर्तन्नपि (for कुर्वन्नपि). Ñ1 यथाबलः. —(l. 64) Ñ1 न मां; Ñ2 राम (for न मे). V1 प्रतिबलो. Ñ1 M2 न मे (Ñ1 मां) प्रतिमुखा बले (for the post. half). —(l. 65) Ñ2 बलमस्मिन्; D2 बलमस्ति (for अलमस्मि). —(l. 66) B1 मयि विक्रम्य. Ś1 Ñ1 D2 M2 मत्तैरावण(M2 °त)मास्थि(Ś1 °श्रि)तः (for the post. half). —(l. 67) Ñ1 स व * पि हि; V1 स वज्रपाणो (for स वज्रपाणिर्). B3 -पाणिर्निर्भग्नः. Ś1 D2 M2 सवज्रः साशनिर्भग्नः (for the prior half). Ñ1 वृतः; V1 D5 अपि (for सह). —(l. 68) Ś1 D2 [s]पि (for ऽथ). Ñ1 ** (illeg.) चैव वियोजितः (for the post. half). —(l. 69) Ñ1 [s]पि (for च). V1 पृथिवीपालान्; B3 प्रतिपाला (subm.) (for पृथिवी°). Ñ1 ह्यवशाः (for अवशाः). Ñ2 B1.3.4 रणे (for वशे). M2 स्थापिता ह्यवशा वशे (for the post. half). —(l. 70) Ñ2 D5.7 विजितं (for निर्जितं). Ś1 D2 कृत्स्नं; Ñ1 M2 चैव; V1 तेन (for येन). Ñ1 B4 वशे मया (by transp.); M2 मया ** (lacuna) (for मया वशे). Ś1 D2 वशे च स्थापितं मया (for the post. half). —(l. 71) Ñ1 V1 D2 तु (for च). Ś1 मच्छासनावघुष्टंतु; D5.7 मच्छा(D5 °ला)शनानुघुष्टश्च (for the prior half). Ś1 Ñ1 बिभेति स (by transp.) (for स बिभेति). —For l. 71, M2 subst.:

मच्छाशनानघुष्टं च स कथं बिभ्यते भवान् ।

—(l. 72) Ś1 Ñ1 D2 M2 शंकरः क्रीडमानश्च (for the prior half). —Note hiatus between the two halves. —(l. 73) D5 उद्धतो (for उद्धृतो). Ñ1 कैलासे विधृतो वीर्यात् (for the prior half). V1 हरः (for भवः). Ś1 D2 न च त्रस्तोऽभवं तदा (for the post. half). —After l. 73, Ñ2 B1 D5.7 ins., while B3 (marg.) ins. after l. 59:

यत्र मे देवदेवेन ईश्वरेण महात्मना ।
रावणेति कृतं नाम साहाय्यं कुरु मा चिरम् ।

[(l. 1) B3 om. मे (subm.). D7 om. देव. —(l. 2) B3.4 मा मन्युं (B3 शोकं) कुरु मारीच (for the post. half).]
—Ś1 Ñ1 D2 M2 om. l. 74–77. B1 om. l. 74. —(l. 74) B3 -परावृत्ता; B4 -परावृत्तीर्. Ñ2 B4 D5 नव पंच (for पञ्च पञ्च). V1 गताश्च नव पंच च (for the post. half). —(l. 75) Ñ2 V1 तु; B4 च (for हि). Ñ2 B4 D5.7 प्रतिबलः (for °बलं). —(l. 76) V1 लोकेषु (for देवेषु). Ñ2 V1 D5.7 यक्षलोकेषु वा पुनः (for the post. half). —(l. 77) Ñ2 D5.7 रसातलेषु

सागरेण परिक्षिप्तां सर्वत: शतयोजनात् ।
लङ्कां गन्तुं कुत: शक्तिरपि स्वप्नमनोरथै: ।
मायावी त्वं समर्थश्च गतियुक्तोऽथ बुद्धिमान् ।
प्रलोभयित्वा वैदेहीं क्षिप्रं चान्तर्हितो भव ।
ममैतद्वचनं श्रुत्वा मोहयित्वा च राघवम् ।
मामेवागच्छ भद्रं ते गच्छाव: सहितौ पुरीम् ।
सीतामवाप्य तां क्षिप्रं वञ्चयित्वा च राघवम् ।
विस्रब्धं विक्रमिष्याव: कृतार्थेनान्तरात्मना ।
एवं स सान्त्वितस्तेन मारीचो रावणेन वै ।
विनि:श्वसन्मुहुश्चैव दृष्टदु:खश्च राक्षस: ।
तमनर्थं कृष्यमाणमिन्द्रियाणां वशानुगम् ।
अशक्नुवन्वारयितुं मारीचोऽप्यन्वपद्यत ।
उक्त्वातिपरिदु:खार्तस्त्यक्त्वा जीवितमात्मन: ।
प्रतस्थे नचिरादेव दशग्रीवसहायवान् ।

Colophon

## 12

Before Sarga 55, Ś1 Ñ2 B1.3.4 Dt1 D1-3.5-7 ins.; V1 ins. before 3.53 :

प्रवेशितायां सीतायां लङ्कां प्रति पितामह: ।
ब्रह्मा प्रोवाच देवेन्द्रं परितुष्ट: शतक्रतुम् ।
त्रैलोक्यस्य हितार्थाय रक्षसामहिताय च ।
लङ्कां प्रवेशिता सीता रावणेन दुरात्मना ।
पतिव्रता महाभागा नित्यं चैव सुखोपिता ।
अपश्यन्ती च भर्तारं पश्यन्ती रावणालयम् ।
राक्षसीभिस्तर्ज्यमाना भर्तृशोकेन चाकुला ।
निविष्टा च पुरी लङ्का द्वीपे नदनदीपते: ।
कथं ज्ञास्यति मां राम इहस्थां धर्मचारिणीम् ।

---

(for °तले वा). —(l. 78) Ñ2 B1.4 D5 आदाय (for गृहीत्वा). Ś1 Ñ1 D2 M2 वैहायसेन पश्यामि (D2 यास्यामि; M2 [*sec. m.*] यास्यावो) (for the prior half). M2 om. from the post. half up to the prior half of l. 79. Ñ2 B1.4 D5 पथा येन (for पथानेन). Ś1 Ñ1 D2 सीतामादाय राक्षस (for the post. half). —(l. 79) Ñ1 अभिपतिष्यामि. M2 सत्वरं (for सत्वर:). —For l. 79, Ś1 D2 subst. :

लङ्कां चापि (D2 °धि) प्रवेक्ष्यामि निमेषेण कृतत्वर: !

—(l. 80) M2 समंताच् (for सर्वत:). Ñ2 V1 B1.4 D5.7 शतयोजनां. Ś1 D2 त्रिकूटशिखरे स्थितां (for the post. half). —(l. 81) Ñ1 यातुं (for गन्तुं). Ś1 D2 कस्य (for कुत:). V1 लंकागत: कुत: शक्तिर् (for the prior half). Ś1 D2 स्वप्नेपि स्व-(D2 सु-) (for अपि स्वप्न-). —Ś1 B3 om. l. 82-83. —(l. 82) M2 मयापि (for मायावी). D2 कृतिशक्तश्च; M2 कृतियुक्तोथ (for गतियुक्तोऽथ). Ñ1 मायया च समर्थस्त्वं नीतियुद्धे च राक्षस. —(l. 83) Ñ2 V1 B1.4 D5 प्रलोभ्य चैव; D7 पूर्वं प्रलोभ्य (for प्रलोभयित्वा). Ñ1 B1 D2 M2 अं(B1 M2 त्वं)-तर्हितो (for चान्त°). —(l. 84) B4 कृत्वा (for श्रुत्वा). Ś1 Ñ1 D2 मयैवं(Ñ1 °तत्) संप्रधार्याशु; M2 मयैतत्संप्रकृत्याशु (for the prior half). D2.7 तु (for च). Ñ1 राघवौ (for राघवम्). —Ś1 om. (hapl.) l. 85-86. —(l. 85) M2 मयैव (for मामेव). Ñ1 स त्वमागच्छ. Ñ2 V1 B4 D5.7 यास्याव: (for गच्छाव:). Ñ1 M2 सह यास्यावहे पुरीं; D2 सह यास्याम्यहं त्वया (for the post. half). —(l. 86) Ñ1 विजने; B4 तां शीघ्रं; M2 भद्रं ते (for तां क्षिप्रं). D2 सीतां संप्राप्य मामेवं (for the prior half). Ñ1 राघवौ (for राघवम्). —(l. 87) D5 विश्रब्धं. Ñ1 V1 विक्रमिष्यामि(V1 °म:); Ñ2 D5.7 M2 विहरिष्याव: (M2 °मि). Ś1 D2 सुविशु(D2 °श्र)द्धो गमिष्यामि (for the prior half). M2 प्रहृष्टेन (for कृतार्थेन). —(l. 88) M2 स एवं (by transp.) (for एवं स). V1 शासितस्तेन (for सान्त्वितस्तेन). B4 M2 तु (for वै). —(l. 89) Ś1 D2 विनि:(D2 °नि)श्वस्य; B4 विनिश्वसन् (for विनि:श्वसन्). Ñ1 मुहुर्मुहुर्विनि:श्वस्य (for the prior half). Ñ2 D5.7 -दोषश्च (for -दु:खश्च). Ś1 Ñ1 D2 दृष्टदु:ख:(Ñ1 ° * *) स राघवात्; M2 दृष्टवीर्यश्च राघवे (for the post. half). —B1.3 om. l. 90-92. —(l. 90) V1 B4 क्लिश्यमानम् (for कृष्यमाणन्). —(l. 91) Ñ1 illeg. for the post. half. Ś1 ह्यभ्यपद्यत; V1 [ऽ]प्यनुपद्यत; B4 [ऽ]प्यनुवर्तत; D2 [ऽ]भ्यवपद्यत; M2 ह्यन्वपद्यत (for ऽप्यन्वपद्यत). —Thereafter, Ś1 D2 ins. 762*. —(l. 92) Ś1 उत्थाय (for उक्त्वाति-). Ñ1 M2 यु(Ñ1 *)क्तो ह्यतीव(Ñ1 °परि) दु:खार्तो; Ñ2 V1 B4 D5.7 युक्तो ह्यधुरि(V1 B4 °ध्वनि)युक्तार्थस् (for the prior half). —(l. 93) Ś1 D2 मनसा पूर्वं (for नचिरादेव). Ś1 रावणेन प्रणोदित:; D2 दशग्रीवेण नोदित: (for the post. half). —For l. 93, Ñ1 subst. :

प्रस्थितस्तत्र मारीचो दशग्रीवं प्रतापवान् ।

—After l. 93, B4 repeats l. 89-91.

Colophon. V1 B2.4 D5.7 M2 om. —*Sarga name*: Ś1 Ñ2 D2 रावणवाक्यं; Ñ1 मारीचरावणवाक्यं; B1 मारीचसांत्वनं. No Sarga number in any Ms.

## 12

(l. 1) B1 D2 लंकायां प्रपितामह: (for the post. half). V1 प्रवेशितायां लंकायां सीतायां प्रपितामह:. —(l. 2) Ś1 Dt1 D1-3.6 तदा (for ब्रह्मा). Ś1 Dt1 D2.6 परितुष्टं (for °तुष्ट:). —(l. 5) Ś1 Dt1 D1.2.6 सुखै(D1.2 °खे)धिता; V1 B1.3 सुखोचिता; D3 सुखे रता (for सुखोपिता). —(l. 6) Dt1 om. (hapl.) from च up to पश्यन्ती. B1 D2 अपश्यंतीव (for °श्यन्ती च). Ś1 Dt1 D2.3.6 राक्षसं(Ś1 Dt1 °सी) जनं; G(ed.) राक्षसानथ (for रावणालयम्). —(l. 7) Ś1 Dt1 D2.3.6 परिवृता; D1 सूर्यमाना (for तर्ज्यमाना). B3 व्याकुला; B4 चात्मना (for चाकुला). Ś1 Dt1 D1-3.6 भर्तृदर्शनलालसा; V1 भर्तृशोकपरायणा (for the post. half). —(l. 8) V1 प्रविष्टा; D2 निविष्टां (for निविष्टा). Dt1 D2.6 हि; D1 सा (for च). V1 Dt1 D2 पुरीं लंकां. Ś1 पुरि लंकायां; D3 [अ]भिपुरीं लंकां (for च पुरी लङ्का). Ś1 Dt1 D1-3.5.6 तीरे (for द्वीपे). —(l. 9) B1.3 ज्ञास्यसि (for °ति). Ś1 D2.3.6 तां

